**जिताहव** पु० जितः आहवो येन। जितकाशिनि हेम०।

**जितेन्द्रिय** त्रि० जितानि वशीकृतानीन्द्रियाणि येन। यथेष्टमिन्द्रियप्रचारप्रतिरोधिनि १वशीकृतेन्द्रिये "श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः। न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः" मनूक्ते हर्षविषादशून्ये २शान्ते जने। इन्द्रियजयश्च शौचकार्य्यः आत्मदर्शनयोग्यत्वे च हेतुः। यथोक्तं पात० सू० भा० "सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च" पात०सू०। "भवन्तीति वाक्यशेषः शुचेः सत्त्वशुद्धिस्ततः सौमनस्यं ततश्चैकाग्र्यं तत इन्द्रियजयस्ततश्चात्मदर्शनयोग्यत्वं बुद्धिसत्त्वस्य भवतीति। एतच्छौचस्थैर्य्यादधिगम्यत इति" भा०। २कामदुघवृक्षे पु० शब्दार्थचि०।

**जितु(त्त)म** मिथुनराशौ "क्रियतावुरि जितु(त्त)म कुलीर-लेय-पाथेय-यूकालीपाख्याः। तौक्षिकश्चाकोकेरो हृद्रोगश्चान्त्यभं चेत्थम्" ज्यो०त० मेषादिसंज्ञोक्तौ। अतिशयेन जित् जित्तम २अतिशयजययुक्ते त्रि०। [काञ्चनयपदार्थभेदे

**जित्या** स्त्री जि—क्यप्। हलभेदे कृष्टभूमिसमीकरणार्थे

**जित्वन्** त्रि० जि—क्वनिप्। जयशीले। ततः कर्णा०चतुरर्थ्यां फिञ्। जैत्वनायनि जित्वनोऽदूरदेशादौ।

**जित्वर** त्रि०जि—क्वरप्। जयशीले "सुराध्वरे चक्रजित्वरेण" "प्रस्थापयन्नुपायंस्त जित्वराणि" भट्टिः "करटीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम्" माघः। क्वरपः "टिड्ढाणञ्" पा० सूत्रे पाठात् स्त्रियां ङीप्। मुग्ध० मते क्वरप् पित्त्वात् ईप् इति भेदः। सा च २काशीपुर्य्यां त्रिका०।

**जिन** पु०जि—नक्। १बुद्धे अमरः २अर्हन्नामजैनभेदे ३विष्णौ च हेमच०। ४अतिवृद्धे उणा०। ५जित्वरे त्रि०मेदि०। तस्येदमण्। जैन जिनसम्बन्धिनि त्रि० "हस्तिना पीड्यमानोऽपि न गच्छेज्जैनमन्दिरम्"। तदीयमते च तच्च अर्हच्छब्दे ३८० पृ० दर्शितम्।

**जिनसद्मन्** न० ६त०। जिनस्य गृहे चैत्ये विहारे हेमच०।

**जिनेन्द्र** पु०जिनानामिन्द्रः जिन इन्द्र इव वा। १बुद्धे त्रिका०, २व्याकरणकारके मुनिभेदे च। स्वार्थे अण्। तत्रार्थे "पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः" कवि-कल्पद्रुमः।

**जिनेश्वर** पु० ६त०। बुद्धे हेमच०।

**जिम** भक्षे भ्वा० पर०सक०सेट्। जेमति अजेमीत्। ऋदित् जेमित्वा जान्त्वा जिमितः। "जेमनं लेह आहारः" अमरः

**जिरि** हिंसायां स्वा०पर०सक०सेट्। जिरिणोति अजिरायीत्। अयं वैदिकः।

**जिल्लिक** पु० दक्षिणस्थे देशभेदे, सोऽभिजनोऽस्य अण्। तस्य राजा वा अण्। जैल्लिक पित्रादिक्रमेण तद्देशवासिनि तद्भूपे च बहुषु तस्य लुक्। तद्देशवासिषु तद्भूपेषु च ब० व०। "जिल्लिकाः कुन्तलाश्चैव सौहृदा नलकाननाः" भा० स० ९अ०।

**जिव** प्रीणने भ्वा० पर० सक० सेट् इदित्। जिन्वति अजिन्वीत् जिजिन्व इदित्त्वात् नोपधालोपः जिन्व्यते। "भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः" ऋ० १।१६४।५१। "इन्द्रेण जिन्वितो मणिरागमत्" अथ० ८।२१।७। "दक्षिरसि चक्रस्य चयं जिन्व वषट्-प्रभृती" ताण्ड्य०ब्रा०१।८। "अपो रेतांसि जिन्वति" ऋ० ८।४४।१६। "यदा त्वं प्राण! जिन्वसि" ११।४।१४। इनौ च अक०। वेदे अस्य क्वचित् आत्म० "स जिन्वते जठरेषु प्रजज्ञिवान्" ऋ० ३।२।११। "जिन्वते वर्द्धते" भा०। वेदे नमध्यस्यैव प्रयोगात् यज्ञकल्पद्रुमे अन्त्यस्थवान्तस्थले तस्य निवेशनात् जिन्वतीति प्रयोग-दर्शनाच्च ओष्ठ्यत्वभ्रान्त्या मत्कृतशब्दस्तोममहानिधौ जिम्वतीति ओष्ठ्यान्ततया रूपप्रदर्शनं प्रामादिकमेव। कविकल्पद्रुमे अन्तस्थवान्तमध्ये पाठात् धिविधातोरिव न मध्यत्वस्योचितत्वात्।

**जिवाजिव** पुस्त्री जीवञ्जीव+पृषो०। चकोरखगे शब्दर० जातित्वात् स्त्रियां ङीष्।

**जिव्रि** पु०जॄ—रिक् रस्य वः। १समये २खगे च सि० कौ०।

**जिष** सेके भ्वा० पर० सक० सेट्। जेषति अजेषीत्। उदित् जेषित्वा जिष्ट्वा। जिष्टः।

**जिष्णु** पु० जि—ग्स्नु। १विष्णौ हेमच० २इन्द्रे ३अर्जुने च ३जेतरि त्रि० मेदि०। तत्रार्जुने जयशीले च। "यस्तमाहृदोपरिगतं समयकलद्युतिजिष्णु जिष्णुरधतोऽन्यवारणम्" "भुभुजश्च परलोकजिष्णवः" माघः "अहं दुरापो दुर्द्धर्षो दमनः पाकशासनिः। तेन देवमनुष्येषु जिष्णुर्नामाऽस्मि विश्रुतः" भा० वि० ४४अ०। इन्द्रे "जयं च जिष्णुश्चाभिलं जयतामिन्द्रमेदिनौ" अथ० ११।६।१८। विष्णौ "विष्णुर्विक्रमणाद्देवो जयनात् जिष्णुरुच्यते" भा०उ०६८ अ०। जिष्णु नामनिरुक्तौ।

**जिह्म** त्रि० हा—मन् द्वित्वादि आलोपश्च। १कुटिले २मन्दे ३तगर-वृक्षे पु० मेदि०। "वक्रिताबकुलौ जिह्मौ" अमरः।

लम्पयति प्रहृतो मूर्धे च जिह्वा [illegible] वाचम् । प्रगाढः प्रकर्षेण गाढो दाढ्यः । [illegible] जकारतालुमूर्तिः जकारतालुभ्यां मूर्धिवंश [illegible] । जिह्वा जलोन यातुरत्न [illegible] । [illegible] पितस्य यत-जिह्वोल्लासोऽयम् । [illegible] । उपजिह्विका-याम् । जिह्वापक्षवः [illegible] जिह्वासद्यस्य जातः जकारत्नयोनिः । [illegible] प्रमथ्यतेऽवा-युपजिह्विकेति । जिह्वापक्षवः जिह्वापालतिः भावप्र० । "[illegible] जिह्वारोगः प्रजायते" शातात० ।

जिह्वा[illegible] [illegible] यज्ञमियाकस्य च । खदिरवृक्षे राजनि० ।

जिह्वावत् पु० यजुर्वेदीयसंघातगतर्षिभेदे । "अथ वंश" इत्युपक्रमे । "जिह्वावतो बाध्योगाज्जिह्वावाँ बाध्योगः" शत०ब्रा०१४।८।४।२२। २जिह्वायुक्ते त्रि० स्त्रियां ङीप् ।

जिह्वास्वाद [illegible] जिह्वया स्वादः । लेहने (चाटा) हेमच० ।

जीति स्त्री जि–क्तिन् वेदे दीर्घः । जये "अजीतयेऽहतये पवस्व स्वस्तये" ऋ० ८।८६।४ । "अजीतये अजयाय" भा०। जीके तु ज्या–क्तिन् वयसाहानौ "यथः" इति पा० सम्प्रसारणस्य दीर्घः । २हानौ स्त्री ।

जीन त्रि० ज्या–क्त सम्प्रसा० दीर्घः । जीर्णे अमरः "जीन-कार्मुकवस्त्रादीन् पृथक् दद्यात् विशुद्धये" मनुः ।

जीमूत पु० जयति नभः, जीयतेऽनिलेन वा । जि–क्त । "जेमूट् चोदात्तः दीर्घश्च" । जीवनस्योदकस्य मूतं बन्धो यस्येति वा जीवनं जलं मूतं बद्धमनेन । मूङ् बन्धने कर्मणि क्तः पृषोदरादित्वात् साधु । ज्यानं जीर्णं ज्या–सं० क्विप्, जिया वयोहान्या मूतो बद्ध इति वा जीवनं मुञ्चति वा पृषो० । १पर्वते २मेघे ३मुस्तायां ४देवताड़वृक्षे च अमरः ५इन्द्रे [illegible] जीवकवृत्तायां च हेम०। मेघे "यथा जीमूत-शब्देन [illegible] मायोऽभिजायते" दुन्दुभिपूजामन्त्रः । "जीमू[illegible]रिन्द्रकोषः" किरा० । "जीमूतस्येव भवति [illegible] ६।७५।१ "प्रतिचरणविहद्वरेफाः [illegible] जीबालोदाद्यासप्तवादयः" वृ० र० [illegible] एवमादयभीरगणैः रचितो जीमूतवाक्य[illegible] । जीमूतक तैस्त्र्ये पु ।

जीमूतकूट पु० [illegible] मेघः कूटेऽस्य । पर्वते त्रिका० ।

जीमूतकेतु पु० विद्याधरपतौ राजभेदे जीमूतवाहन-पितरि । नागानन्दे दृश्यम् ।

जीमूतमूल पु०जीमूतस्य मुस्तकस्य मूलमिव मूलमस्य । यवा-शाकरत्ना० ।

जीमूतवाहन पु० जीमूतो मेघो वाहनमस्य । मेघवाहने १इन्द्रे शालिवाहनपुत्रे २नृपभेदे जिताष्टमीपद्धते दृश्यम् । जीमूतकेतोः विद्याधरस्य ३पुत्रे च तत्कथा नागानन्दे दृश्या ।

जीमूतवाहिन् पु० जीमूतं मेघवहिस्य वहति अहा गच्छति वह–णिनि । धूमे हेमच० । मेघानां धूमादेवा-विर्भावात् तस्य तथात्वम् ।

जीर पु०ज्या–रक् सं०प्र०दीर्घः । १जीरके, २खड्गे, ३अणौ च । मेदि०जोरी रक् ["] उणा०सौ०जु–रन्प्रत्ययः ईत्वादे-देशः ।४जयशीले ५क्षिप्रे च उज्ज्वल०जीरदानुः । "उत नः सुद्योत्मा जीराश्वः" ऋ०१।१४१।१२। "जीराश्वः क्षिप्राश्वः" भा०। संज्ञायां कन् । (जीर) ख्याते पदार्थे मेदिनि० । मदनपालनिघण्टौ तस्य त्रैविधता तद्भेदा गुणा-श्चोक्ता यथा "जीरकं दीर्घकं शुक्लमजाजीकणा-जीरकम् । जीरकं जरणं कृष्णं वर्णकाली सुगन्धिकम् । कालिका बाष्पिका कुञ्चिकारवी चोपकुञ्चिका । पृथ्वीका सुषवी पृथ्वी स्थूलजाप्युपकालिका । जीरकत्रितयं रूक्षं कटूष्णं दीपनं लघु । संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत् । चक्षुष्यं पवनाध्मानगुल्मच्छर्दि-बलासजित्" मदनपालः ।

जीरण पु० जीरक+पृषो० । जीरके राजनि० ।

जीरदानु पु०जीरं क्षिप्रं जयशीलं वा ददाति दा–नु ।१अव-शीलदाने, २क्षिप्रदातरि च "विद्यामेषं वृजनं जीरदा-नुम्" ऋ० १।१६६।१५ "जीरदानुं जयशीलदानम्" भा० "जीरदानूरेतो दध्यत्योषधीषु गर्भम्" ५।८३।१ "जीरदानुः क्षिप्रदानः" भा० ।

जीरि पु० जीर्यति जॄ–बा०रिक् । १मनुष्ये "रघन्ति जीरयो वनानि" ऋ०४।५।१।६ "जीर्यन्ति इति जीरयो मनुष्याः" भा० जॄ–अन्तर्भूतण्यर्थे रिक् । २जारके ३अभिभावके च त्रि० "प्रजीरयः सिञ्चते सध्र्यक् पृथक्" ऋ० २।१७।३ "जीरयो जरयितारः" भा०।

जीर्ण त्रि० जॄ–क्त ।१जरायुक्ते २पुरातने च अमरः "वासांसि जीर्णानि यथा विहाय" गीता । "जीर्णमन्न[illegible] प्रशस्य मद्यमानम्" चाणक्यः। २मेघ[illegible]नि० । ४उदराग्निना सम्यक्पाके त्रि० "अजीर्णे भेषजं वारि जीर्णे वारि बलप्रदम्" वैद्यकम् ।

जित्वाक्षि न० अव्य० : जिनाया राजद० परनि० वाक्षोर्यथ। अक्षिजिज्ञासायाम् ।

जित् त्रि० जि—क्विप् । जेतरि । "मारजित् लोकजित् जिनः" अमरः "स्वर्जिता यजेत" "विश्वजिता यजेत" श्रुतिः । "यजेत वाजपेयेन स्वर्जिता गोसवेन वा", मनुः

जित त्रि० जि—कर्मणि क्त । १पराजिते २वशीकृते । भावे क्त । ३जये न० ४अर्हदादि भेद । ५अर्हदुपासकभेदे पु० हेमच० ।

जितकाशि पु० जितः अभ्यासपटुतया इढ़ीकृतः काशिः मुष्टिर्येन । इढ़मुष्टौ योधभेदे नीलकण्ठः ।

जितकाशिन् त्रि० जितेन जयेन काशते प्रकाशते काश—णिनि । १जिताहवे, जयिनि हेमच० । "धनिवत्सो रथे यायो जितकाशी महाबलैः" हरिवं० १७७ अ० ।

जितक्रोध त्रि० जितः क्रोधो येन । १क्रोधशून्ये २विष्णौ पु० । "मनोहरो जितक्रोधो वीरबाहुर्विदारणः" विष्णुसं० "वेदमर्यादां स्थापयन् असुरान् हन्ति न तु कोपवशात्" भाष्योक्तेः तस्मासुरहननाय न क्रोधः किन्तु वेदमर्यादारक्षार्थं प्रवर्तेत न तत्र कोपयाक्षितेति बोध्यम् । जितमन्युरप्यत्रभयत्र । "अनलक्षपोऽनलश्रीर्जितमन्युर्भयापहः" विष्णुस० ।

जितनेमि पु० जिता नेमिरत्र । आश्वत्थदण्डे हेमच० ।

जितलोक त्रि० जितः आयत्तीकृतः कर्मादिद्वारा लोकः स्वर्गादिर्येन । इष्टापूर्तादिकर्मभिः आयत्तीकृतस्वर्गादिलोके धार्मिके "स एकः पितृणां जितलोकानामानन्दः अथ ये शतं पितृणां जितलोकानामानन्दः" शत० ब्रा० १४।७।१।३३। "पितृणां दक्षिणमार्गानुयायिनाम् श्राद्धपिण्डपितृयज्ञादिकर्मभिः पितृतोषणद्वारा जितो लोको यैस्ते तथा जिता लोका येनामिति जितलोकाः" भा० । २अभिभूतलोके त्रि० ।

जितवत् त्रि० जि+क्तवतु । १जितवति स्त्रियां ङीप् सा च उशीनरनृपस्य २कन्यायाम् । "अस्ति मे मानुषे लोके नरदेवात्मजा सखी । नाम्ना जितवती नाम रूपयौवनशालिनी । उशीनरस्य राजर्षेः वसवस्य धीमतः । दुहिता कथिता लोके मानुषे रूपसम्पदा" भा०आ०९९अ० ।

जितव्रत त्रि० जितमायत्तीकृतं व्रतं येन । १आयत्तीकृतव्रते २हविर्धानसुतभेदे पु० "हविर्धानाद्धविर्धानी विदुराप्त षट् सुतान् । बर्हिषदं गयं शुक्लं कृष्णं सत्यं जितव्रतम्" भाग० ४।२४।८।

जितश्रम पु० [illegible] १पराजितरिपुके रिपुजयकर्तरि । [illegible] पु० हेमच० ।

जिताक्षर [illegible] आयत्तीकृतानि अक्षराणि येन [illegible] [illegible] बहुरचनाशक्तियुक्ते ।

जितात्मन् त्रि० जितो वशीकृत आत्मा इन्द्रियं [illegible] येन । १जितेन्द्रिये । २आत्मभावाद्दैवे देवभेदे पु० [illegible] २०३।१पु० द्रष्टव्यम् ।

जितामित्र त्रि० जितः अमित्रो येन । १शत्रुपराजयकर्तरि २विष्णौ पु० च । [illegible] "अजो [illegible] जितामित्रः प्रमोदनः" विष्णुस० "जिता अमित्रा आभ्यन्तरा रागद्वेषादयो बाह्या रावणादयश्च येनासौ जितामित्रः" भा० ।

जितारि पु० जिता अरयो आभ्यन्तरा [illegible] बाह्याश्च रिपवो येन । १बुद्धे त्रिका० २सम्भवजिनपितरि हेमच० ३जितशत्रौ त्रि०। जयकारिणि ४कामादिरिपुजयकर्तरि च त्रि० ५अविक्षितो नृपस्य पुत्रभेदे पु० "अविक्षितः परिक्षित्तु शबलाश्च धीर्यवान् । आदिराजो विराजश्च शाल्मलिश्च महाबलः । उच्चैःश्रवा भद्रकारो जितारिश्चाष्टमः स्मृतः" भा० आ० ९४ अ० ।

जिताष्टमी स्त्री आश्विनकृष्णाष्टम्यां जीमूतवाहनपूजादावुपयुक्तायां जीमूताष्टम्यां तत्र कर्तव्यता जयरत्नाकरधि० भविष्योत्तरे "इषेमासस्यसिते पक्षे अष्टमी या तिथिर्भवेत् । पुत्रसौभाग्यदा स्त्रीणां ख्याता सा जीवपुत्रिका । शालिवाहनराजस्य पुत्रो जीमूतवाहनः । तस्यां पूज्यः स नारीभिः पुत्रसौभाग्यलिप्सया । प्रदोषसमये स्त्रीभिः पूज्यो जीमूतवाहनः । पुष्करिणीं विधायाथ प्राङ्गणे चतुरस्रिकाम्" । विष्णुधर्मोत्तरे [illegible] परेद्युर्वा प्रदोषे तत्र चाष्टमी । [illegible] तदा स्त्रीभिः राजा जीमूतवाहनः" [illegible] च यद्दिने प्रदोषव्यापिनी अष्टमी तत्रैव [illegible] उभयदिने चेत् परदिने त्रिसन्ध्यव्यापिनी [illegible] दिने प्रदोषाव्याप्तौ उदयगामिन्यां तत्र [illegible] "अष्टमी व्रतं चाश्वयुदिते [illegible] कृष्णाष्टमी चाश्विनकृष्णपक्षे । तत्रोदयं वै [illegible] रिमैव । तदा भवेज्जीवितपुत्रिका वा" इति अस्यामष्टम्यां स्त्रीभिर्न भोक्तव्यम् "आश्विनस्यासिताष्टम्यां याः स्त्रियोऽन्नं हि भुञ्जते । मृतवत्सा भवेत्तासां वैधव्यञ्च भवेद्ध्रुवम्" वचनात् ।

**जिताहव** पु० जितः आहवो रणो येन । जितशत्रौ हेम० ।

**जितेन्द्रिय** त्रि० जितानि वशीकृतानीन्द्रियाणि येन । यथेष्टमिन्द्रियप्रचारप्रतिरोधिनि १वशीकृतेन्द्रिये "श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः । न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः" मनूक्ते हर्षविषादशून्ये २शान्ते जने । इन्द्रियजयश्च मोक्षकार्य्यः आत्मदर्शनयोग्यत्वे च हेतुः। यथोक्तं पात० सू० भा० "सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च" पात०सू०। "भवन्तीति वाक्यशेषः शुचेः सत्त्वशुद्धिस्ततः सौमनस्यं तत ऐकाग्र्यं तत इन्द्रियजयस्ततश्चात्मदर्शनयोग्यत्वं बुद्धिसत्त्वस्य भवतीति । एतच्छौचस्थैर्य्यादधिगम्यत इति" भा०। २कामहृद्विवर्णे पु० शब्दार्थचि० ।

**जितु(त्त)म** मिथुनराशौ "क्रियतावुरि जितु(त्त)म कुलीरलेय-पाथेय-यूककौर्पाख्याः । तौक्षिककाकोकेरो हृद्रोगश्चान्त्यभं चेत्थम्" ज्यो०त० मेषादिसंज्ञोक्तौ । अतिशयेन जित् जित्तम २अतिशयजययुक्ते त्रि०। [काष्ठमयपदार्थभेदे

**जित्या** स्त्री जि-क्यप् । हलमूले लष्टभूमिसमीकरणार्थं

**जित्वन्** त्रि० जि-क्वनिप् । जयशीले । ततः कर्ण्णा०चतुरर्थ्यां फिञ् । जैत्वनायनि जित्वनोऽदूरदेशादौ ।

**जित्वर** त्रि०जि-क्वरप्। जयशीले "सुराध्वरे चचारजित्वरेण" "शत्रुणामुपायंसत जित्वराणि" भट्टिः "करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम्" माघः । क्वरपः टिड्ढाण जित्वादि" पा० सूत्रे पाठात् स्त्रियां ङीप् । मुग्ध० मते क्वरप् त्रित्वात् ईप् इति भेदः । सा च २काशीपूर्य्यां त्रिका० ।

**जिन** पु०जि-नक् । १बुद्धे अमरः २अर्हन्नामबौद्धभेदे ३विष्णौ च हेमच० । ४अतिवृद्धे उणा० । ५जित्वरे त्रि०मेदि० । ६ तस्येदमण् । जैन जिनसम्बन्धिनि त्रि० "हस्तिना पीड्यमानोऽपि न गच्छेज्जैनमन्दिरम्" । तदीयमते च तच्च अर्हच्छब्दे ३८२ पृ० दर्शितम् ।

**जिनसद्मन्** न० ६त० । जिनगृहे चैत्ये विहारे हेमच० ।

**जिनेन्द्र** पु०जिनानामिन्द्रः जिन इन्द्र इव वा । १बुद्धे हला० २व्याकरणकारके पिङ्गलभेदे च । स्वार्थे अण् । तत्रार्थे "पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः" कविकल्पद्रुमः ।

**जिनेश्वर** पु० ६त० । बुद्धे हेमच० ।

**जिम** भक्षे भ्वा० पर०सक०सेट् । जेमति अजेमीत् । उदित् जेमित्वा जान्त्वा जितः । "जेमनं लेप आहारः" अमरः

**जिरि** हिंसायां स्वा०पर०सक०सेट् । जिरिणोति अजिरायीत् । अयं वैदिकः ।

**जिल्लिक** पु० दक्षिणस्थे देशभेदे, सोऽभिजनोऽस्य अण् । तस्य राजा वा अण् । जैल्लिक पित्रादिक्रमेण तद्देशवासिनि तद्भूपे च बहुषु तस्य लुक् । तद्देशवासिषु तद्भूपेषु च ब० व० । "जिल्लिकाः कुन्तलाश्चैव सौहृदामलकाननाः" भा० स० ९अ० ।

**जिव** प्रीणने भ्वा० पर० सक० सेट् इदित् । जिन्वति अजिन्वीत् जिजिन्व इदित्त्वात् नोपधालोपः जिन्व्यते । "भूमिं पर्ज्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः" ऋ० ११६४।५१। "इन्द्रेण जिन्वितो मणिराऽगमन्" अथ० ८।२१।७। "रश्मिरसि क्षयाय त्वा क्षयं जिन्व सवितृप्रसूतौ" ताण्ड्य०ब्रा०१।९ । "अपां रेतांसि जिन्वति" ऋ० ८।४४।१६ । "यदा त्वं प्राण ! जिन्वसि" ११।४।१४ । इत्यौ च अक० । वेदे अस्य क्वचित् आत्म० "स जिन्वते जठरेषु प्रजज्ञिवान्" ऋ० ३।२।११। "जिन्वते वर्द्धते" भा० । वेदे नमध्यस्यैव प्रयोगात् शब्दकल्पद्रुमे अन्त्यस्थवान्तस्थले तस्य निवेशनात् जिन्वतीति प्रयोगदर्शनाच्च ओष्ठ्यभ्रान्त्या मतुक्तशब्दस्तोममहानिधौ जिन्वतीति ओष्ठ्यान्ततया रूपप्रदर्शनं प्रामादिकमेव । कविकल्पद्रुमे अन्तःस्थवान्तमध्यं पाठात् धिवितवातोरिव न मध्यत्वस्योचितत्वात् ।

**जिवाजिव** पुंस्त्री जीवञ्जीव+पृषो० । चकोरखगे शब्दर० जातित्वात् स्त्रियां ङीष् ।

**जिव्रि** पु० जृ-रिक् रस्य वः । १समये २खगे च सि० कौ० ।

**जिष** सेके भ्वा० पर० सक० सेट् । जेषति अजेषीत् । उदित् जेषित्वा जिष्ट्वा । जिष्टः ।

**जिष्णु** पु० जिष-ग्स्नु । १विष्णौ हेमच० २इन्द्रे ३अर्ज्जुने च ४जेतरि त्रि० मेदि० । तत्रार्ज्जुने जयशीले च । "यस्मान्मद्दोपरिगत बलवन्नव्युतिजिष्णु जिष्णुरच्युतोऽप्यवारणम्" "भुभुजश्च परलोकजिष्णवः" माघः "अहं दुरापो दुर्द्धर्षो दमनः पाकशासनिः । तेन देवमनुष्येषु जिष्णुर्नामाऽस्मि विश्रुतः" भा० वि० ४४अ० । इन्द्रे "जयेम जिष्णुमास्मि । अवतामिन्द्रमोऽर्हिणो" अथ० ११।९।१८ । विष्णौ "विष्णुर्विक्रमणाद्देवो जयनाज्जिष्णुरुच्यते" भा०उ०६९ अ० । जिष्णुनामनिरुक्तौ ।

**जिह्म** त्रि० हा-मन् सन्वत् आलोपश्च । १कुटिले २मन्दे ३तगरवृक्षे न० मेदि० । "अजिताजिह्मवीक्षितैः" कुमारसं० ।

"जिह्मं त्यजेयुर्निर्लोभमयत्नोऽन्येन कारयेत्" याज्ञ०। "ब्रह्मद्वेषाद्धितमजिह्मधियाम्" माघः। ४कपटे न०। "तदाशु कर्त्तुं त्वयि जिह्ममुद्यते" किरा० "जिह्मं कपटम्" मल्लि०। ५पिहिते त्रि० "जिह्मवारमपोर्णुत" ऋ० ८।४।५। "जिह्मवारं पिहितद्वारम्" भा०। ६अधस्ताद्वर्त्तमाने च। "उच्चाबुध्नं चक्रथुर्जिह्मवारम्" ऋ० १।११६।९॥ "जिह्ममधस्ताद्वर्त्तमानम्" भा०। ७अप्रसन्ने च। "विधिसमयनियोगाद्दीप्तिसंहारजिह्मम्" किरा० "जिह्मम् अप्रसन्नम्" मल्लि०।

**जिह्मग** पुंस्त्री जिह्मं कुटिलं मन्दं वा गच्छति गम–ड। १सर्पे स्त्रियां जातित्वात् ङीष्। २मन्दगे त्रि० मेदि० स्त्रियां टाप्। "व्रतं चक्रे विनाशाय जिह्मगानां धृतव्रतः" "स दृष्ट्वा जिह्मगान् सर्वांस्तीव्रकोपसमन्वितः" भा० आ० ६ अ०। [मन्दर० स्त्रियां जातित्वात् ङीष्।

**जिह्ममेहन** पुंस्त्री जिह्मं मन्दं मेहति मिह–ल्यु। भेके।

**जिह्मशल्य** पु० जिह्मं कुटिलं शल्यमस्मात्। खदिरवृक्षे जटा०

**जिह्माशिन्** त्रि० जिह्मं मन्दमश्नाति अश–णिनि। मन्दभोजिनि ततः अपत्ये शुभ्रा० ढक्। जैह्माशिनेय तदपत्ये पु० स्त्री।

**जिह्वल** त्रि० ह्वल–अच् वा० सम्प्र० जिह्वं जिह्वाव्यापारं लाति ला–क वा। भोजनलोलुपे। "श्राद्धं दत्त्वा परश्राद्धे भुञ्जते ये च जिह्वलाः। पतन्ति नरके घोरे लुप्तपिण्डोदकक्रियाः" श्रा० त०।

**जिह्वा** स्त्री लेढ्यनया लिह–स्वादे व "शेवयह्वजिह्वेत्यादिना" नि०। १रसास्वादकरणे इन्द्रियभेदे २तदधिष्ठाने गोलके (जिभ) ख्याते पदार्थे च। तदिन्द्रियस्य जलीयत्वं सि० मु० समर्थितं यथा "रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् सक्तुरसव्यञ्जकोदकवत् रसनसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वे सतीति विशेषणीयम्। तस्याधिष्ठातृदेवता च प्रचेताः "दिग्वातार्कप्रचेऽश्वीत्यादि" शा० ति० उक्तेः। अग्नेर्जिह्वाश्च सप्त तन्नामानि "काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः" मुण्डकोप०। "तस्याः कफादिदोषात् लक्षणादिकं भाव०प्र० दर्शितं यथा "शाकपत्रप्रभा रूक्षा स्फुटिता रसनाऽनिलात्। रक्ता श्यावा भवेत् पित्तात्लिप्ताऽऽर्द्रा धवला कफात्। परिदग्धा खरस्पर्शा कृष्णा दोषत्रयेऽधिके। सैव दोषद्वयाधिक्ये दोषद्वितयलक्षणा" लीयते भरत आह च। जिह्वकः। इन्द्रियपरत्वे तथात्वमिति तु युक्तम्। ३वाक्ये निघण्टुः

**जिह्वाजप** पु० जिह्वया जपः। "जिह्वाजपः स विज्ञेयो केवलं जिह्वया बुधैः" तन्त्रसारोक्ते जपभेदे। "उच्चैर्जपाद्विशिष्टः स्यादुपांशुर्दशभिर्गुणैः। जिह्वाजपः शतगुणः साहस्रो मानसः स्मृतः" तन्त्रसा० तत्फलतारतम्यम्।

**जिह्वानिर्लेखन** न० जिह्वा निर्लिख्यतेऽनेन निर्+लिख–करणे ल्युट्। (जिव छाचडान) द्रव्यभेदे तल्लक्षणं यथा "जिह्वानिर्लेखनं हैमं राजतं ताम्रजं तथा। पाटितं मृदु तत्काष्ठं मृदुपत्रमयं तथा। तत्काष्ठं दन्तधावनयोग्यकाष्ठम्। दशाङ्गुलं मृदु स्निग्धं तेन जिह्वां लिखेत् सुखम्। तज्जिह्वामलवैरस्यदौर्गन्ध्यजडताहरम्" भाव० प्र०।

**जिह्वाप** पुंस्त्री जिह्वया पिबति पा–क। १कुक्कुरे २व्याघ्रे ३विडाले ४भल्लूके च शब्दरत्नावली ५चित्रकव्याघ्रे विश्वः। स्त्रियां जातित्वात् सर्वत्र ङीष्।

**जिह्वामल** ६त०। जिह्वास्थितमले कुलुके त्रिका०।

**जिह्वामूल** ६त०। जिह्वाया मूले। तत्र भवः छ। जिह्वामूलीय अयोगवाहान्तर्गतवर्णभेदे। "जिह्वामूलीयस्य जिह्वामूलम्" सि०कौ०। स च कखयोः परयोः विसर्गस्थाने जातः। कवर्गं च "जिह्वामूले तु कुः प्रोक्तः" शिक्षायां कवर्गस्य जिह्वामूलस्थानत्वोक्तेस्तथात्वम्।

**जिह्वारद** पु०स्त्री० जिह्वा रद इव यस्य। पक्षिणि हारा० तस्य जिह्वाया एव दन्तकार्य्यकारित्वात्तथात्वम्। स्त्रियां जातित्वात् ङीष्।

**जिह्वारोग** पु० मुखरोगान्तर्गतजिह्वागतरोगभेदे। तल्लक्षणादि भावप्र० उक्तं यथा।

"वातजः पित्तजश्चापि कफजोऽलाससंज्ञकः। उपजिह्विका च गदा जिह्वायां पञ्च कीर्त्तिताः। तत्र वातजस्य लक्षणमाह। जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा। स्फुटिता मनाग्विदीर्णा। प्रसुप्ता रसानभिज्ञतया सुप्तेव। शाकच्छदनप्रकाशा शाको मरुभूमिजातो द्रुमः तद्वत् कण्टकाचिता। पित्तजमाह। पित्तात् सदाहैरुपचीयते च दीर्घैः सरक्तैरपि कण्टकैश्च। कफजमाह। कफेन गुर्वी बहला चिता च मांसोच्छ्रयैः शाल्मलिकण्टकाभैः। बहला स्थूला। मांसोच्छ्रयैः मांसजकण्टकैः। अलासमाह। जिह्वातले यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्त्तिः। जिह्वां सतम

सम्भवति प्रद्रवो मूले च जिह्वा भयमेति पाकम्। प्रगाढ़ः प्रकर्षेण गाढ़ो दारुणः। कफरक्तमूर्त्तिः कफरक्ताभ्यां मूर्त्तिर्यस्य स कफरक्तज इत्यर्थः। जिह्वास्तम्भेन वायुरत्र बोद्धव्यः। अयं पाकेनेति पित्तस्य चातस्त्रिदोषजोऽयम्। असाध्यत्वमाह। उपजिह्विकामाह। जिह्वाग्ररूपः श्वयथुश्च जिह्वामुन्नाम्य जातः कफरक्तयोनिः। प्रसेककण्डूपरिदाहयुक्तः प्रकथ्यतेऽसावुपजिह्विकेति। जिह्वाग्ररूपः जिह्वाग्राकृतिः" भावप्र०। "पञ्चत्वमुपयात्येव जिह्वारोगः प्रजायते" शातात०।

**जिह्वाशल्य** पु० जिह्वायाः शल्यमिवाऽस्य अच्। खदिरवृक्षे राजनि०।

**जिह्वावत्** पु० यजुर्वेदीयवंशान्तर्गतर्षिभेदे। "अथ वंश" इत्युपक्रमे। "जिह्वावतो बाध्योगाज्जिह्वावाँ बाध्योगः" शत०ब्रा०१४।८।४।२३। २जिह्वायुक्ते त्रि०। स्त्रियां ङीप्।

**जिह्वास्वाद** पु० जिह्वया स्वादः। लेहने (चाटा) हेमच०।

**जीति** स्त्री जि–क्तिन् नेट् दीर्घः। जये "अजीतयेऽहतये पवस्व स्वस्तये" ऋ० ८।६६।४। "अजीतये अजयाय" भा०। लोके तु ज्या–क्तिन् सम्प्रसारणे "ग्रहः" इति पा० सम्प्रसारणस्य दीर्घः। २हानौ स्त्री।

**जीन** त्रि० ज्या–क्त सम्प्रसा० दीर्घः। जीर्णे अमरः "जीनकार्मुकवस्त्रादीन् पृथक् दद्यात् विशुद्धये" मनुः।

**जीमूत** पु० जयति नभः, जीयतेऽनिलेन वा। जि–क्त। "जेर्मुट् चोदात्तः दीर्घश्च"। जीवनस्योदकस्य मूतं बन्धो यस्येति वा जीवनं जलं मूतं बद्धमनेन। मूङ् बन्धने कर्म्मणि क्तः पृषोदरादित्वात् साधु। ज्यानं जीर्णं ज्या–सं० क्विप्, जिया वयोहान्या मूतो बद्ध इति वा जीवनं मुञ्चति वा पृषो०। १पर्वते २मेघे ३मुस्तायां ४देवताड़वृक्षे च अमरः ५इन्द्रे ६भृतिकरे ७घोषकलतायां च हेम०। मेघे "यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते" दुन्दुभिपूजामन्त्रः। "जीमूतैरपिहितसानुरिन्द्रकीलः" किरा०। "जीमूतस्येव भवति प्रतीकम्" ऋ० ६।७५।१ "प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः" इ० र० उक्ते दण्डकभेदे तथा च एकादशभीरगणैः रचितो जीमूताख्यो दण्डकः। स्वार्थे क। जीमूतक तत्रार्थेषु।

**जीमूतकूट** पु० जीमूतो मेघः कूटेऽस्य। पर्वते शब्दा०।

**जीमूतकेतु** पु० विद्याधरपतौ राजभेदे जीमूतवाहनपितरि। नागानन्दे दृश्यम्।

**जीमूतमूल** पु० जीमूतस्य मुस्तकस्य मूलमिव मूलमस्य। यव्यां शब्दरत्ना०।

**जीमूतवाहन** पु० जीमूतो मेघो वाहनमस्य। मेघवाहने १इन्द्रे शालिवाहनपुत्रे २नृपभेदे जिताष्टमीपद्धे दृश्यम्। जीमूतकेतोः विद्याधरस्य ३पुत्रे च तत्कथा नागानन्दे दृश्या।

**जीमूतवाहिन्** पु० जीमूतं मेघमुद्दिश्य वहति ऊर्द्ध्वं गच्छति वह–णिनि। धूमे हेमच०। मेघानां धूमादेवाविर्भावात् तस्य तथात्वम्।

**जीर** पु० ज्या–रक् सं०प्र०दीर्घः। १जीरके, २खड्गे, ३अणौ च। मेदि० "जीरो रक् च" उणा० सौ० जु–रप्रत्ययः ईत्त्वामादेशः। ४जवशीले ५क्षिप्रे च उज्ज्वल० जीरदानुः। "उत नः सुद्योत्मा जीराश्वः" ऋ० १।१४१।१२। "जीराश्वः क्षिप्राश्वः" भा०। संज्ञायां कन्। (जीर) ख्याते पदार्थे मेदिनि०। मदनपालनिघण्टौ तस्य क्लीवता तद्भेदा गुणाश्चोक्ता यथा "जीरकं दीर्घकं शुक्लमजाजीकणजीरकम्। जीरकं अरुणं कृष्णं वर्षकाली सुगन्धिकम्। कालिका बाष्पिका कुञ्चिकारवी चोपकुञ्चिका। पृथ्वीका सुषवी पृथ्वी स्थूलजाज्युपकालिका। जीरकत्रितयं रूक्षं कटूष्णं दीपनं लघु। संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत्। चक्षुष्यं पवनाध्मानगुल्मच्छर्दिबलासजित्" मदनपालः।

**जीरण** पु० जीरक+पृषो०। जीरके राजनि०।

**जीरदानु** पु० जीरं क्षिप्रं जवशीलं वा ददाति दा–नु। १जवशीलदाने, २क्षिप्रदातरि च "विद्यामेषं वृजनं जीरदानुम्" ऋ० १।१६६।१५ "जीरदानुं जयशीलदानम्" भा० "जीरदानूरेतो दधत्योषधीषु गर्भम्" ५।८३।१ "जीरदानुः क्षिप्रदानः" भा०।

**जीरि** पु० जीर्य्यति जॄ–बा०रिक्। १मनुष्ये "रथन्ति जीरयो वनानि" ऋ० ४।५।१।६ "जीर्य्यन्ति इति जीरयो मनुष्याः" भा० जॄ–अन्तर्भूतण्यर्थे रिक्। २जारके ३अभिभावके च त्रि० "युजीरयः विशते सध्र्यक् पृथक्" ऋ० २।१।१२ "जीरयो जरयितारः" भा०।

**जीर्ण** त्रि० जॄ–क्त। १जरायुक्ते २पुरातने च अमरः "वासांसि जीर्णानि यथा विहाय" गीता। "जीर्णमन्नं प्रशंसीयात् यस्य न कृच्छ्रमागतम्" चाणक्यः। ३शैलजे न० राजनि०। ४उदराग्निना जरणाके त्रि० "अजीर्णे भेषजं वारि जीर्णे वारि बलप्रदम्" वैद्यकम्।

"यो द्वादशभ्यो दिवसेभ्यः ऊर्द्ध्वं दोषत्रयेभ्यो त्रि-गुणेभ्य ऊर्द्ध्वम्। नृणां तनौ तिष्ठति मन्दवेगो भिषग्भिरुक्तो ज्वर एष जीर्णः"। जीर्णज्वरस्यैव विशेषं वातबलासकमाह। नित्यं मन्दज्वरो रूक्षः शूनः कृच्छ्रेण सिध्यति। स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी। वातबलासको नर ईदृग्भवेत्। शूनः शोथी। श्लेष्मभूयिष्ठो बहुश्लेष्मकः। जीर्णज्वरी नरः कुर्य्यान्नोपवासं कदाचन। लङ्घनात् स भवेत् क्षीणो ज्वरस्तु स्याद्बली यतः। पुराणेऽपि ज्वरे दोषा यद्यपथ्यैः पुनस्तथा। लङ्घयेत् तत्र तत्रस्थान् पूर्व्वामेवाचरेत् "क्रियाम्" तथा पूर्ववत्।

**जीर्णदारु** पु० नित्यक०। वृद्धदारकवृक्षे (बिधारा) राजनि०

**जीर्णपत्र** पु० जीर्णं पत्रमस्य। पट्टिकालोध्रे शब्दार्थ०। २जीर्णपत्रयुक्ते त्रि०। बहु० कप् कापि अत इत्त्वम्। जीर्णपत्रिका २वंशपत्रीतृणे स्त्री राजनि०।

**जीर्णपर्ण** पु० जीर्णानि पर्णान्यस्य। १कदम्बे। २पुरातनपत्र-युक्ते त्रि०। कर्म०। ३पुरातनपर्णे न०। ४पुरातन-ताम्बूले च। "पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः। जीर्णपर्णं हरेदायुः शिरा बुद्धिप्रणाशिनी" वैद्यकम्।

**जीर्णफञ्जी** स्त्री नित्यक०। वृद्धदारके वृक्षे (बिधारा) राजनि०।

**जीर्णबुध्न** पु० जीर्णं बुध्नं मूलमस्य। पट्टिकालोध्रे राजनि० तदिव कायति कै—क। जीर्णबुध्नक। (केओटा सुथा) ख्याते तृणकभेदे। [राजनि०।

**जीर्णवज्र** न० जीर्णं पुरातनं वज्रं हीरकमिव। वैक्रान्तमणौ

**जीर्णवस्त्र** न० कर्म०। पुरातनवस्त्रे पटच्चरे अमरः।

**जीर्णा** स्त्री जॄ—क्त। स्थूलजीरके राजनि०।

**जीर्णास्थिमृत्तिका** स्त्री। कठिनमृत्तिकाभेदे।

"अथ वक्ष्ये तु जीर्णास्थिमृत्तिकाकरणं प्रिये!। शिलाजतुस्थले कुर्य्यात् दीर्घं गर्त्तं मनोहरम्। निः-क्षिपेत् तत्र नानास्थिसञ्चयं हिमतुल्यदाम्। सर्ज्जक्षारं मक्षाक्षारं कटुक्षारं लवणानि च। गन्धकोष्णजलं क्षेप्यं नानाक्षाराणि तत्र च। एवं कृत्वा मासषट्कं दद्यात् पाषाणमृत्तिकाम्। वर्षाख्यदूर्ध्वं तदूर्द्ध्वन्तु कुर्य्यादिष्टकां शुभाम्। त्रिवर्षाज्जायते सर्वमेकीभूतं दृषत्-समम्। ततो निष्काश्य तच्चूर्णं कृत्वा पात्राणि निर्म-मेत्। प्रथमं भोजनं तत्र स्थापयेदन्नदूषणम्। मक्षा-विषस्य संयोगात् तस्य भङ्गः प्रजायते। दूषीविषादि-संयोगात् पात्रे स्फोटा भवन्ति हि। तत्र क्षिप्तं चतु-र्विधं पात्रं स्वच्छं प्रजायते। एवं ज्ञात्वा तत्र द...

कदाचिद्विषादिकमिति राघवः" शब्दार्थचिन्तामणिः।

**जीर्णि** स्त्री जॄ—क्तिन्। जीर्णतायाम्। अमरः।

**जीर्णोद्धार** पु० जीर्णस्य पूर्वप्रतिष्ठापितलिङ्गादेरुद्धारः। १पूर्वप्रतिष्ठापितलिङ्गादेः भग्नतादौ स्थानान्तरे उद्धारे तद्विधानम् अग्निपु० ६७ अ० उक्तं यथा।

"भगवान् उवाच। जीर्णोद्धारविधिं वक्ष्ये भूषितां स्नापयेद् गुरुः। अचलां विन्यसेद् गेहे अतिजीर्णां परि-त्यजेत्। व्यङ्गां भग्नां च शैलाढ्यां न्यसेदन्यां च पूर्व-वत्। संहारविधिना तत्र तत्त्वान् संहृत्य देशिकः। सहस्रं नरसिंहेन हुत्वा तामुद्धरेद् गुरुः। दारवीं दाहये-द्वह्नौ शैलजां प्रक्षिपेज्जले। धातुजां रत्नजां वापि अगाधे वा जलेऽम्बुधौ। यानमारोप्य जीर्णाङ्गं छाद्य वस्त्रा-दिना नयेत्। वादित्रैः प्रक्षिपेत्तोये गुरवे दक्षिणां ददेत्। यत्प्रमाणा च यद्द्रव्या तन्मानां स्थापयेत् पुनः। कूप-वापीतडागादेर्जीर्णोद्धारे महाफलम्" नि०सि०विशेषो यथा

"अथ जीर्णोद्धारः स च लिङ्गादौ दग्धे भग्ने चलिते वा कार्य्यः। अयं चानादिसिद्धप्रतिष्ठितलिङ्गादौ भङ्गा-दिदुष्टेऽपि न कार्य्यः। तत्र तु महाभिषेकं कुर्य्यादिति त्रिविक्रमः। कर्त्ताऽमुकदेवस्य जीर्णोद्धारं करिष्ये इत्युक्त्वा पुण्याहं वाचयित्वा आचार्य्यमृत्विजश्च वृत्वा लिङ्गे ओं व्यापकेश्वरहृदयाय नमः ओं व्यापकेश्वरशिरसे स्वाहेत्येवं षडङ्गं कृत्वाऽघोरमन्त्रं शतं जप्त्वाऽग्निं प्रतिष्ठाप्याघोरेण घृतसर्षपैः सहस्रं हुत्वा इन्द्रादिभ्यो नाम्ना बलिं दत्त्वा जीर्णदेवं प्रणवेन संपूज्य ब्रह्मादि-मण्डलदेवतानां होमं पूर्वोक्तं कृत्वा देवं प्रार्थयेत्। "जीर्णभग्नमिदं चैव सर्वदोषावहं नृणाम्। अस्योद्धारे कृते शान्तिः शास्त्रेऽस्मिन् कथिता त्वया। जीर्णोद्धार-विधानञ्च ह्यपराह्णहतावहम्। तदधिष्ठातां देव! प्रहं-रामि तवाज्ञयेति"। ततः क्षीराज्यमधुदूर्वाभिः समिद्भिश्चा-ष्टोत्तरसहस्रं शतं वा देवमन्त्रेण हुत्वाऽङ्गानां दशांशेन लिङ्गचालनार्थं सहस्रं शतं वा पायसेन हुत्वा लिङ्गं प्रार्थयेत्। "लिङ्गरूपं समागत्य येनेदं समधिष्ठितम्। मायायास्त्वं संमितं स्थानं गच्छत्वैव शिवाज्ञया। "अत्र स्थाने च या विद्या सर्वविद्येश्वरैर्युता। शिवेन सह संतिष्ठेति" मन्त्रितजलेनाभिषिच्य विसर्जयेत्। ततोऽस्त्र-मन्त्रितेन खनित्रेण खात्वा लिङ्गमानीय नद्यादौ वाम-देवेन लिङ्गं प्रणवेन भूमिं क्षिपेत्। दारुजन्तु मधुना-ऽस्त्राघोरेण दहेत्। हेमरत्नादिजन्तु दग्धं चलितं

**जीवत्तोका** स्त्री जीवत् तोकं यस्याः । जीवत्पुत्रिकायां स्त्रियां । (जेयोँ त् पोयाती) हेमच० ।

**जीवत्पति** स्त्री जीवन् पतिर्यस्याः सपूर्व्वत्वात् वा न ङीपौ । सधवायां स्त्रियाम् । हेमच० ।

**जीवत्पितृक** पुं० जीवन् पिता यस्य सः । विद्यमानपितृके जने । "अमावास्यां गयाश्राद्धं दक्षिणायनभोजनम् । न जीवत्पितृकः कुर्य्यात् कृते तु पितृहा भवेत्" ति० त० । तत्र जीवत्पितृकस्य श्राद्धविषयेऽधिकारः निर्णयसिन्धौ व्यवस्थापितो यथा ।

"जीवत्पितृकस्य साग्नेरेव दर्शश्राद्धेऽधिकारः न तु निरग्नेः "न जीवत्पितृकः कुर्य्याच्छ्राद्धमग्निमृते द्विजः । येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः । पितामहेऽप्येवमेव कुर्य्याज्जीवति साग्निकः । साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे" इति चन्द्रिकायां सुमन्तूक्तेरित्याहुः प्रयोगपारिजातेऽप्यनाहिताग्निर्न कुर्य्यादितीदं व्याख्यातम् तत्र "अनग्निकोऽपि कुर्वीत जन्मादौ दर्शकर्म्मणि । येभ्य एव पिता दद्यात्तानेवोद्दिश्य तर्पयेदिति" हारीतोक्तेः सौमन्तवत्तु दर्शश्राद्धभिन्नश्राद्धपरमित्युक्तं मदनरत्ने । श्राद्धपदं पिण्डपितृयज्ञपरमिति पृथ्वीचन्द्रोदयः । निर्णयामृते तु हारीतीयेऽनग्निकोऽनाहिताग्निरभिप्रेतः पूर्व्ववचने तु साग्निः श्रौताग्निः स्मार्त्ताग्निर्वोच्यते । तेनोभयाग्निहीनस्य नेत्युक्तं तन्न पूर्व्वोक्तदिशा नतिसम्बन्धेनाग्निपदस्य श्रौताग्निपरत्वे मानाभावात् वक्ष्यमाणनित्यानित्यसंयोगविरोधात् "पितरो जनकस्येष्टा यावद्व्रतमनाहितम् । समाहितव्रतः पश्चात् स्यात् यजेत पितामहानिति, पृथ्वीचन्द्रोदये यमवचो विरोधाच्च । अपरार्केऽपि समावर्त्तने ब्रह्मचारी स्वयमेव नान्दीश्राद्धं कुर्य्यादित्याहुः अतः पूर्व्वमेव साधु वोपदेवोऽप्येवमाह । यत्तु मतं जीवत्पितृकस्य पुत्रनामकर्म्मादौ न वृद्धिश्राद्धम् हारीतीये जन्मादावित्यादिपद्ये न तत्प्राप्तावपि "उद्वाहे पुत्रजनने पुत्रेष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुरिति" मैत्रपरिशिष्टे उद्वाह एव तस्योपसंहारात् एवं यत्र तु संस्कारादिपदं तदप्युद्वाहादिपरमेवेति तन्न उद्वाहपदस्य सविवाहपरत्वस्यापि सत्त्वात् पुत्रविवाहपरत्वे मानाभावात् "नामकर्म्मणि बालानां चूड़ाकर्म्मादिके तथा" इत्यादिभिर्नित्यश्राद्धस्य जीवत्पितृकत्वाभावतो नित्यानित्यसंयोगविरोधाच्च अतो जन्मादावित्यादि सर्व्वसंस्कारसंग्रहः ।

तथा च कात्यायनः "सपितृकः पिता दद्यात् सुतसंस्कारकर्म्मसु । पिण्डान्नोद्वाहपर्य्यन्तं तेभ्यो तस्याभावे तु तत्क्रमात्" । सुतानां जीवादिसंस्कारेषु पिता सपितृकः पित्र्यान् श्राद्धम् । "पिण्डदोऽंशहरश्चैषामिति" इंसनात् जीवत्कन्याविवाहपर्य्यन्तं दद्यात् विवाहेच प्रथमः "नान्दीश्राद्धं पिता कुर्य्यादाद्ये पाणिग्रहे बुधः । अत ऊर्द्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकमिति" स्मृतेः तत्र पितुरभावे तत्क्रमात् "असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैरिति" यः कर्त्तृक्रमः तेन क्रमेण ज्येष्ठभ्रात्रादिरित्यादिति चन्द्रिकादयः । हेमाद्रिस्तु तत्र पितुरभावे यः पितृव्यमातुलादिः संस्कुर्य्यात् स तत्क्रमात् संस्कार्य्यपितृक्रमाद्दद्यात् स सपितृक इति व्याचख्यौ । समावर्त्तनस्यापि विवाहप्राचीनस्तु तसंस्कारत्वात्पितैव नान्दीश्राद्धं कुर्य्यात् तदभावे ज्येष्ठभ्रात्रादिः तदभावे स्वयमेव कुर्य्यात् । उपनयनेन कर्म्माधिकारस्य जातत्वात् एवमाद्यविवाहेऽपीति पृथ्वीचन्द्रोदयचन्द्रिकादयः । मदनरत्नेऽप्येवम् । यदा तु पितरि संन्यस्ते प्रोषिते पतिते वा धर्म्मार्थं तत्पुत्रमन्यः संस्कुर्य्यात्तदा संस्कार्य्यपितुः पित्रादिभ्यो दद्यात् "पितरो जनकस्येष्टा यावद्व्रतमनाहितम् । समाहितव्रतः पश्चात् स्यात् यजेत पितामहानिति" पृथ्वीचन्द्रोदये यमोक्तेः जीवत्पितृकस्य विशेषमाह कात्यायनः "वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति । येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः" इति । तीर्थ इव प्रायश्चित्ताङ्गश्राद्धेऽपि तस्याधिकारः ।

"पितरि जीवति यः श्राद्धं कुर्य्यात् स येषां पिता कुर्य्यात्तेषां कुर्य्यात् । पितरि पितामहे च जीवति येषां पितामहः कुर्य्यात् तेषां कुर्य्यात् त्रिषु जीवत्सु नैव कुर्य्यात्" विष्णु०स० "जीवत्पितृकोऽपि" कात्या० श्रौ० सू० पिण्डपितृयज्ञेऽधिक्रियते च । "जीवान्तर्हितेऽपि" कर्क० सू० "जीवपितृकस्य जीवेन पित्रादिना अन्तर्हितेऽपि व्यवहितेऽपि पितामहादेः पिण्डदानं भवति सोमादाविव "येभ्य एव पिता दद्यात्तेभ्यो दद्यात्तथा सुतः" इति कर्कधृतेः । "जीवपितृकस्य होमान्तमनारम्भो वा" सू० । "जीवपितृकस्य यजमानस्य होमान्तमेव पिण्डपितृयज्ञं कर्म्म भवति अथवाऽनारम्भ एव पिण्डपितृयज्ञस्य नाद्यः पूर्व्वपक्षनिरासार्थः । अनारम्भपक्ष एव युक्तः यतः पिण्डदानं प्रधानम् । तदभावे होमस्याङ्गभूतस्यानुष्ठानं न घटते । एवं जीवान्तर्हितेऽपीति पक्षं दूष-

अजुडीत् जुजोड । घञि जुडः । [घञि जोडः।

**जुड** गतौ तु० पर० सक० सेट् । जुडति अजोडीत् । जुजोड ।

**जुत** दीप्तौ भ्वा० आत्म० अक० सेट् । जोतते अजोतिष्ट । जुजुते । ऋदित् अजुजोतत् ।

**जुन** गतौ तु० पर० सक० सेट् । जुनति अजोनीत् । जुजोन ।

**जुम्बक** पु० वरुणे "पृथिवीं तथा जुम्बकाय स्वाहा" यजु० २५।९। "जुम्बकाय वरुणाय" वेददी० "प्रत्येव तिष्ठति जुम्बकाय स्वाहेत्यवभृथ उत्तमामाहुतिं जुहोति वरुणो वै जुम्बकः" शत० ब्रा० १२।९।६।५।

**जुर्व** पु० बधे भ्वा० पर० सक० सेट् । जूर्वति अजूर्वीत् । जूर्त्तः जूर्त्तिः । क्विपि जूः ।

**जुल** पेषणे चु० उभ० सक० सेट् । जोलयति ते अजूजुलत् त

**जुवस** त्रि० सो० जु—वा० असुन् किच्च । वेगवति । "आ नः सोमः सहो जुवो रूपम्" ऋ० ८।६५।१८ ।

**जुष** तर्के अक० तर्के सक० वा चु० उभ० पक्षे भ्वा० पर० सेट् । जोषयति ते जोषति अजूजुषत् त अजोषीत् ।

**जुष** हर्षे अक० सेवायां सक० तुदा० आ० सेट् । जुषते अजोषिष्ट जुजुषे जुषमाणः । ईदित् । जुष्टः । ञीत् वर्त्तमाने क्त । जुष्टः । "पौलस्त्योऽजुषत शुचं विपन्नबन्धुः" भट्टिः "यत्र देवासो अजुषन्त विश्वे" यजु० ४।१। "इन्द्र ! जुषस्व प्रवह" अथ० २।५।१। "अजामेकाम्—अजो ह्येको जुषमाणोऽनुशेते" श्वेताश्वतरोप०। "एषैव बुद्धिर्जुषतां सदात्मनाम्" भा० व० १२५८६ श्लो० । "सत्यं जुषाणाय भवाय देहिनाम्" भाग० ८।५।२२ । "परजुष्टनयाभिवर्त्तमानः" दीधितिः । आर्षे गणव्यत्ययात् अदादित्वम् । "देवा नाग्नदधानाद्धि हविर्जुषन्ति" भा० व० १२७३। आर्षत्वात् पदव्यत्ययः। "पारिजातगुणान् मर्त्त्या जुषन्ति यदि नारद ! । देवानां मानुषाणां च न विशेषो भविष्यति" हरिवं० ७२७२ । लेटि जोजिषत् "सुपेशसस्करति जोजिषद्धि" ऋ० २।२५।१ "जुषी प्रीतिसेवनयोः लेट्यडागमः । विकरणः सिप् । इडागमश्च" भा० । प्राद्य पवर्गपूर्वकस्य प्रादिद्योत्यतत्तदर्थयुक्ते सेवनादौ ।

**जुष्कक** पु० जुष—कक् ततः संज्ञायां कन् । यूषे शब्दच० ।

**जुष्ट** न० जुष—कर्म्मणि क्त । १उच्छिष्टे । २सेविते त्रि० मेदि० "परजुष्टनयाभिवर्त्तमानः" दीधितिः। "पुण्यो महाब्रह्मसमूहजुष्टः" भट्टिः । [सेवने न०।

**जुष्य** त्रि० जुष—कर्म्मणि क्यप् । १सेव्ये भावे क्यप् । २सवस्य-

**जुहुराण** पु० । हुर्छ—यङ्—शानच् यङो लुक् छलोपश्च । १चन्द्रे पु० उज्ज्वल० । २कौटिल्यकारिणि त्रि० । "युयोध्यस्मज्जुहुराणमेनः" ऋ० उ० । "जुहुराणं कुटिलकारिणम्" भाष्यम् ।

**जुहुवान** पु० हु—कर्म्मणि कानच् । १अग्नौ २वृक्षे च । संक्षिप्तसारे कठिनहृदये इत्युक्तिः रमध्यस्यैव तदर्थता हृक्तस्तद्रूपसिद्धेस्तदर्थतौचित्यात् अतस्तत्र लिपिकरप्रमादात् जुहुवान इत्यपपाठः जुहुराण इत्येव पाठः समुचितः ।

**जुहू** स्त्री जुहोत्यनया हु—क्विप् नि० द्वित्वं दीर्घश्च । यज्ञिये स्रुगाख्ये पात्रभेदे सा च पलाशघटिता "पालाशी जुहूः" कात्या० श्रौ० १।३।३४ । "जुहोत्यनया जुहूः स्रुक् सा च पालाशी पलाशवृक्षकाष्ठनिर्म्मिता" कर्कः । "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" श्रुतिः । "पर्णमयी पलाशकाष्ठमयीत्यर्थः"। एषा चानारभ्याधीताऽपि प्रकृत्यर्था यथोक्तं ताण्ड्य० ब्रा० ।

"अनारभ्याधीतानां प्रकृतिगामित्वमिति न्यायेन क्रत्वङ्गत्वावगमात् । स च न्यायस्तृतीयाध्याये षष्ठपादस्य प्रथमाधिकरणे पर्णवाक्यमुदाहृत्याभिहितः । "प्रकृतौ विकृतौ वा सान्नस्य पर्णत्वसौ विधिः । प्रकृतेरेव वा तुल्याद्वचनादुभयोरसौ । जुहूमाश्रित्य पर्णत्वविधिः प्रकृतिमात्रगः । चोदकेनोभयप्राप्तेर्विकृतौ विधिनात्र किम्"। अनारभ्य श्रूयते "यस्य पर्णमयी जुहूर्भवति न स पापश्लोकं शृणोतीति" । तत्राव्यभिचरितक्रतुसम्बन्धवर्त्तीं जुहूमाश्रित्य क्रतुः पर्णत्वं वाक्येन विधीयते । या जुहूः सा पर्णमयीति वाक्यञ्च प्रकृतिविकृत्योस्तुल्यमेव प्रवर्त्तते उभयत्राश्रयभूताया जुह्वाः सत्त्वात् । तस्मात् प्रकृतिविकृत्योरुभयोरप्ययं विधिरिति प्राप्ते, ब्रूमः किमयं विधिर्विकृतौ चोदकात् पूर्वम्भिविश्यते पश्चाद्वा । नाद्यः, आश्रयभूताया जुह्वाः चोदकमन्तरेणासम्भवात् । द्वितीये तु पर्णत्वमपि जुह्वा सहैव चोदकेनातिदिश्यते, तत्र पुनर्विधिर्वैयर्थ्यादयं विधिः प्रकृतिमात्रगः" । जुहोत्यस्यां दिशि—आधारे क्विप् । २प्राग्देशे प्राङ्मुखतयैव होमकरणात् तस्यास्तथात्वम् ।

**जुहूरा(वा)ण** पु० जुहूं र(व)णति र(वण—अण् । १अध्वर्यौ । २अग्नौ । ३चन्द्रे विश्वः [वः । अग्नौ शब्दर० ।

**जुहूवत्** पु० जुहूपात्रं होमोद्देश्यतयाऽस्त्यस्य मतुप् वा० मस्य

**जुहोति** स्त्री हु—धात्वर्थनिर्देशे श्तिप् । होमभेदे "यजति

जुहोतीनां कोऽविशेषः” कात्या० श्रौ० १।२।५। इति प्रश्ने यजतिलक्षणसङ्क्षा “उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः” १।२।७इति लक्षितम्। “उपविष्टेन कर्त्रा होमो येषु त उपविष्टहोमाः स्वाहाकारेण प्रदानं येषु ते स्वाहाकारप्रदानाः य उपविष्टहोमाः स्वाहाकारप्रदानाश्च ते जुहोतयः इत्युच्यन्ते” कर्कः अतोऽस्य पुंस्त्वमेव स्त्रीत्वोक्तिः प्रामादिकी। “चरन्ति सर्वा वैदिक्यो जुहोतियजतिक्रियाः” मनुः।

जुह्वास्य पु० जुहूरास्यमिवास्य। होमीयवह्नौ। “हव्यवाहो जुह्वास्यः” ऋ० १।१२।६। [जूतः।

जू गतौ सौत्र० सक० प० सेट्। जवति अजावीत् जुजाव।

जू स्त्री सौ०जू–गतौ यथायथं कर्त्तृ भावादौ क्विप्। १आकाशे २सरस्वत्यां ३पिशाच्यां च ४जवने शब्दरत्ना० ५जवयुक्ते त्रि० त्रिका०। ६त्वरागमने ७गमने च स्त्री मेदि०।

जूट पु०जट–संहतौ अच्–पृषो०।१जटासंहतौ बन्धे २जटायाम् शब्दार्थचि०। “जटाजूटसमायुक्तामर्द्धेन्दुकृतशेखराम्” दुर्गाध्यानम्। “भूतेशस्य भुजङ्गवल्लिवलयस्रङ्नद्धजूटाजटाः” मालतीमा०। स्वार्थे क तत्रार्थे।

जूत त्रि० सौ०जू–क्त। १गते २आक्रष्टे च। “रथो ह वा मृतजात्यभिजूतः” ऋ० ३।५८।८। “अभिजूतः स्तोतृभिराकृष्टः” भा०। ३दत्ते च “युवं श्वेतं पेदव इन्द्रजूतम्” ऋ०१।११८।९। “इन्द्रजूतं इन्द्रेण जूतं दत्तम्” भा०।

जूति स्त्री जु–रंहसि भावे क्तिन् ऊतियूतीत्यादिना नि०। १वेगे अमरः। “उत स्मास्य पनयन्ति जना जूतिं कृष्टिप्रो अभिभूतिमाशोः” ऋ० ४।३८।९ “मनो जूतिर्जुषताम् आज्यस्य” यजु०२।१६। “जूतिः जवतेर्गतिकर्मणः” वेददी०। अत्र मनो ज्योतिः इति पाठः प्रामादिकः। मेधा दृष्टिर्द्युतिर्मतिर्मनीषा जूतिः स्मृतिः” ऐ० उ० “जूतिर्जवतो रुजादिदुःखित्वाभावः”२भाष्योक्तार्थे च।

जूतिका स्त्री जूत्या कायति कै–क। कर्पूरभेदे राजनि०।

जूर वयोहानौ अक० बधे सक० दिवा० आत्म० सेट्। जूर्य्यते अजूरिष्ट। ईदित्। जूर्णः। कोपे च “इच्छाविभङ्गाकुलमानसत्वात् भर्त्रे मखेभ्यश्च चिरं जुजूरे” भट्टिः।

जूर्ण पु० जूर–क्त। (उलुखड़) तृणभेदे रत्नमालायां जूर्णाख्येति तत्पर्य्याये निर्द्देशात् तस्य तथात्वम्। जूर्णेति आख्या यस्य जूर्णाख्योऽप्यत्र।

जूर्णाह्वय पु० जूर्णमाह्वयते आख्यत्वेन स्पर्द्धते आ+ह्वे–बा० श। देवधान्ये (देधान) हेमच०

जूर्णि स्त्री ज्वर–रोगे नि०ऊठ् जूर–वेगे वा नि०।१स्त्रीरोगे २वेगे।३आदित्ये ४देहे ५ब्रह्मणि च संक्षि०उणा०। जूर कोपे नि०। ६क्रोधे निघण्टुः निरुक्ते ६।४।२। “अग्नास्त्विक्षिरन्या दर्शिता“जूर्णिर्जवतेर्वा द्रवतेर्वा दुनोतेर्वा”तत्र पृषो०। तेन ७वेगयुते ८द्रवयुते ९तापके च। “क्षिप्रा जूर्णिर्न वक्षति” ऋ०।।१२९।८। “जूर्णिर्वेगवती सेना” भा०। १०स्तुतिकुशले च। “ऋषूणां जूर्णिर्होता ऋषूणाम्” ऋ०१।१२७।१०। “जूर्णिः स्तुतिकुशलः” भा०।

जूर्त्ति स्त्री ज्वर–भावे क्तिन् ऊठ्। ज्वरे।

जूर्य्य त्रि० जूर–कर्त्तरि बा०ण्यत्। १जीर्णे “रयः पुरोव जूर्य्यः” ऋ० ६।२।७। “जूर्य्यः जीर्णः” भा० २छद्रे च।

जूष बधे भ्वा० उभ०सक०सेट्। जूषति ते अजूषीत् अजूषिष्ट जुजूष षे। जूषः।

जूष पुंन० यूष+पृषो०। मुद्गादिक्वाथे भरतः।

जूषण न० जूष–ल्यु। वृक्षभेदे (धाइफुल) शब्दच०।

जॄ वयोहानौ भ्वा० पर० अक० अनिट्। जरति अजारीत् जजार।

जृभ जृम्भे (हाइतोला) गात्रविनामे च भ्वा० आत्म०अक० सेट् इदित्। जृम्भते अजृम्भिष्ट। जजृम्भे। “आत्मानमाधाय मधुर्जजृम्भे” कुमा० जृम्भा जृम्भः। जृम्भितः। “जृम्भते सुकुराधीना बाला गर्भभरालसा” सा० द०।

जृभ जृम्भणे भ्वा० आ० अक० सेट्। जृभते अजृभिष्ट जजृभे। ईदित्। जृब्धः।

जृम्भ पुंन०जृभि–भावे घञ् अर्द्धर्चा०(हाइतोला)१गात्रविनामोत्पादके २मुखविकाशकारके च व्यापारभेदे। भावे अ। तत्रार्थे स्त्री। जृम्भा च श्रमगर्भादिजनितजाड्यकार्य्या यथाह सा०द०“आलस्यश्रमगर्भाद्यैर्जाड्यं जृम्भासितादिकृत्” तत्कारकवायुश्च देवदत्तः। “विजृम्भणे देवदत्तः शुद्धस्फटिकसन्निभः” पदार्थादर्शे योगार्णवः। “क्षुतोत्पतनजृम्भासु जीवोऽस्तीत्याह्वं शिष्यानः गुरोरपि च कर्त्तव्यमन्यथा ब्रह्महा भवेत्”तिथित०। ३विकाशे ४विस्फारे च पु० शब्दच०। “पीत्वैकं श्वासमानिलः पुनस्त्यजति वेगवान्। आलस्यनिद्रायुक्तस्य स जृम्भ इति कथ्यते” “जृम्भात्यर्थं समीरणात्। जृम्भावेगे समुत्पन्ने शोभने शयने नरम्। स्वापयेत् तेन नियमात् जृम्भावेगः प्रशाम्यति। जृम्भावेगक्षयं याति कटुतैलेन मर्द्दनात्। भोजनात् स्वादुभोज्यानां तथा ताम्बूलभक्षणात्”वैद्यकम्।

जृम्भक त्रि० जृम्भ–ण्वुल्। १जृम्भाकारके २रुद्रगणभेदे पु०

"पृष्ठतोऽनुययौ यान्तं वरदं वृषभध्वजम्। जृम्भकैर्यक्षरक्षोभिः स्रग्विभिः समलङ्कृतैः। यात्यमोघो महायक्षो दक्षिणं पक्षमाश्रितः" भा० व० २३०अ०। जृम्भयति जृम्भि—ण्वुल्। ३कृशाश्वमुनितनये ४तदधिष्ठिते अस्त्रभेदे च "कृशाश्वतनयप्रायास्त्राणि विश्वामित्रेण रामाय दत्तानि तत्कथा रामा० बा० २८अ०।

"संहारान् व्याजहाराथ धृतिमान् सुव्रतः शुचिः। सत्यवन्तं सत्यकीर्त्तिं धृष्टं रभसमेव च। प्रतिहारतरं नाम पराङ्मुखमवाङ्मुखम्। लक्ष्यालक्ष्याविमौ चैव दृढनाभसुनाभकौ। दशाक्षशतवक्त्रौ च दशशीर्षशतोदरौ। पद्मनाभमहानाभौ दुन्दुनाभसुनाभकौ। ज्योतिषं शकुनञ्चैव नैराश्यविमलावुभौ। यौगन्धरविनिद्रौ च दैत्यप्रमथनौ तथा। शुचिबाहुर्महाबाहुर्निष्कलिर्विरुचस्तथा। सार्चिमाली धृतिमाली वृत्तिमान् रुचिरस्तथा। पित्र्यः सौमनसश्चैव विधूतमकरावुभौ। करवीरं रतिञ्चैव धनधान्यौ च राघव!। कामरूपं कामरुचिं मोहमावरणं तथा। जृम्भकं सर्पनाथं च पन्थानवरुणौ तथा। कृशाश्वतनयान् राम! भास्वरान् कामरूपिणः। प्रतीच्छ मम भद्रन्ते पात्रभूतोऽसि राघव!। बाढमित्येव काकुत्स्थः प्रहृष्टेनान्तरात्मना। दिव्यभास्वरदेहाश्च मूर्त्तिमन्तः सुखप्रदाः। केचिदङ्गारसदृशाः केचिद्धूमोपमास्तथा। चन्द्रार्कसदृशाः केचित् प्रह्वाञ्जलिपुटास्तथा। रामं प्राञ्जलयो भूत्वाऽब्रुवन् मधुरभाषिणः। इमे स्म नरशार्दूल! शाधि किङ्करवाम ते। गम्यतामिति तानाह यथेष्टं रघुनन्दनः। मनसा कार्य्यकालेषु साहाय्यं मे करिष्यथ। अथ ते राममामन्त्र्य कृत्वा चापि प्रदक्षिणम्। एवमस्त्विति काकुत्स्थमुक्त्वा जग्मुर्यथागतम्" २८अ०। स्वार्थे क अत इत्वम्। ४जृम्भायां स्त्री(हाइतोला)सा च इन्द्रवृत्रयोर्युद्धे इन्द्रहितार्थं देवैः सृष्टा ततः प्रभृति लोकप्राणवायुसंस्था यथाह भा० उ० ८अ० "ततो जगाह देवेन्द्रं वृत्रो वीरः शतक्रतुम्। अपावृत्यात्मपन्नं शक्रं कोपसमन्वितः। ग्रस्ते वृत्रेण शक्रे तु सम्भ्रान्तास्त्रिदिवेश्वराः। असृजंस्ते महासत्त्वा जृम्भिकां वृत्रनाशिनीम्। विजृम्भमाणस्य ततो वृत्रस्यास्यादपावृतात्। स्वान्यङ्गान्यभिसंक्षिप्य निष्क्रान्तो बलनाशनः। ततः प्रभृति लोकस्य जृम्भिका प्राणसंस्थिता"।

जृम्भण न० जृभि—भावे ल्युट्। (हाइतोला) १गात्रवैचित्र्यापादके २सुखविकाशकारके च व्यापारभेदे। "सुकुसुमकुसुमजृम्भणतत्पराणि—"व्युत्क्रान्तमक्षुः प्रमदाजनस्य करोति लावण्यरसोत्सुकानि" ऋतुसं० "जगदुत्पादितां दृष्ट्वा तां जृम्भणाख्यां तनुं प्रभोः" भाग०३।२०।४२। जृभि—णिच्—ल्यु। २जृम्भणकारिणि ३जृम्भकास्त्रे च "जृम्भणं नाम सोऽप्यस्त्रं जग्राह पुरुषोत्तमः। हरं स जृम्भयामास क्षिप्रकारी महाबलः" हरिवं० १८४ अ०। "जृम्भणं पातनञ्चैव त्वाष्ट्रञ्चापि सुदारुणम्" २२४ अ०।

जृम्भिणी स्त्री जृभि—णिनि। एलापर्ण्याम् शब्दच०।

जृम्भित त्रि० जृभि—क्त। १चेष्टिते २प्रवृद्धे च भावे क्त। ३जृम्भायाम् ४स्फुटने हेमच० स्त्रीणां ५करणभेदे न० मेदि०।

जॄ जरायां दिवा० पर० अक० सेट्। जीर्य्यति इरित्। अजरत् अजारीत्। जीर्णः। षित्। जरा। घटादि०। जरयति। "या न जीर्य्यति जीर्य्यतः" नीतिमा०। जीर्य्यते रत्नम्। जरन्। जजार। जरीता जीर्णः। "जरितॄणां सतां भुवः स्तुतये" वामदेव्यगानमन्त्रः।

जॄ जरायां वा चुरा० उभ० पक्षे क्र्यादि० प्वादि० अक० सेट्। घटा०। जरयति ते अजीजरत् त। जृणाति। इरित् अजरत्-अजारीत्।

जेतृ त्रि० जि—तृच्। जयशीले। "जेता नृभिः इन्द्रः पृत्सु" ऋ० १।१७८।३। "जेतारं लोकपालानां स्वमुखैरर्चितेश्वरम्" रघुः। स्त्रियां ङीप्। २विष्णौ पु०। "अनघो विजयो जेता" विष्णुस०। "जयत्यतिशेते सर्वभूतानि" इति जेता" भा०।

जेतव्य त्रि० जि—कर्मणि तव्य। जेये "जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके" अमरः।

जेत्व त्रि० जि—त्वनिप् वेदे नि० दीर्घस्यापि ह्रस्व। जेतव्ये। "अस्माकमिन्द्र जयतु जेत्वानि" ऋ०।४७।२६। "जेत्वानि जेतव्यानि" भा०।

जेन्ताक न० स्वेदसेवनार्थं गृहभेदे (भापराजओयार घर) तन्निर्मितिप्रकारोऽभिहितश्चरके यथा

"अथ जेन्ताकं चिकीर्षुर्भूमिं परीक्षेत। तत्र पूर्वस्यां दिश्युत्तरस्यां वा गुणवति प्रशस्ते भूमिभागे कृष्णमृत्तिके सुवर्णमृत्तिके वा परीवापपुष्करिण्यादीनां जलाशयानामन्यतमस्य कूले दक्षिणे पश्चिमे वा सूपतीर्थे समसुविभक्तभूमिभागे सप्ताष्टौ वा अरत्नीरुपक्रम्योदकात् प्राङ्मुखमुदङ्मुखं वाभिमुखतीर्थं कूटागारं कारयेत्। उत्सेधविस्तारतः परमरत्नीः षोडश समन्तात् सुवृत्तं मृत्-

कर्म्म सम्यङ्मनेकवातायनम्। अस्य कूटागारस्यान्तः सम-न्ततो भित्तिमरत्निविस्तारोत्सेधां पिण्डिकां कारयेत् कपाटवर्जम्। मध्ये चास्य कूटागारस्य चतुष्किष्कुमात्रं पुरुषप्रमाणं मृण्मयं कन्दुसंस्थानं बहुसूक्ष्मच्छिद्रमङ्गारकोष्ठकस्तम्भं सपिधानं कारयेत्। तत्र खादिराश्वकर्णादीनां वा काष्ठानां पूरयित्वा प्रदीपयेत्। स यदा जानीयात् साधुदग्धानि काष्ठानि गतधूमानि अवतप्तञ्च केवलमग्निना तदग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति तत्रैनं पुरुषं वातहराभ्यक्तगात्रं वस्त्रावच्छन्नं प्रवेशयेत् प्रवेशयंश्चैनमनुशिष्यात्। सौम्य! प्रविश कल्याणायारोग्याय चेति। प्रविश्य चैनां पिण्डिकामधिरुह्य पार्श्वापरपार्श्वाभ्यां यथासुखं शयीथाः न च त्वया स्वेदमूर्च्छापरीतेनापि सता पिण्डिकैषा विमोक्तव्या आ प्राणोच्छ्वासात्। भ्रश्यमानो ह्यतः पिण्डिकावकाशात् द्वारमनधिगच्छन् स्वेदमूर्च्छापरीततया सद्यः प्राणान् जह्याः तस्मात् पिण्डिकामेनां न कथञ्चन मुञ्चेथाः त्वं यदा जानीयाः विगताभिष्यन्दमात्मानं सम्यक्प्रस्रुतस्वेदपिच्छं सर्वस्रोतोविमुक्तं लघुभूतमपगतविबन्धस्तम्भसुप्तिवेदनागौरवमिति। ततस्तां पिण्डिकामनुसरन् द्वारं प्रपद्येथाः। निष्क्रम्य च न सहसा चक्षुषोः परिपालनार्थं शीतोदकमुपस्पृशेथाः। अपगतसन्तापक्लमस्तु मुहूर्त्तात् सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नीथाः" अस्य स्वेदार्थकता शब्दकल्पद्रुमे उक्ता चिन्त्या "भूगृहेषु च जेन्ताके कूपगर्भगृहेषु च। विधूमाङ्गारतप्ते ष्वभ्यक्तः स्विद्यति ना सुखम्" इति आधारभूपगृहादिसाहचर्य्यात् गृहभेदस्यैवोपक्रमात्। उपसंहारे च इति जेन्ताकस्वेद इति कीर्त्तनं सप्तमीतत्पुरुषपरम्। इति जेन्ताकः स्वेद इति सविसर्गपाठोऽनाकरः।

जेन्य त्रि॰जि—जन+णिच्—वा बा॰डेन्य। १जयशीले "अग्निर्मर्त्तेषु जेन्यो न विश्पतिः" ऋ॰१।१२८।७। "जेन्यः जयशीलः" भा॰। २उत्पाद्ये च "जनिष्ट हि जेन्यो अग्रे अह्नाम्" ऋ॰५।१।५। "जेन्य उत्पाद्यः" भा॰ ३जेतव्ये च "दुग्धं पयो वृषणा जेन्यावसू" ऋ॰७।७४।२। "जेन्यं वसु धनं ययोः। वेदे पूर्वपददीर्घः। "जेन्यावसू जेतव्यधनौ" भा॰। "गतं देवेभिर्जेन्यावसू" ऋ॰ ८।२८।७।

जेमन् त्रि॰जि—मनिन्। १जयशीले "उदस्थाजेव जेमना मदेरु" ऋ॰ १०।१०६।६। "जेमना जयशीलौ" औणादिके लोपश्छान्दसो दीर्घाभावश्च। लोके तु जेमा जेमानौ इत्येव। जेतुर्भावः इमनिच् तृणो लोपः। २जेतृभावे जये च ३जयसामर्थ्ये पु॰। "जेमा च महिमा च मे" यजु॰ १८।४।

जेमन न॰जिम—भावे ल्युट्। भक्षणे अमरः।

जेय त्रि॰ जि—कर्म्मणि यत्। जेतव्यमात्रे अमरः। "दैवैरजेया निर्जिताश्चार्जुनेन। तदा नाशंसे विजयाय सञ्जय!" भा॰ आ॰ १अ॰ "विग्रहस्य गतं नु कौन्तेय! जेयः क्षितिपतिस्तदा" भा॰ आश्र॰ ६अ॰।

जेष गतौ भ्वा॰ आत्म॰ सक॰ सेट्। जेषते अजेषिष्ट ऋदित् अजिजेषत् त। "अपां तोकस्य तनयस्य जेषे" ऋ॰ १।११०।११।

जेह यत्ने भ्वा॰ आत्म॰ अक॰ सेट्। जेहते अजेहिष्ट। ऋदित् अजिजेहत् त। "पातङ्गमयो जेहमानम्" ऋ॰ १।११०।५ "जेहमानं प्रयतमानम्" भा॰। निरुक्ते अस्य गतिकर्मतोक्ता "दृष्टानपर्वाञ्जेहमानस्य" ऋ॰ १०।२।६। क्वचित् व्याप्त्यर्थताऽपि "सुगेभिरध्वभिर्जेहमानं पतन्ति" ऋ॰१।१६३।६। "जेहमानं यथदेशं व्याप्नुवत्" भा॰। गत्यर्थकधातोः प्राप्त्यर्थकत्वात् प्राप्त्यर्थतापि। "ये तातृषुर्देवत्रा जेहमानाः" ऋ॰१०।१५।८। "जेहमानाः प्राप्ताः" भा॰। [ ओदित् जामः।

जै क्षये भ्वा॰ पर॰ अक॰ अनिट्। जयति। अजासीत्।

जैगीषव्य पु॰ जिगीषोरपत्यं गर्गा॰ यञ्। योगविदि मुनिभेदे तत्कथा भा॰ श॰ ५१ अध्याये शा॰ पर्वणि च २२५ अ॰ दृश्या। "असितो देवलश्चैव जैगीषव्यश्च तत्त्ववित्" भा॰ शा॰ ११ अ॰। स्त्रियां लोहिता॰ नित्यं ष्फ षित्त्वात् ङीष्। जैगीषव्यायणी।

जैत्र त्रि॰ जेतैव जेतृ+प्रज्ञादि॰ अण्। १जयशीले अमरः। २पारदे पु॰ ३औषधे न॰ राजनि॰। "रथाय जैत्रः प्रदिशन्ति ख्याम्" किरा॰ "शरीरिणा जैत्रशरेण यत्र" माघः। "दोष्कृतभुजाकृष्टौ जैत्रमध्यास्त राघवः" रघुः। ततस्तदर्थ्यां कर्षा॰ फञ्। जैत्रायणि जैत्रादूरदेशादौ त्रि॰।

जैत्ररथ त्रि॰ जैत्रो रथोऽस्य। जयशीले हला॰।

जैत्री स्त्री जेत्रेव जेतृ+स्वार्थे अण् ङीप्। जयन्तीवृक्षे। शब्दर॰। [ द्रुपासके च।

जैन पु॰जिन एव, जिनो देवतास्य वा अण्। १अर्हति २अर्हजैपाल पु॰ जयपाल+पृषो॰। जयपालवृक्षे हिङ्गुपकोषः

जैमिनि पु॰ मुनिभेदे स च सामवेदे वेदव्यासशिष्यः यथाह भाग॰ १२।६।८। "साम्नां जैमिनये प्राह तथा छन्दो-

गतं हितम्" स च धर्ममीमांसां प्रणीतवान्। तच्च शास्त्रं द्वादशाध्यायात्मकम्। तत्प्रतिपाद्यविषयाश्चाधिकरणमालायां माधवाचार्य्येण संगृहीता यथा

"धर्मो द्वादशलक्षण्या व्युत्पाद्यस्तत्र लक्षणैः। प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः। अधिकारोऽतिदेशश्च सामान्येन विशेषतः। ऊहोऽबाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात्"। "लक्षणान्यध्यायाः। द्वादशानां लक्षणानां समाहारो द्वादशलक्षणी। तादृश्या द्वादशाध्यायोपेतस्य शास्त्रस्य धर्मो विषयः। प्रमाणादयः प्रसङ्गान्ता द्वादश पदार्थाः क्रमाद्द्वादशानामध्यायानां विषयाः। तत्र प्रथमेऽध्याये विध्यर्थवादादिरूपं धर्मे प्रमाणं निरूपितम्। द्वितीये यागदानादिकर्मभेदः। तृतीये प्रयाजादीनां दर्शपूर्णमासाद्यर्थत्वेन तच्छेषत्वम्। चतुर्थे गोदोहनस्य पुरुषार्थत्वप्रयुक्त्यनुष्ठानम् न तु क्रत्वर्थत्वप्रयुक्त्येत्यादयः। पञ्चमे क्रमनियतिविशेषत्वादयः। षष्ठे कर्तुरधिकारो नान्धादेरित्यादयः। सप्तमे सत्रान्यस्तरणेनेत्यादिप्रत्यक्षवचनेनाग्निहोत्रादिनामानुमितवचनेन च सामान्यतोऽतिदेशः। अष्टमे सौर्य्यं चरुं निर्वपेदित्यत्र निर्वापसङ्गतेन देवतानिर्देश एकदेवतात्वमौषधद्रव्यकत्वमित्यादिलिङ्गेनाग्नेयपुरोडाशेतिकर्त्तव्यतैव नान्यस्येत्येवमादिविशेषतोऽतिदेशः। नवमे प्रकृतावग्नये जुष्टं निर्वपामीति पठिते मन्त्रे विकृतौ सौर्य्यचरावग्निपदपरित्यागेन सूर्य्यपदप्रक्षेपेण च सूर्याय त्वा जुष्टं निर्वपामीत्येवमादूहः। दशमे कृष्णलेषु चोदकप्राप्तस्यावघातस्य वितुषीकरणाभावेन लोप इत्येवमादिबाधः। एकादशे वह्निनामाग्न्यादीनां प्रधानानां सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकार इत्यादि तन्त्रम्। द्वादशे प्रधानस्य पशोरुपकारायानुष्ठितेन प्रयाजाद्यङ्गेन पशुपुरोडाशेऽप्युपकार इत्यादिप्रसङ्गः। पादानामसाधारणं विषयं दर्शयति" "विध्यर्थवादमन्त्रस्मृतयोनाम चेति चतुर्विधम्। प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम्"। "प्रथमे पादे विधिरूपं मानमीरितम्। द्वितीयेऽर्थवादरूपम्। अर्थवादो मन्त्रस्याप्युपलक्षणम्। तृतीये स्मृतिरूपम्। स्मृतिराचारमप्युपलक्षयति। चतुर्थे उद्भिदादिनामरूपम्" "उपोद्घातः कर्मभेदमानं तस्यापवादगीः। प्रयोगभेद इत्येते द्वितीयाध्यायपादगाः"।

द्वितीयाध्यायस्य प्रथमे पादे आख्यातमेवापूर्वबोधकमपूर्वसद्भाव इत्यादिकः कर्मभेदचिन्तोपयुक्त उपोद्घातो वर्णितः। द्वितीये धातुभेदपुनरुक्त्यादिभिः कर्मभेदः। तृतीये रथन्तरादीनां कर्मभेदप्रामाण्यापवादः। चतुर्थे नित्यकाम्ययोः प्रयोगयोर्भेदः"। "श्रुतिर्लिङ्गं च वाक्यादि विरोधप्रतिपत्तयः। अनारभ्योक्तिबह्वर्थस्वाम्यर्था अष्टपादगाः"। "तृतीयाध्यायस्य प्रथमे पादे शेषत्वबोधकानां श्रुतिलिङ्गादीनां मध्ये श्रुतिर्विचारिता। द्वितीये लिङ्गम्। तृतीये वाक्यप्रकरणादि। चतुर्थे निवीतोपवीतादिष्वर्थवादत्वविधित्वादिनिर्णयहेतुः श्रुत्यादेः परस्परविरोधसद्भावः। पञ्चमे प्रतिपत्तिकर्माणि। षष्ठेऽनारभ्याधीतानि। सप्तमे बहुप्रधानोपकारकप्रयाजादीनि। अष्टमे याजमानानि"। "प्रधानस्य प्रयोक्तृत्वमप्रधानप्रयोक्तृता। फलचिन्ता जघन्याङ्गचिन्तेत्येते चतुर्थगाः"। चतुर्थाध्यायस्य प्रथमे पादे प्रधानभूतामिक्षा दध्यानयनस्य प्रयोजिकेत्यादिप्रधानप्रयोक्तृत्वं विचारितम्। द्वितीये त्वप्रधानं वत्सापाकरणं शाखाच्छेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वम्। तृतीये जुहूपर्णमयीत्वादेरपापश्लोकश्रवणादिफलभावाभावचिन्ता। चतुर्थे राजसूयगतजघन्याङ्गाक्षद्यूतादिचिन्ता"। "श्रुत्यादिभिः क्रमस्तस्य विशेषो वृद्ध्यवर्धने। श्रुत्यादेर्बलता चेति पञ्चमाध्यायपादगाः"। "पञ्चमाध्यायस्य प्रथमे पादे श्रुत्यर्थपाठादिभिः क्रमो निरूपितः। द्वितीये वाजपेयगतेषु सप्तदशसु पशुष्वेकैकधर्मसमापनमित्यादि क्रमविशेषः। तृतीये पञ्चप्रयाजादीनामावर्त्तनेनैकादशत्वमित्यादिवृद्धिः। अदाभ्यग्रहाग्रयोरनावृत्तिरित्यादि वृद्ध्यभावः। चतुर्थे क्रमनियामकानां श्रुत्यर्थपाठादीनां प्रबलदुर्बलभावः। "अधिकारी तस्य धर्माः प्रतिनिध्यर्थलोपने। दीक्षा सत्रं देयवह्नी षष्ठे पादेष्वमी स्थिताः"। षष्ठाध्यायस्य प्रथमे पादे कर्माधिकारः कर्तुरन्धत्वादेर्नास्ति स्त्रिया अस्ति योऽस्ति स च पत्या सहेत्येवमादिनाधिकारी निरूपितः। द्वितीये सत्राधिकारिणां प्रत्येकं कृत्स्नं फलम्। दर्शपूर्णमासयोः कालैक्यनियमः। काम्यकर्म समापनीयमित्येवमादयोऽधिकारिधर्मा उक्ताः। तृतीये द्रव्यस्य प्रतिनिधिरस्ति। देवादीनामग्न्यादीनामधिकारिणश्च न नास्तीत्यादिना निरूपणम्। चतुर्थे पदार्थलोपनं विचारितम्। अवत्तनाशे सत्याज्येन यजेत। इडार्थनाशे सति शेषात् प्राश्यमित्यादिकम्। पञ्चमे कालापराधेन चन्द्रोदये सत्यभ्युदयेष्टिः प्रायश्चित्तम्।

ज्योतिष्टोमस्यैकादयो दीक्षाः। द्वादशाहस्य द्वादशदीक्षा इत्यादि निरूपितम्। षष्ठे सत्राधिकारिणस्तुल्यकल्पा एव। सत्रं विप्रस्यैवेत्येवमादिकं चिन्तितम्। सप्तमे पुत्रादिकं न देयम् महाभूमिर्न देयेत्येवमादिदेयविचारः। अष्टमे लौकिकाग्नावुपनयनहोमः, स्थपतीष्टिस्त्वग्नावेवेत्येवमाद्यग्निविचारः कृतः"। "प्रत्यक्षोक्तातिदेशोऽस्य शेषः नामनिरूपणम्। नामलिङ्गातिदेशौ द्वौ सप्तमाध्यायपादगाः"। "सप्तमाध्यायस्य प्रथमे पादे समानमितरच्छ्येनेनेत्यादि प्रत्यक्षवचनातिदेशः। द्वितीये रथन्तरशब्देन गानमात्राभिधायिना गानस्यैवातिदेशस्त्वमित्येतादृशः पूर्वोक्तातिदेशस्य शेषो विचारितः। तृतीयेऽग्निहोत्रनामातिदेशः। चतुर्थे निर्वापौषधद्रव्यादिलिङ्गातिदेशः"। "स्पष्टलिङ्गाद्यथास्पष्टात् प्रबलादपवादतः। अतिदेशविशेषाः स्युरष्टमाध्यायपादगाः"। "अष्टमाध्यायस्य प्रथमे पादे स्पष्टेन लिङ्गेनातिदेशविशेषः। तद्यथा सौर्यचरावतिदेशकानि निर्वापस्तद्धितेन देवतानिर्देश एकदेवतात्वमौषधद्रव्यकत्वमित्यादीनि स्पष्टान्याग्नेयलिङ्गानि। द्वितीये त्वस्पष्टैर्लिङ्गैरतिदेशः। तद्यथा वाजिने हविःसामान्येन लिङ्गेन पयोविध्यन्तोऽतिदिश्यते। तत्र लिङ्गमस्पष्टम् शीघ्रं तद्द्रवत्वात्तत्पादनात्। तृतीये प्रबलेन लिङ्गेनातिदेशः। तद्यथा आभिचारिकेष्टावाग्नावैष्णवसारस्वतबार्हस्पत्येषु हविःषु त्रित्वेन लिङ्गेन यथाक्रममाग्नेयादिविध्यन्ते प्राप्ते द्विदेवत्यत्वेन लिङ्गेन प्रथम आग्नावैष्णवे तृतीयस्याग्नीषोमीयस्य विध्यन्तोऽतिदिष्टः। प्रबलं च द्विदेवत्यत्वम् शब्दोच्चारणमात्रेण सहसा प्रतिभासात् क्रमस्तु विलम्बितप्रतीत्या दुर्बलः। चतुर्थे दर्विहोमेष्वतिदेशोऽपोद्यते"।

"ऊहारम्भोऽथ सामोहो मन्त्रोहस्तत्प्रसङ्गतः। नवमाध्यायपादेषु चत्वारस्ते प्रकीर्त्तिताः"। "नवमाध्यायस्य प्रथमे पादे उपोद्घातपूर्वकमूहविचारप्रारम्भः। तत्र प्रयाजादयो धर्मा अपूर्वप्रयुक्ताः। अवघातमन्त्रादिष्वविवक्षितं व्रीह्यग्न्यादिस्वरूपं साधनविशेषत्वमात्रं विवक्षितमित्याद्युपोद्घातः। सवितृश्रिपूषशब्दानां विकृतिषु नास्त्यूहः। अग्निशब्दस्यास्त्यूह इत्यादिकऊहविचारारम्भः। द्वितीये सपरिकरः सामोहः। तृतीये मन्त्रोहः। चतुर्थे मन्त्रोहप्रसङ्गापतितो विचारः"। "द्वारलोपोऽस्य विस्तारः कार्य्यैकत्वं समुच्चयः। ग्रहसामप्रकीर्णानि नञर्थश्चाष्टपादगाः"। "दशमाध्यायस्य प्रथमे पादे बाधहेतुर्द्वारलोपो निरूपितः। तद्यथा स्वयंकृता वेदिर्भवतीत्यत्र वेदिनिष्पादनरूपस्य द्वारस्य लोपेन निष्पादकानामुद्धननादीनां बाधः। कृष्णलेषु वितुषीकरणरूपस्य द्वारस्य लोपेनावघातस्य बाधः। द्वितीये संक्षेपेणोक्तस्य द्वारलोपस्य बहुभिरुदाहरणैर्विस्तारः। तृतीये बाधकारणं कार्य्यैकत्वम्। तद्यथा प्रकृतौ गवाश्वादिदक्षिणाया ऋत्विक्परिक्रयः कार्य्यः। तथा विकृतिरूपे भूनाम्न्येकाहे धेनुरूपायास्तदेव कार्य्यम्। अतो धेन्वा गवाश्वादि दक्षिणा विकृतौ चोदकप्राप्ता बाध्यते। चतुर्थे नक्षत्रेष्टिविहिता उपहोमाश्चोदकप्राप्तैर्नारिष्टहोमैः सह समुच्चीयन्त इत्यादि समुच्चयः। पञ्चमे षोडशिग्रहः प्रकृतिगामी। स चाग्रयणपात्रादेव ग्रहीतव्य इत्यादिर्बोधप्रसङ्गागतो ग्रहादिविचारः। षष्ठे साम तृचे गेयमित्यादिर्बोधप्रसङ्गागतः सामविचारः। सप्तमे पश्वङ्गेषु हविर्भेदः। अश्वमेधीयमपूर्वकर्मेत्यादिर्बोधप्रसङ्गागतः प्रकीर्णविचारः। अष्टमे नानुयाजेष्विति पर्युदासो न सोम इत्यर्थवादो नातिरात्र इति प्रतिषेध इत्यादिर्बोधोपयुक्तो नञर्थविचारः"।

"उपोद्घातस्तथा तन्त्रावापौ तन्त्रस्य विस्तृतिः। आवापविस्तृतिश्चैकादशाध्यायस्य पादगाः"। "एकादशाध्यायस्य प्रथमे पादे तन्त्रस्योपोद्घातो वर्णितः। द्वितीये तन्त्रावापौ संक्षेपेणोक्तौ। तृतीये तन्त्रमुदाहरणबाहुल्येन प्रपञ्चितम्। चतुर्थे त्वावापः प्रपञ्चितः"। "प्रसङ्गस्तन्त्रनिर्णीतिः समुच्चयविकल्पने। द्वादशाध्यायपादार्था इति पादार्थसंग्रहः"। द्वादशाध्यायस्य प्रथमे पादे पशुधर्माणां पशुपुरोडाशे प्रसङ्गः लौकिकवेदेश्वरकालीनकर्मसु प्रसङ्ग इत्यादि विचारः। द्वितीये सवनीयपशोस्तन्त्रित्वम् न तु सवनीयपुरोडाशानाम्। विकृतिस्तन्त्रिणी न प्रकृतिः आरम्भणीया विकृतिष्वपि स्यात् न तु प्रकृतावेवेत्यादिविचारः। तृतीये त्वचनासयोः समुच्चयः। आघारगताघारत्वमन्तत्वादीनां समुच्चय इत्यादिकं प्राधान्येन यवव्रीह्योर्विकल्प इत्यादिकं समुच्चयापवादत्वेनोभयं चिन्तितम्। चतुर्थे त्वैन्द्रावार्हस्पत्ययाज्यानुवाक्यायुगलयोर्विकल्प इत्यादिकं प्राधान्येन याज्यानुवाक्ययोः समु-

च्य इत्यादिकं विकल्पापवादत्वेनेत्युभयं चिन्तितम्। तदेवं द्वादशाध्यायगतेषु षष्टिसंख्यकेषु पादेषु प्रतिपाद्या अर्थाः संगृहीताः। ननु यथोक्तेभ्यः पादार्थेभ्योऽन्ये-ऽप्यर्था बहवस्तत्तत्पादेषु विचार्यन्ते तेषां कथं तत्तत्पादान्तर्भाव इत्याशङ्क्याह" "उपोद्घातापवादाभ्यां प्रसङ्गानुप्रसङ्गतः। तत्तत्पादगतत्वेन विचारान्तरसम्भवेत्" "यथोक्तपादप्रतिपाद्यादन्येष्वर्थेषु यथोचितं कश्चिदुपोद्घातः कश्चिदपवादः कश्चित् प्रसङ्गपतितः कश्चिदनुप्रसङ्गपतित इत्येवं पादान्तर्भाव ऊहनीयः"। जैमिनिश्च भारतान्तरं चकार तस्य जैमिनिभारतेति संज्ञा तन्नामस्मरणे च वज्रपातभयवारणं यथा "जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च। पुलस्त्यः पुलहश्चैव पञ्चैते वज्रवारकाः" शब्दकल्पद्रुमधृतपुराणवाक्यात् "मुनेः कल्याणमित्रस्य जैमिनेश्चापि कीर्त्तनात्। विद्युदग्निभयं नास्ति पठिते च गृहोदरे" इत्युक्तेरपि तत्कीर्त्तनस्य विद्युदग्निभयनिवारकता। तत इदमर्थे अ। जैमिनीय जैमिनिप्रणीतशास्त्रादौ। "जैमिनीये च वैयासे विरुद्धांशो न कश्चन" माधवाचार्यवचनभाष्यधृतपराशरोपपु०। "जैमिनीयन्यायमाला श्लोकैः संगृह्यते स्फुटम्" माधवः।

जैव त्रि० जीवस्येदम् अण्। १आत्मसम्बन्धिनि २बृहस्पतिसम्बन्धिनि ३तत्क्षेत्रे धनूराशौ मीनराशौ तदधिदेवताके ४पुष्यनक्षत्रे। ५तद्दिने पाते च "सताद्रिचन्द्राः जैवस्य निरक्षाद्यास्य भगोलयो" सू० सि०।

जैवन्तायन पुंस्त्री जीवन्तस्य गोत्रापत्यं वा फञ्। जीवन्तर्षेः गोत्रापत्ये। स च यजुर्वेदप्रचारकवंशान्तर्गतः। यथाह "जैवन्तायनाच्च रैभ्याच्च रैभ्यः" शत० ब्रा० १४।७।३।२६भाष्ये दृश्य। जैवन्ति तत्रार्थे स्त्रियां ङीप्।

जैवन्तायनि त्रि० जीवन्ताद्यदूरदेशादि कर्णा० चतुरर्थ्यां फिञ्। जीवन्तस्यादूरदेशादौ।

जैवलि पु० जीवलस्य राज्ञोऽपत्यम् इञ्। जीवलनृपापत्ये प्रवाहणे "तं ह प्रवाहणो जैवलिरुवाचानवद्दे किल ते पाञ्चाल्य। साम" छा० उ०।

जैवातृक पु० जीवयत्यनेन लोकं जीवति वा आतृ—कन्—इत्विञ्च। १चन्द्रे २कर्पूरे अमरः। ३पुत्रे संक्षिप्तसा०। ४औषधे हेम०। ५दीर्घायुष्के त्रि० मेदि०। "जैवातृक! ननु भूयते पतिरस्याः मिथिलायां प्रद्युम्नगनीत्" इत्यनु०। [जीवस्यादूरदेशादौ।

जैवि त्रि० जीवस्याद्यदूरदेशादि सुतङ्गमा० चतुरर्थ्यामिञ्।

जैवेय पुंस्त्री जीवस्य सुरोरपत्यं शुभ्रा० ढक्। जीवस्यापत्ये कचनामके मुनौ। जीवाया जीव्याः इदम् जीवात् ढक्। २जीवासम्बन्धिनि त्रि०।

जैह्माशिनेय पु० जिह्माशिनोऽपत्यं शुभ्रा० ढक् शाखिणना० नि० टिलोपः। जिह्माशिनोऽपत्ये।

जैह्म्य न० जिह्मस्य भावः ष्यञ्। कौटिल्ये। "जैह्म्यं मैथुनं पुंसि जातिभ्रंशकरं स्मृतम्" मनुः। "निमिषभक्षणं जैह्म्यकल्पमपि वचोऽन्ततम्। रजस्वलासुरास्वादः सुरापानसमानि तु" याज्ञ०।

जोङ्ग न० जुङ्गते वर्ज्यते जुगि—वर्जने कर्मणि अच् पृषो०। कालीयके गन्धद्रव्यभेदे हारा०।

जोङ्गक न० जुगि—ण्वुल् पृषो०। अगुरुचन्दने अमरः।

जोङ्गट पु० जुगि—अटन् पृषो०। गर्भिण्या अभिलाषे दोहदे (साद्) हारा०।

जोटिङ्ग पु० जट— इन् जोटिं गच्छति खा० ड नि०। १महादेवे २महाव्रतिनि च त्रिका०। [वि० को०।

जोड पु० जुड बन्धने घञ्। बन्धने। अधिजोडम्

जोन्ताला स्त्री जु—विच् तस्यान्तमालाति आ+ला—क। देवधान्ये हेमच०।

जोष पु० जुष—भावे घञ्। १प्रीतौ २सेवने च "को वां जोष उभयोः" ऋ० १।१२०।१। ३सुखे न० शब्दर०।

जोषण न० जुषी—प्रीतिसेवनयोः भावे ल्युट्। १प्रीतौ २सेवने च। स्वार्थे णिच्—भावे युच्। तत्रार्थे स्त्री "उत्तरे निगमाः यथेष्टं जोषणा स्मृतेः" कात्या०श्रौ०५।१२।१६।

जोषम् अव्य०जुष—बा०अम्। १तूष्णीमित्यर्थे "इति जोषमवस्थितं द्विषः" माघः। २सुखे च अमरः।

जोषा स्त्री जोषयति जुष—णिच्—अच्। १योषिति शब्दर० "चन्द्रेण जुषातोः कप्रत्ययान्तस्यायं व्युत्पादितः" उज्ज्वलदत्तः। [२योषिति च।

जोषिका स्त्री जु—ष संज्ञायां कन्। १जालिकायां शब्दर०।

जोषित् स्त्री जुष "कृसृदृभ्यिजु(षि)जुषिभ्यः" उणा० इति। योषाते शब्दर०। हलन्तत्वात् वा टाप्। जोषिताऽपि तत्रार्थे शब्दर०।

जोष्टृ त्रि० जुष—तृच् वेदे वा० इडभावः। सेवके। "उपेनमस्य जोष्टारः" ऋ०४।४।१।६।"जोष्टारः सेवकाः" भा०। लोके तु जोषितृ इत्येव।

जौमर न० जुमरेण निर्वृत्तः अण्। १जुमरनन्दिकृते संक्षिप्तसाराख्ये व्याकरणे २तदध्येतरि त्रि०।

जौलायन पु॰ जुबलायाः अपत्यम् इञ् तस्य इञन्तत्वात् यूनि फञ्। जुबलस्य यूनपत्ये। ततः ऐषुकार्य्या॰ विषयार्थे भक्तल्। जौलायनभक्त तदीयविषये त्रि॰।

जौहव त्रि॰ जुह्वामवदाने योग्यम् जुहू—अण्। जुहूपदार्थेऽवदानयोग्येषु हृदयादिषु "हृदयं जिह्वां क्रोडं सव्यसक्थिपूर्वनडकं पार्श्वे यकृद्वृक्कौ गुदमध्यं दक्षिणा श्रोणिरिति जौहवानि" कात्या॰ श्रौ॰ ६।७।६। "जुह्वामवदानयोग्यानि प्रधानयागसाधनानि" कर्कः।

ज्ञ पु॰ ज्ञा—क। १बुधग्रहे "ज्ञे सूर्य्यसुतज्ञाभ्यां चतुष्कारदार्णवाः" सू॰सि॰। २पण्डिते "क्रियासु वाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु न वध्यते ज्ञः" प्रश्नो॰। ३ब्रह्मणि ४मङ्गलग्रहे च धरणिः। इगु उपपदे तत्तत्पदार्थज्ञातरि त्रि॰। "आदेशं देशकालज्ञः" रघुः "विधिज्ञो विधिमास्थाय" ति॰ त॰। स्वार्थे क। ज्ञक ज्ञातरि त्रि॰ स्त्रियां वा अत इत्वम् ज्ञका ज्ञिका।

ज्ञप मारणे, आलोके, निशाने, तोषणे स्तुतौ च चुरा॰ उभ॰ सक॰ सेट् घटा॰। ज्ञपयति·ते अजिज्ञपत्-त। ज्ञाकम इत्यनेनैवेष्टसिद्धौ ज्ञपपाठः ण्यादिरभर्थवदीति मते फलवत्कर्त्तरि परस्मैपदार्थः इति धातुप्रदीपः। वस्तुतस्तु ज्ञप्तिपदर्शनेनैव मित्त्वादितम्। तेन अभिदिष्टार्थतया ज्ञप्तिरिह ज्ञानम्। अतएव प्रज्ञौ च ज्ञीप्से इत्यत्र अस्यैव सनन्तस्य मित्त्वादितेन ज्ञीप्सयस्त्वेन ज्ञातुमिच्छा प्रतिपाद्यते। एवं ज्ञानपर्य्याये "प्रतिपज्ज्ञप्तिचेतना इत्यमरः" इति दुर्गादासः। ज्ञप ज्ञाने च इति पाणिनिः। अधिकं ज्ञाधातौ वक्ष्यते।

ज्ञपित त्रि॰ ज्ञप—ज्ञाने क्त णि॰ वा इट्। ज्ञाते अमरः। इडभावे। ज्ञप्तोऽप्यत्र।

ज्ञप्ति स्त्री ज्ञप—भावे क्तिन्। १बुद्धौ अमरः २मारणे ३तोषणे ४तीक्ष्णीकरणे ५स्तुतौ च।

ज्ञा बोधे क्र्या॰ पर॰ सक॰ अनिट्। जानाति अज्ञासीत्। जज्ञौ। ज्ञाता ज्ञानं ज्ञातिः ज्ञातः जज्ञिवान्।

अनु+अनुमतौ अनुमतिश्च स्वयं कर्त्तव्यस्य निषेधनाभावेन स्वाभिमतत्वज्ञापनेन प्रवर्त्तनम्। "तं देवा अन्वजानन्त कामम्" तैत्ति॰ ब्रा॰। "अनुप्रवेशे वीर ततवांस्त्वं ममाप्रियम्। सर्वं तदनुजानामि" भा॰व॰२११अ॰

अप+निह्नवे आत्म॰। आत्मानमपजानानः शशमानोऽपवहितम्" भट्टिः॥

अभि+सम्यग्ज्ञाने "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः" गीता। "अभिज्ञाश्छेदपातानाम्" कुमा॰ अभिज्ञा च आद्यज्ञानम् अनुभवात्मकम्।

प्रति+अभि+पूर्वदृष्टस्य वस्तुनः चक्षुरादिसन्निकर्षजे पूर्वसंस्कारोत्पन्ने अतीतभिन्ने ज्ञानभेदे यथा सोऽयं देवदत्तः इत्यादि ज्ञानम्। "तं त्वं प्रत्यभिजानीहि कृष्णं यं दृष्टवत्यसि" हरिवं॰ १७६ अ॰।

सम्+अभि+प्रत्यभिज्ञाने "इन्द्रसेना वह ज्ञाता समभिज्ञाय बाहुकः" भा॰ व॰ ७५ अ॰।

अव+अनादरे हीनत्वेन ज्ञाने च। "अवजानासि मां यस्मात् ततस्ते न भविष्यति" रघुः। "अदेशकाले यद्दानमपात्रेभ्यश्च दीयते। असत्कृतमवज्ञातं तत्तामसमुदाहृतम्" गीता। "वसूनि देयानि विसर्जयिष्यन् रामं नृपः संसिरमाप एव। तथावजज्ञे" भट्टिः।

आ+सम्यग्ज्ञाने नियोगे च "न हि मनसा ध्यायतः कश्चनाजानाति" शत॰ ब्रा॰ ४।६।७।५। "नियोगश्च निकृष्टस्य भृत्यादेः प्रवर्त्तनम्। स्वार्थे णिच् तदर्थे। "आज्ञापय ज्ञातविशेष! पुंसाम्" कुमा॰। आ—ज्ञ रूपे चौरादिकस्येदं रूपमित्यन्ये।

उप+आद्यज्ञाने "उप तज्जानीत यथा वयमिहाध्वनीति" शत॰ ब्रा॰ ६।२।२।७। "उपज्ञा ज्ञानमाद्यं स्यात्" अमरः।

निस्+निर्+निश्चयात्मके ज्ञाने। "विद्याद्दै विद्युतं इत्यनुप्रविशति साऽन्तर्धीयते तां न निजानन्ति" ऐत॰ ब्रा॰।

परि+परितो ज्ञाने "इन्द्रो दक्षं परिजानादहीनम्" ऋ॰१०।१३८।६। "अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः" मनुः।

प्र+प्रकृष्टज्ञाने। "यया धर्ममधर्मञ्च कार्य्यञ्चाकार्य्यमेव च। अयथावत् प्रजानाति" "तस्य प्रज्ञा प्रतिष्ठिता" गीता।

प्रति+प्रतिज्ञायां साध्यत्वेन पक्षनिर्द्देशे स्वीकर्त्तव्यत्वेन कथनभेदे च आत्म॰। "साध्यनिर्द्देशः प्रतिज्ञा" गौत॰ सू॰। साध्यवत्त्वेन पक्षनिर्द्देशः प्रतिज्ञेति तदर्थः। "प्रतिजज्ञे वधं चापि सर्व्वक्षत्रस्य भारत!" भा॰व॰११७ अ॰॥ "प्रतिज्ञाय वनवासमिमं गुरोः" रामा॰ २।१०८ अ॰। "तस्मै निशाचरैश्वर्य्यं प्रतिजज्ञे रघूत्तमः" रघुः। "कच्चिन्न पाने द्यूते वा क्रीडासु प्रमदासु च। प्रतिजानन्ति पूर्वाह्णे व्ययं व्यसनजं तव" भा॰ स॰ ५अ॰। आर्षत्वात् पर॰।

वि+विशेषज्ञाने "ज्योतिर्दीपीत तमसो विजानन्" ऋ॰ ३।२९।७। "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः" शत॰ ब्रा॰ १४।७।२।१६। "कथमेतद्विजानीयां त्व-

मादौ मोक्षवानिति" गीता । शिल्पशास्त्रविषयके ज्ञाने च "मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः" अमरः। ज्ञानमात्रे क्षणिकविज्ञानमिति बौद्धाः ।

सम्+सम्यग् ज्ञाने संज्ञायां चैतन्ये च आत्म०। संजानानान् परिहरन् रावणानुचरान् बहून्" भट्टिः । "रविस्तु संज्ञापयते लोकान् रश्मिभिरुल्बणैः" भा० शा०७१२७६७ । प्रतिज्ञायाम् आत्म०। "संजानीष्व स्वभीप्सां" च मुग्धबोधम् । [ अजिज्ञपत् त ।

ज्ञा ज्ञपधात्वर्थे चुरा० उभ० सक० सेट् घटा० । ज्ञपयति ते

ज्ञा प्रेरणे चुरा०उभ०सक०सेट् । ज्ञापयति ते अजिज्ञपत् त। अस्यैव रूपम् आज्ञापयतीत्यादि । "आज्ञापय ज्ञातविशेष ! पुंसाम्" कुमा०।

ज्ञात त्रि० ज्ञा-कर्म्मणि क्त । विदिते "ज्ञाततत्त्वोऽपि "खल्वेकः सन्दिग्धे कार्य्यवस्तुनि" माघः । 'ज्ञाताज्ञाताः कुले मम" वायुपु०। भावे क्त । २ज्ञाने न०। याचा० स्वार्थे कन् । ज्ञातक विदितार्थे । [ अर्हद्भेदे हेम० ।

ज्ञातनन्दन पु० ज्ञातेन ज्ञानेन नन्दति नन्द-ल्यु ३त० ।

ज्ञातल त्रि० ज्ञातं ज्ञानं लाति ला-क । ज्ञानयुक्ते तस्यापत्यं शुभ्रा०ज्ञातलेयत्व' ज्ञातेयेति पाठान्तरात् ढक् । ज्ञातलेय तदपत्ये पुंस्त्री० । [ न्तज्ञे अमरः ।

ज्ञातसिद्धान्त पु० ज्ञातः सिद्धान्तः तत्त्वार्थो येन । सिद्धा-

ज्ञाति पु० जानाति छिद्रं कुलस्थितिं वा संज्ञायां क्तिच् । ज्ञा-कर्त्तरि करणे वा क्तिच् । १पितरि २पितृवंश्ये सपिण्डसकुल्यसमानोदकसगोत्रजरूपे एकगोत्रोत्पन्ने पितृव्यादौ अमरः।"ज्ञातिभेदो न नः कार्य्यः साक्षी त्वं मम नारद !" हरिवं०१२६अ०। ज्ञातिश्च चतुर्विधः "सप्तमपुरुषपर्य्यन्तं सपिण्डः। ततस्त्रिपुरुषपर्य्यन्तं सकुल्यः । ततश्चतुर्थपुरुषपर्य्यन्तं समानोदकः। जन्मनामस्मृतिपर्य्यन्तमपि समानोदकः । ततः परं सगोत्रजः । ज्ञातिद्रोहे दोषो यथा "यानि कानि च पापानि ब्रह्महत्यादिकानि च । ज्ञातिद्रोहस्य पापस्य कलां नार्हन्ति षोडशीम् । "भर्त्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः" । "ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा" इति च याज्ञ० । "ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः" मनुः । ततः परस्य पुंस्त्वस्य समासे नाद्युदात्तता ।

ज्ञातृ त्रि० ज्ञा-तृच् । १ज्ञानशीले २वेत्तरि च ज्ञातृभावः त्वम् । ज्ञात्र ज्ञातृत्वे न० "संविच्च मे ज्ञात्रं च मे" यजु० ८।७। "ज्ञात्रं विज्ञानसामर्थ्यम्" वेददी० ।

ज्ञातेय न०ज्ञातेर्भावः कर्म वा ढक् ।१ज्ञातित्वे २ज्ञातिकर्म्मणि च । "ज्ञातेयं कुरु सौमित्रे ! भयात्त्रायस्व राघवम्" भट्टिः

ज्ञान पु० विषयान् जानाति ज्ञा: कर्त्तरि ल्युट् । १जीवे । भावे ल्युट् । २बोधे न० । ३विशेषेण साकल्येन चावबोधे । वेदान्तिमते ४पदार्थग्राहिकायां वृत्तौ, तत्र ज्ञानं नानाविधं यथा ज्ञानं द्विधा वस्तुमात्रद्योतकं निर्विकल्पकम् । सविकल्पन्तु संज्ञादिद्योतकत्वादनेकधा । संकल्पसंशयभ्रान्तिस्मृतिसाम्यनिश्चयाः । ऊहोऽनध्यवसायश्च तथान्येऽनुभवा अपि" । इत्यादिभेदैर्नानेकविधा भवन्तीत्यर्थः । ५सम्यगवबोधे । न्यायमते ६ बुद्धिमात्रे "बुद्धिस्तु द्विविधा मता । अनुभूतिः स्मृतिश्चैव" भाषा० तत्र प्रकारान्तरेण द्विविधं यथा "अप्रमा च प्रमा चेति ज्ञानं द्विविधमुच्यते, तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता । तत्प्रपञ्चो विपर्य्यासः संशयोऽपि प्रकीर्त्तितः । आद्यो देहे आत्मबुद्धिः शङ्खादौ पीततामतिः । भवेन्निश्चयरूपा सा संशयोऽथ प्रदर्श्यते । किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः। तदभावाऽप्रकारा धीस्तत्प्रकारा तु निश्चयः । स संशयो भवेद्या धीरेकत्राभावभावयोः । साधारणादिधर्मस्य ज्ञानं संशयकारणम् । दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् । पित्तदूरत्वादिरूपो दोषो नानाविधो मतः । प्रत्यक्षे तु विशेषेण विशेष्यवता समम् । सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ गुणः । पक्षे साध्यविशिष्टे च परामर्शो गुणो भवेत् । शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः । शाब्दबोधे योग्यतायास्तात्पर्य्यस्याथ वा प्रमा। गुणः स्याद्, भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा । अथ वा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् । ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते । तत् प्रमा नाऽप्रमा नापि ज्ञानं यन्निर्विकल्पकम् । प्रकारत्वादिशून्यं हि सम्बन्धानवगाहि तत्" इति भाषा० । ७बुद्धिवृत्तिनिरोधरूपे योगे "एकत्वं बुद्धिमनसोरिन्द्रियाणाञ्च सर्वशः। आत्मनो व्यापिनस्तात ! ज्ञानमेतदनुत्तमम्" इति भा०शा०मोक्षधर्मः। एकत्वं बुद्धिमात्रे यावस्थानम् बुद्धिवृत्तिनिरोध इति यावत् । ८देवताध्यानादौ ९विवेकविज्ञाने शास्त्राचार्य्योपदेशजे परमात्मविषये साक्षान्मोक्षफले १०आत्मनिश्चये तत्त्वज्ञाने वेदान्तिमते ११जीवेश्वरजगद्भेदभ्रमाधिष्ठानभूते नित्यस्वप्रकाशे सच्चिदानन्दरूपाद्वितीये परमार्थसत्ये चैतन्ये । करणे ल्युट् । १२आत्मानात्मसर्वपदार्थ-

**तपोमूर्त्ति** पु० तपः आलोचनभेद एव मूर्त्तिरस्य, तपः प्रधाना मूर्त्तिरस्य वा । १परमेश्वरे २तपस्विनि च । ३इन्द्र-सावर्णिरूपतामसमन्वन्तरे सप्तर्षिमध्ये ३ऋषिभेदे च "कृष्णयश्च तपोमूर्त्तिस्तपस्व्यग्नीध्रकादयः" भाग०८।१३।१२

**तपोमूल** त्रि० तपो मूलमस्य । १तपोहेतुके स्वर्गादौ तामसस्य मनोः २पुत्रभेदे पु० तपस्यशब्दे दृश्यम् ।

**तपोरति** त्रि० तपसि रतिरस्य । १तपःपरायणे तामसमनोः पुत्रभेदे पु० तपस्यशब्दे दृश्यम् ।

**तपोरवि** पु० तपसा रविरिव । १सूर्य्यतुल्यतेजोयुक्ततपस्के चतुर्थमन्वन्तरे पौलहे सप्तर्षिभेदे तपोधृतिशब्दे दृश्यम् ।

**तपोलोक** पु० तपोनाम लोकः । ऊर्द्ध्वस्थेषु सप्तसु लोकेषु भुवनभेदे तपःशब्दे दृश्यम् । स च भूमेस्तत्रुण्कोटि योजनोपरि वर्त्तते । "चतुःकोटिप्रमाणन्तु तपोलोकोऽस्ति भूतलात् । उपरिष्टात् क्षितेरष्टौ कोटयः सत्यमीरितम्" काशीख० २२ अ० उक्तेः । स च विराट्-पुरुषस्य स्तनद्वयरूपेण कल्पितः यथाह भाग० २।५।३८। "भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः । हृदा स्वर्लोक उरसा महर्लोको महात्मनः । ग्रीवायां जनलोकोऽस्य तपोलोकः स्तनद्वयात् । मूर्द्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातनः" ।

**तपोऽवट** पु० तपसोऽवट इव । ब्रह्मावर्त्तदेशे त्रिका० ।

**तपोवन** न० ६त० । १तापससेव्ये वनभेदे, "बध्रूभिक्षिमतो चैनामर्द्ध्वतामातपोवनात्" तपोवनावृत्तिपथं गताभ्याम्" रघुः । २तन्नामके तीर्थभेदे च ।

**तपोऽशन** पु० चतुर्थमन्वन्तरे सप्तर्षिमध्ये पौलस्त्ये १ऋषिभेदे तपोधृतिशब्दे दृश्यम् । २तामसस्य मनोः पुत्रभेदे तपस्यशब्दे दृश्यम् ।

**तप्त** त्रि० तप—क्त । १दग्धे २तापयुक्ते च हेमच० । "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति" श्रुतिः । "स तप्तकार्त्तस्वरभास्वराम्बरः" माघः ।

**तप्तकाञ्चन** न० कर्म० । अग्निसंयोगभेदेन विमले काञ्चने । "तप्तकाञ्चनवर्णाभां सुप्रतिष्ठां सुलोचनाम्" दुर्गाध्यानम् ।

**तप्तकुम्भ** पु० तप्तः कुम्भो यत्र । नरकभेदे तत्स्वरूपं यथा "अतःपरं भीमतरं तप्तकुम्भं निबोध मे । समन्ततस्तप्त-कुम्भो वह्निज्वालासमावृतः । ज्वलदग्निचयोद्वृत्त तैलायश्चूर्णपूरितः" मार्क० पु० ।

**तप्तकृच्छ्र** न० "षट्पलन्तु पिबेदम्भस्त्रिपलन्तु पयः पिबेत् । पलमेकं पिबेत् सर्पिस्तप्तकृच्छ्रं विधीयते" इत्युक्ते व्रत-भेदे, "पयोघृतमुदकं वायुं तप्तं प्रतित्र्यहं पिबेत् स तप्तकृच्छ्र इति गौतमोक्तेः प्रंस्त्वमपि ।

"तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान् । प्रति-त्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः" मनुः । तप्तानिलपानन्तु तप्तक्षीरवाष्पपानम् । एतद्द्वादशाह साध्यम् । जलादिपरिमाणमुक्तं ब्रह्मपुराणे "तप्त-कृच्छ्रं व्रतं कुर्वन् त्र्यहं सायं पिबेच्छुचिः । षट्पलानि सुतप्तस्य तोयस्य सुसमाहितः । प्रभाते त्रीणि [illegible] सुतप्तस्य पिबेत् त्र्यहम् । पानं घृतस्य तप्तस्य मध्याह्ने त्रिदिनं पिबेत् । वायुभक्षस्त्र्यहं चान्त्यं [illegible]दहेत् पातकं द्विजः" याज्ञवल्क्यः । "तप्तक्षीरघृता[illegible]ना-मेकैकं प्रत्यहं पिबेत् । एकरात्रोपवासस्तु तप्तकृच्छ्रस्तु साधनः" एतच्चतुरहसाध्यं तप्तकृच्छ्रम् प्रा० वि० ।

**तप्तपाषाणकुण्ड** पु० नरकभेदे नरकशब्दे दृश्यम् ।

**तप्तमाष** पु० तप्तं माषमितं सुवर्णादिकं यत्र । दिव्यभेदे । तद्विधिः वीरमित्रोदये दर्शितो यथा तत्र पितामहः "तप्तमाषस्य वक्ष्यामि विधिमुद्धरणे शुभम् । कारयेदायसम्पात्रं ताम्रं वा षोड़शाङ्गुलम् । चतुरङ्गुलखातन्तु मृण्मयं वापि मण्डलम्" । कर्ष-षोड़शांशप्रमितं मण्डलं सूर्य्यमण्डलाकारं वर्त्तुल-मिति यावत् । एतादृशं पात्रं घृततैलाभ्यां पूरयेदि-त्याह स एव "पूरयेद्घृततैलाभ्यां पलैर्विंशतिभिस्तु तत् । सुवर्णं माषकन्तस्मिन् सुतप्ते निःक्षिपेत्ततः । अङ्गुष्ठाङ्गुलियोगेन तप्तमाषकमुद्धरेत्" इति । सुवर्णमाष-कञ्चषोड़शांशपरिमाणम् । सुवर्णग्रहणं रूप्यमाषनिवृ-त्त्यर्थम् । तन्माषपरिमितं हिरण्यं ताम्रं वा पिण्डी-कृत्य निःक्षिपेत् । अङ्गुष्ठाङ्गुलियोगेन अङ्गुष्ठतर्जनीम-ध्यमाभिरित्यर्थः । इदञ्च तप्तमाषोद्धरणम् प्राड्विवा-केन घृततैलयोस्तापे समारब्धे धर्मावाहनादिशोध्यशिरः-पत्रारोपणान्तं सर्वसाधारणं कर्म विधाय "त्वमग्ने ! वेदाश्चत्वारः" इत्यादिना अग्निदिव्यप्रकरणोक्तेन मन्त्रे-णाभिमन्त्र्य कारयितव्यम् शोध्यस्तु याज्ञवल्क्योक्तेन "त्वमग्ने ! सर्वभूतानामित्यादि" मन्त्रेणाभिमन्त्र्य तप्त-माषमुद्धरेत् । अतएव वृहस्पतिः "समुद्धरेत्तैलघृतात् सुत-प्तात्तप्तमाषकमिति" । कल्पान्तरमाह स एव "सौवर्णे राजते ताम्रे वायसे मृण्मयेऽपि वा । गव्यं घृतमुपा-दाय तदग्नौ तापयेच्छुचिः । सौवर्णीं राजतीं ताम्री-मायसीं वा सुशोभनाम् । सलिलेन सकृद्धौतां प्रक्षिपे-

स्तत्र मुद्रिकाम् । अवमहोचितरङ्गाद्ये स्थानमध्यमगोचरे ।
परीक्षेदाङ्गुलपर्व्वेण षटत्कारसबोधकमिति” । ततः
प्राड्विपाको धर्म्मशास्त्रनादिप्रतारोपणान्तं साधारणं
कर्म्म कृत्वा घृतमभिमन्त्रयेत् । मन्त्रस्तु तेनैव दर्शितः “तत-
स्थानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् । परं पवित्रममृतं
घृत ! त्वं यज्ञकर्म्मसु । दह पावक ! पापं त्वं हिमशीतो
भवेति च” । ततः प्राड्विवाकः शोध्येन “त्वमग्ने !
सर्व्वभूतानामित्यादि मन्त्रेणाभिमन्त्रणं कारयित्वा
मुद्रिकां ग्राहयेदित्याह स एव “उपोषितस्ततः स्नात-
आर्द्रवासाः समाहितम् । ग्राहयेन्मुद्रिकान्तान्तु घृतमध्यगतां
तथा । प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः”
इति । अत्र तर्ज्जन्यैव मुद्रिकोद्धरणं कार्य्यं तस्याः
परीक्षाभिधानात् पक्षद्वयेऽपि शुद्ध्यवधारणोपायं बृहस्प-
तिराह “कराग्रं येन धुनुयात् विस्फोटो वा न
जायते । शुद्धो भवति धर्म्मेण पितामहवचो यथेति” ।
कालिकापुराणेऽपि “न धुनेयुः कराग्रन्तु यस्य रक्तं
न जायते । विस्फोटाद्यैस्तथा दोषैः स शुद्धो यस्य
नोद्धृतमिति” । रक्तं रक्तवर्णम् । यस्य कराग्रं विस्फो-
टाद्यैर्नोद्धृतमित्यन्वयः । पितामहोऽपि “यस्य विस्फो-
टका न स्युः शुद्धोऽसावन्यथाऽशुचिरिति” ।
तण्डुलपरीक्षाशब्दे अधिकं द्रष्टव्यम् ।

**तप्तमुद्रा** स्त्री वैष्णवैः शरीरधार्य्योऽग्नितप्तधातुमयमुद्राङ्कितभग-
वदायुधचिह्नं तद्विधिः हरिभक्तिविलासे १५ विलासे ।
“आषाढ़शुक्लद्वादश्यां हरौ शयितयोषि सति । वैष्णवः
पारणं कृत्वा तप्तमुद्राश्च धारयेत् । ब्राह्मणः क्षत्रियो
वैश्यः शूद्रश्चैकान्तितद्वये । कुर्व्वन्नात्मार्पणं तप्तमुद्राभि-
र्द्देहमङ्कयेत्” । तप्तमुद्राधारणं वाराहे तप्तमुद्राप्रसङ्गे
“चक्रादिधारणं पुंसां परं सम्बन्धवेदनम् । पातिव्रत्य-
निमित्तं हि वलयादिविभूषणमिति” । तप्तमुद्रा-
धारणफलं वायुपुराणे “अग्निनैव च सन्तप्तं चक्र-
मादाय वैष्णवः । धारयेत् सर्व्ववर्णानां हरिसालोक्य
सिद्धये” । ब्रह्माण्डे “कृत्वा धातुमयीं मुद्रां तापयित्वा
स्विकां तनूम् । चक्रादिचिह्नितां भूप धारयेद्वैष्णवो नरः” ।
नारदीयपञ्चरात्रे “द्वादशारन्तु षट्कोणं वलयत्रय-
संयुतम् । हरेः सुदर्शनं तप्तं धारयेत्तु विचक्षणः ।
सौपर्णे च श्रीभगवद्गरुड़संवादे तप्तमुद्राप्रकरणे
“गरुत्मन्विशेषेण सर्व्ववर्णेष्वयं विधिः । विप्रो वा
क्षत्रियो वापि वैश्यः शूद्रस्तथैव च” । पाद्मे “अग्निहोत्रं
यथा नित्यं वेदस्याध्ययनं यथा । ब्राह्मणस्य तथैवेदं
तप्तचक्रादिधारणम्” । किञ्च तत्रैवोत्तरखण्डे श्री
शिवोमासंवादे “शङ्खचक्राङ्कनं कुर्य्याद्ब्राह्मणो बाहु-
मूलयोः । हुताग्निनैव सन्ताप्य सर्व्वपापापनुत्तये” । “चक्रं
वा शङ्खचक्रे वा तथा पञ्चायुधानि वा । धारयित्वैव
विधिवद्ब्रह्मकर्म्म समारभेत्” । तदकरणे निन्दा तत्रैव
“अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत् ।
न तस्य किञ्चिदश्नीयादपि क्रतुसहस्रिणः ।
सर्व्ववेदविदो वापि सर्व्वशास्त्रविशारदः । अधृत्वा
विधिना चक्रं ब्राह्मणः पतितो भवेत् । तप्ते-
नैवाङ्कनं कुर्य्यात् ब्राह्मणस्य विधानतः । श्रौतस्मार्त्तादि
सिद्ध्यर्थं मन्त्रसिद्ध्यै तथैव च । हरेः पूजाधिकारार्थं
चक्रं धार्य्यं विधानतः । वैष्णवत्वस्य सिद्ध्यर्थं भक्ति
सिद्ध्यै विशेषतः । उपवीतादिवद्धार्य्याः शङ्ख-
चक्रादयस्तथा । ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः” ।
श्रुतयश्च “यो ह वै सुश्लोकमौलेर्धर्म्माननुतिष्ठमानोऽग्निना
चक्रं धत्ते । अग्निर्वै सहस्रारः सहस्रारो नेमिर्व्विमना
तप्ततनुः सायुज्यं सलोकतामाप्नोतीति” । चक्रं
बिभर्त्ति वपुषाभितप्तं बलं देवानाममृतस्य विष्णोः ।
स एति नाकं दुरितं विधूय विशन्ति यद्यतयो वीतरागाः”
इति । शाकलपरिशिष्टे “अतप्ततनुर्न तदामो अश्नुतेऽश्नुता
सह इह हन्तस्तत् समासतेति” यजुषि कठवेदीयाश्वलायन
शाखायाञ्च । “प्रतद्विष्णोरलचक्रे सुतप्ते जन्माम्भोधिं
वर्त्तते चर्षणीन्द्राः । मूले बाह्वोर्दधतेऽन्ये पुराणालिङ्गा-
न्यन्ये तप्तान्यायुधान्यर्पयन्ते” इति । छन्दोगपरि-
शिष्टे “मन्त्रोशा च याज्ञवल्क्यस्तत् पुमानात्महिताय
प्रेम्णा हरिं भजेत् । सुश्लोकमं मौलेर्धर्म्मागयञ्चाग्नि-
नाधत्ते” इति । शतपथी श्रुतिः अथर्व्वपरिशिष्टे
तप्तचक्रादिप्रकरणे “देवासो एनेतेन बाहुना
सुदर्शनेन प्रयताः स्वर्गमायन्” । “येनाङ्किता
मनवो लोकसृष्टिं वितन्वते ब्राह्मणास्तद्वह-
न्तीति” । पाद्मे तप्तमुद्राप्रसङ्गे “विष्णुचक्राङ्कितं
विप्रं पूजयेत् सर्व्वकर्म्मणि । विष्णुचक्रविहीनं
तन्तु प्रयत्नेन विवर्जयेत्” । नारदीये “तप्तमुद्रा
प्रसङ्गे “श्रीकृष्णचक्राङ्कविहीनगात्रः श्मशानतुल्यः
पुरुषोऽथ नारी, । द्रष्टा नरस्तं नृपते ! सवासाः
स्नात्वा समर्चेद्धरिमङ्ग सद्यः” इति । वङ्क्रञ्च वेङ्कटाचार्य्य
पादप्रभृतिभिर्बुधैः । श्रुतयः स्मृतयोह्यत्र विख्याता

लाञ्छिताः पराः । अतएव तदनादरे दोषाः पाद्मे "तप्तचक्राङ्कितं दृष्ट्वा ये निन्दन्ति नराधमाः । अवलोक्य मुखं तेषां आदित्यमवलोकयेत्"। अग्निपुराणे च दशरथं प्रति श्रवणपितृविलापे। "शिलाबुद्धिः कृता किंवा प्रतिमायां हरेर्मया । किं मया पथि दृष्टस्य विष्णुभक्तस्य कर्हिचित् । तप्तमुद्राङ्कितदेहस्य चेतसा नादरः कृतः । येन कर्मविपाकेन पुत्रशोको ममेदृशः"। अथ तप्तमुद्राधारणमाहात्म्यं सौपर्णे "अशुचिर्वाप्यनाचारः सर्वधर्मबहिष्कृतः । तप्तशङ्खचक्राभ्यामङ्कितः पङ्क्तिपावनः"। वाराहे तप्तमुद्राधारणप्रसङ्गे "स्वे स्वे देशे शुभे वापि चक्राङ्को यत्र तिष्ठति । योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे!। ब्रह्माण्डे "आयुधैर्वैष्णवैः सर्वैस्तापितैः स्वतनुं यदि । चिह्नयेद्वैष्णवो यस्तु स याति परमां गतिम्"। पाद्मे च "अग्नितप्तं पवित्रञ्च धृत्वा तु बाहुमूलयोः । त्यक्त्वा यमपुरं घोरं याति विष्णोः परं पदम् । कृताग्नितप्तचक्रेण शरीरं यस्य चिह्नितम् । तेन तीर्थानि यज्ञाश्च लभ्यन्ते नात्र संशयः । अग्नितप्तेन चक्रेण ब्राह्मणो बाहुमूलयोः । अङ्कयित्वा जपन्मन्त्रं समागान् भोगभागभवेत् । अग्नितप्तेन चक्रेण बाहुमूलेषु लाञ्छिताः । ते सर्वे पापनिर्मुक्ता यान्ति विष्णोः परं पदम्" ।

किन्तु अप्राकृता महात्मानो विष्णुचक्रेण लाञ्छिताः । विष्णुचिह्नविहीनास्तु प्राकृताः पतिताः स्मृताः । इति अत्र निषेधवचनं निर्मूलं सद्भिरनादृतम् । समूलं यद्वा तत् सम्यगभिज्ञाभावादिना कृततत्परम् । अथ तद्धारणप्रकारः "तप्तमुद्राधारणार्थमुपचारैस्तु पञ्चभिः । कृष्णमभ्यर्च्य संयज्य चक्रशङ्खौ तथा तपेत् । तत्र मन्त्रः "सुदर्शन! नमस्तेऽस्तु पाञ्चजन्य! नमोऽस्तु ते इति । अग्निमभ्यर्च्य मूलेन हुत्वा चाज्याहुतीः कृती । चक्रशङ्खगदादीनि शस्त्राण्यग्नौ प्रतापयेत् । तत्तन्मन्त्रैस्तथा तानि तान्यभ्यर्च्य प्रणम्य च । गुरुं कृष्णञ्च संस्मृत्य भक्त्या विज्ञापयेदिदम् । उच्छिष्टो भोजनादेव किङ्करः शरणागतः । तप्तचक्रगदादीनि तवाङ्गानीह धारये" इति । अथ चक्रादीनां आवाहनादिमन्त्रः । ओं नमो भगवते वासुदेवाय निर्मथितसकलरिपुध्वजाय भगवन्नारायणकराम्भोरुहस्पर्शोल्लसिताय । "एह्येहि त्वं सहस्रार चक्रराज! सुदर्शन!। यज्ञभागं प्रगृह्णीष्व पूजाञ्चैव नमो नमः । ओं नमो भगवते पाञ्चजन्याय विष्णुशङ्खाय गम्भीरघोरध्वन्याकुलीकृतकौरववाहिनीनाथाय त्रिरेखादक्षिणावर्त्ताय त्रिप्रशस्ताय । एह्येहि पाञ्चजन्य! त्वं नारायणकरस्थित!। यज्ञभागं प्रगृह्णीष्व पूजाञ्चैव नमो नमः । ओं रं यं सं नं पाञ्चजन्याय नमः । ओं भगवते खड्गाय नन्दकाय त्रैलोक्यपवित्राय जयिने सकलसुरासुरसुन्दरीनेत्रोत्पलार्च्चिताय । एह्येहि खड्गरत्न! त्वं नन्दकाख्य! सुरार्च्चित । यज्ञभागं प्रगृह्णीष्व पूजाञ्चैव नमो नमः । ओं खड्गाय नमः । ओं नमो भगवत्यै कौमोदक्यै भगवद्भर्त्तृकायाहुदैवलालितायै । एह्येहि त्वं गदे! देवि! कौमोदक्यायुधेश्वरि!। यज्ञभागं प्रगृह्णीष्व पूजाञ्चैव नमोनमः । सशराय शार्ङ्गाय नमः । इति । अथ धारणमन्त्रः । सुदर्शन! महाज्वाल! सूर्य्यकोटिसमप्रभ!। अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय । तथा । पाञ्चजन्य! निजध्वानध्वस्तपातकसञ्चय!। पाहि मां पापिनं घोरं संसारार्णवपातिनम् । इत्युच्चारयन् मन्त्रं दक्षिणादिक्रमेण तु । भुजयोश्चक्रपूर्वाणि कृष्णशस्त्राणि धारयेत् कलत्रादिपरीवारान् निजान् सर्व्वांश्च वैष्णवः । भगवत्यर्पयन् तप्तमुद्राभिस्ताभिरङ्कयेत्" । तथा च वाराहे । "अङ्कयेत् तप्तचक्राद्यैरात्मनो बाहुमूलयोः । कलत्रापत्यभृत्येषु पश्वादिषु च सम्मते" "किञ्च आयसं विधिवत् कृत्वा पञ्चायुधविधानतः । तत्तन्मन्त्रेण मन्त्रज्ञः प्रतिष्ठाप्य पृथक् पृथक् । ललाटे च गदा धार्य्या मूर्ध्नि चापं शरस्तथा । नन्दकञ्चैव हृन्मध्ये शङ्खचक्रे भुजद्वये" । किञ्च । "दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् । सव्ये च शङ्खं बिभृयादिति ब्रह्मविदो विदुः" । अथ चक्रादिप्रतिकृति द्रव्यम् । नयप्रश्नपञ्चरात्रे "सौवर्णं राजतं ताम्रं कांस्यमायसमेव वा । चक्रं कृत्वा तु मेधावी धारयेत् सुविचक्षणः" इति । एवमेव प्रबोधिन्यां द्वादश्यां भगवत्परैः । तप्तमुद्रा ध्रुवं धार्य्या द्वारकायां विशेषतः"

तन्निषेधकवाक्यानि वैष्णवेतरविषयाणीति वैष्णवा मन्यन्ते आर्त्तास्तु श्रुतिस्मृतिविरुद्धत्वात् एतत् नानुतिष्ठन्ति विस्तरभयात् तन्निषेधवाक्यानि नोद्धृतानि ।

**तप्तवालुक** पु० तप्ता वालुका यत्र नरकभेदे नरकशब्दे दृश्यम् ।

**तप्तरहस** न० कर्म्म० अच् समा० । तप्ते रहःस्थानभेदे ।

**तप्तरूपक** न० नित्यकर्द० शुद्धरजते राजनि० ।

**तप्तशूर्मिकुण्ड** पु० तप्ता शूर्म्मिः लौहप्रतिमा यत्र

तारणः कुण्डो यत्र । नरकभेदे नरकशब्दे दृश्यम् ।

**तप्तशूर्म्मि** पु० नरकभेदे तत्प्राप्तिहेतुरुक्तः भाग०५।२६। यथा "यस्त्विह वा अगम्यां स्त्रियं पुरुषोऽगम्यं वा पुरुषं योषिदभिगच्छति । तावमुत्र कशया ताडयन्तस्तिग्मया सूर्म्या लोहमय्या पुरुषमालिङ्गयन्ति । स्त्रियं च पुरुषरूपया सूर्म्या" २६ तिग्मया तप्तया सूर्म्या प्रतिमया" श्रीधरः

**तप्तसुराकुण्ड** पु० नरकभेदे ७त० । नरकशब्दे दृश्यम् ।

**तप्तायनी** स्त्री तप्तेन अय्यतेऽत्र अय–आधारे ल्युट् ङीप् । भूमिभेदे "तप्तायनी मेऽसि" यजु०५।६। तप्तं पुरुषमयति प्राप्नोतीति तप्तायनी । यो हि दरिद्रः क्षेत्ररहितोऽहमिति सन्तप्यते सं तापोपशान्त्यर्थं प्राप्नोषि इत्यर्थः । यद्वा तप्तः सन्तरो यस्यामयति सा तप्तायनी असि" वेददी०

**तप्यतु** त्रि० तप–यतुन् । तापके सूर्य्यादौ । "सूर्य्यस्तपति तप्यतुर्द्द्या" ऋ० २।२४।६ ।

**तम** खेदे अक० इच्छायां सक० दिवा० शमा० पर० सेट् । ताम्यति । इरित् अतमत्-अतमीत् । तताम तेमतुः उदित् । तमित्वा तान्त्वा तान्तः । "यस्ताम्यति विसंज्ञश्च शेते" सुश्रु० । "ताम्येयुः प्रच्युताः पृथ्व्या यथा पूर्णां नदीं नराः । अवगाढ़ा ह्यविद्वांसः" भा० शा० ६०३० श्लो० । "यदा वै तान्तः प्राणं लभतेऽथ संजिहीते" शत० ब्रा० ७।७।२।११ । "न मा तमन्न श्रमोन्नत तन्द्रत्" ऋ० ७।२०।७ लुङि रूपम् ।

उद्+उत्कर्षेण खेदे । "तस्योत्ताम्यतो बाष्पमुज्जहार बलादिव" रामा० अयो० ६५ अ० ।

नि+अतिशयार्थे अक० । नितान्तम् । "नितान्तदीर्घैर्जनिता तपोभिः" "गोरोचनाक्षेपनितान्तगौरे" कुमा० ।

परि+भृशं खेदे । "संतप्तचक्षाः शोऽत्यर्थं दूयनात् परिताम्यति" सुश्रु० ।

**तम** न०ताम्यत्यनेन तम–करणे घञर्थे संज्ञायां च ।१अन्धकारे शब्दरत्ना० । २पादाग्रे शब्दच० । ३तमोगुणे राजनि० ४राहौ पु० ज्यो० ५तमालवृक्षे पु० शब्दच० ।

**तमक** पु० ताम्यत्यत्र तम वा–वुन् । श्वासरोगभेदे "तट्स्वेदवमथुप्रायः कण्ठघुर्घुरिकान्वितः । विशेषाद्दुर्दिने ताम्येत् श्वासः स्यात्तमकोऽमतः" सुश्रुतः । "क्षुद्रः साध्यतमस्तेषां तमकः कष्ट उच्यते । त्रयः श्वासा न सिध्यन्ति तमको दुर्बलस्य च" सुश्रुतः ।

**तमत** त्रि० तम–काङ्क्षायाम् अतच् । तृष्णापरे उज्ज्वल० ।

**तमस** न०तम–करणादौ–असुन् । त्रिगुणात्मकप्रधानस्य गुणभेदे "सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैः" भाग० १।४। भा० आश्वमेधिकपर्वणि तस्य कार्य्यभेदादिकमुक्तं यथा "ब्रह्मोवाच । तदव्यक्तमनुद्रिक्तं सर्वव्यापि ध्रुवं स्थिरम् । नवद्वारं पुरं विद्यात् त्रिगुणं पञ्चधातुकम् । एकादशपरिक्षेपं मनोव्याकरणात्मकम् । बुद्धिस्वामिकमित्येतत्पुरमेकादशं भवेत् । त्रीणि स्रोतांसि यान्यस्मिन्नाप्यायन्ते पुनः पुनः । प्रणाड्यस्तिस्र एवैताः प्रवर्त्तन्ते गुणात्मिकाः । तमो रजस्तथा सत्त्वं गुणानेतान् प्रचक्षते । अन्योन्यमिथुनाः सर्वे तथाऽन्योन्यानुजीविनः । अन्योन्यापाश्रयाश्चापि तथाऽन्योन्यानुवर्त्तिनः । अन्योन्यव्यतिषक्ताश्च त्रिगुणाः पञ्च धातवः । तमसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः । रजसश्चापि सत्त्वं स्यात् सत्त्वस्य मिथुनं तमः । नियम्यते तमो यत्र रजस्तत्र प्रवर्त्तते । नियम्यते रजो यत्र सत्त्वं तत्र प्रवर्त्तते । नैशात्मकं तमो विद्यात् त्रिगुणं मोहसंज्ञितम् । अधर्मलक्षणञ्चैव नियतं पापकर्मसु । प्रवृत्त्यात्मकमेवाहुः रजः पर्य्यायकारकम् । प्रवृत्तं सर्वभूतेषु दृश्यमुत्पत्तिलक्षणम् । प्रकाशः सर्वभूतेषु लाघवं श्रद्दधानता । सात्त्विकं रूपमेवन्तु लाघवं साधुसम्मितम् । एतेषां गुणतत्त्वानि वक्ष्यन्ते तत्त्वहेतुभिः । समासव्यासयुक्तानि तत्त्वतस्तान्निबोधत । संमोहोऽज्ञानमत्यागः कर्मणामविनिर्णयः । स्वप्नः स्तम्भो भयं लोभः शोकः सुकृतदूषणम् । अस्मृतिश्चाविपाकश्च नास्तिक्यं भिन्नवृत्तिता । निर्विशेषत्वमन्धत्वं जघन्यगुणवृत्तिता । अकृते कृतमानित्वमज्ञाने ज्ञानमानिता। अमैत्री विकृतीभावोह्यश्रद्धा मूढ़भावना । अनार्ज्जवमसञ्ज्ञत्वं कर्म पापमचेतना । गुरुत्वं सन्नभावत्वमवशित्वमधागतिः । सर्व एते गुणादृष्टास्तामसाः संप्रकीर्तिताः । ये चान्ये विहिताभावा लोकेऽस्मिन् भावसंज्ञिताः । तत्र तत्र नियम्यन्ते सर्वे ते तामसा गुणाः । परिवादकथा नित्यं नित्यं ब्राह्मणनिन्दकाः । अत्यागश्चाभिमानश्च मोहो मन्युस्तथाऽक्षमा । मत्सरश्चैव भूतेषु तामसं वृत्तमिष्यते । वृथारम्भा हि ये केचिद्वृथादानानि यानि च । वृथा भक्षणमित्येतत् तामसं वृत्तमिष्यते । अतिवादोऽतितिक्षा च मात्सर्य्यमतिमानिता । अश्रद्दधानताचैव तामसं वृत्तमिष्यते । एवंविधाश्च ये केचिल्लोकेऽस्मिन् पापकर्मिणः । मनुष्या भिन्नमर्य्यादास्ते सर्वे

तामसाः स्मृताः। तेषां योनिं प्रवक्ष्यामि नियताः पापकर्म्मिणाम्। अवाङ्निरयभावाय तिर्य्यङ्निरयगामिनः। स्थावराणि च भूतानि पशवो वाहनानि च। क्रव्यादा दन्दशूकाश्च कृमिकीटविहङ्गमाः। अण्डजा जन्तवश्चैव सर्व्वे चापि चतुष्पदाः। उन्मत्ता बधिरा मूका ये चान्ये पापरोगिणः। मग्नास्तमसि दुर्वृत्ताः स्वकर्मकृतलक्षणाः। अवाक्स्रोतस इत्येते मग्नास्तमसि तामसाः। तेषामुत्कर्षमुद्रेकं वक्ष्याम्यहमतः परम्। यथा ते सुकृतान् लोकान् लभन्ते पुण्यकर्म्मिणः। अन्यथा प्रतिपन्नास्तु विवृद्धा ये च कर्म्मिणः। स्वकर्मनिरतानाञ्च ब्राह्मणानां शुभैषिणाम्। संस्कारेणोर्द्धमायान्ति यतमानाः सलोकताम्। स्वर्गं गच्छन्ति देवानामित्येषा वैदिकी श्रुतिः। अन्यथा प्रतिपन्नास्ते विबुद्धाः स्वेषु कर्मसु। पुनरावृत्तिधर्म्माणस्ते भवन्तीह मानुषाः। पापयोनिं समापन्नाश्चाण्डाला मूकचूचुकाः। वर्णान् पर्य्यायशश्चापि प्राप्नुवन्त्युत्तरोत्तरम्। शूद्रयोनिमतिक्रम्य ये चान्ये तामसा गुणाः। स्रोतोमध्ये समागम्य वर्त्तन्ते तामसे गुणे। अभिषङ्गस्तु कामेषु महामोह इति स्मृतः। ऋषयो मुनयो देवा मुह्यन्त्यत्र सुखेप्सवः। तमो मोहो महामोहस्तामिस्रः क्रोधसंज्ञितः। मरणं त्वन्धतामिस्रस्तामिस्रः क्रोध उच्यते। वर्णतो गुणतश्चैव योनितश्चैव तत्त्वतः। सर्व्वमेतत्तमो विप्राः! कीर्त्तितं वो यथाविधि"।

सांख्ये अधर्म्माज्ञानावैराग्यानैश्वर्य्याख्यास्तस्य धर्मा उक्ता यथा "अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्य्यम्। सात्त्विकमेतद्रूपं तामसमस्मात् विपर्य्यस्तम्" सा० का० "रजस्तु चलतया परितस्त्रैगुण्यं चालयद् गुरुणा वृण्वता च तमसा तत्र तत्र प्रवृत्तिप्रतिबन्धकेन कचिदेव प्रवर्त्त्यते इति ततस्ततो व्यावर्त्त्य तमोनियामकमुक्तं गुरु वरणकमेव तमः" सां० कौ०। अयमर्थः त्रयोगुणास्त्रैगुण्यं सत्त्वादीनि परितः स्वकार्य्यकरणाय चालयत् प्रवर्त्तयत् रजः गुरुणा गौरवान्वितेन वृण्वता यत्र यत्र कार्य्यजननाय तस्य प्रवृत्तिस्तत्र तत्र प्रतिबन्धकेन तमसा कचिदेव कार्य्ये प्रवर्त्त्यते कर्म्मक्षमं क्रियते इति। तथा च तस्मात् तस्मात् कार्य्यात् व्यावर्त्त्य रजसः प्रवृत्तिं रोधयित्वा तमो नियामकमिति। अन्योऽपि विशेषस्तत्रोक्तो यथा "प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः। अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः" "गुणा इति परार्थाः सत्त्वं लघुः प्रकाशकमित्यत्र च सत्त्वादयः क्रमेण निर्द्दिश्यन्ते। तदनागतावेक्षणेन तन्त्रयुक्त्या वा प्रीत्यादीनां यथासंख्यं वेदितव्यम्। एतदुक्तं भवति प्रीतिः सुखं प्रीत्यात्मकः सत्त्वगुणः, अप्रीतिर्दुःखं अप्रीत्यात्मको रजोगुणः, विषादो मोहः विषादात्मकस्तमोगुण इति। ये तु मन्यन्ते न प्रीतिर्दुःखाभावादतिरिच्यते एवं दुःखमपि न प्रीत्यभावादन्यदिति तान् प्रत्यात्मग्रहणम्। नेतरेतराभावाः सुखादयः अपि तु भावाः आत्मशब्दस्य भाववचनत्वात् प्रीतिरात्मा भावो येषां ते प्रीत्यात्मानः एवमन्यदपि व्याख्येयम्। भावरूपता चैषामनुभवसिद्धा परस्पराभावात्मकत्वे तु परस्पराश्रयापत्तेरेकस्याप्यसिद्धेरुभयासिद्धिरिति भावः। स्वरूपमेषामुक्त्वा प्रयोजनमाह प्रकाशप्रवृत्तिनियमार्थाः अत्रापि यथासंख्यमेव। रजः प्रवर्त्तकत्वात् सर्वत्र लघु सत्त्वं प्रवर्त्तयेत् यदि तमसा गुरुणा न नियम्येत। तमोनियतन्तु कचिदेव प्रवर्त्तयति इति भवति तमोनियामकम्। प्रयोजनमुक्त्वा क्रियामाह अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च इति। क्रिया सा च प्रत्येकमभिसम्बध्यते। अन्योन्याभिभववृत्तयः एषामन्यतमेनार्थवशादुद्भूतेनान्यदभिभूयते। तथाहि सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते एवं रजः सत्त्वतमसी अभिभूय घोराम्, एवं तमः सत्त्वरजसी अभिभूय मूढामिति। अन्योन्याश्रयवृत्तयः। यद्यप्याधाराधेयभावेन नाश्रयार्थो घटते तथापि यदपेक्षया यस्य क्रिया स तस्याश्रयः तथाहि सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसी प्रकाशेनोपकरोति, रजः प्रकाशनियमावाश्रित्य प्रवृत्तिमितरयोः, तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोरिति। अन्योन्यजननवृत्तयः अन्यतमोऽन्यतमं जनयति जननञ्च परिणामः स च गुणानां सदृशरूपः अतएव न हेतुमत्त्वं तत्त्वान्तरस्य हेतोरभावात्। नाप्यनित्यत्वं तत्त्वान्तरे लयाभावात्। अन्योन्यमिथुनवृत्तयः अन्योन्यसहचराः अविनाभाववर्त्तिन इति यावत् चः समुच्चये भवति चात्रागमः "अन्योन्यमिथुनाः सर्व्वे सर्व्वे सर्व्वत्र गामिनः। रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः। तमसश्चापि मिथुने ते सत्त्वरजसी उभे। उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते। नैषामादिः संप्रयोगो वियोगो वोपलभ्यत" इति। सा०त०कौ०

"गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः"। "ऊर्द्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः"। सा० का०। "सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम्"। मनुः। चक्षुर्वृत्तिनिरोधके शार्वरादिके अन्धकारे "अदृश्ययानुत्तममनुत्तमं तमः" "आशादिनस्य तमसा नियतेर्नियोगात्" माघः। तच्च स्वपरप्रकाशकतेजः सामान्याभावरूपमिति नैयायिकाः अन्धकारशब्दे १०६ दृश्यम्। काणादा अपि तथैवाङ्गीचक्रुस्तच्च औलुक्यशब्दे १५८८पृ० दर्शितम्। वेदान्तिनस्तु भावरूपं प्रतिपेदिरे यथा विवरणोपन्यासे। "तमः प्रकाशवद्विरुद्धस्वभावयोरिति" शा० भाष्यव्याख्याने "ननु तमः प्रकाशदृष्टान्ते भावाभावरूपत्वमुपाधिः। आलोकाभावस्तम इति नैयायिकाः। रूपदर्शनाभावस्तम इति प्राभाकरा इति चेत् नैवं उपचयापचयाद्यवस्थाभेदात्त्वेनोपलभ्यमानत्वे नाभावत्वायोगात् नीलरूपवत्त्वेन द्रव्यत्वाच्च। ननु भावत्वपक्षे बहुलालोकवति देशे निमीलितनयनस्य कथं तमःप्रतीतिः बहुलालोकेन निरस्त्याङ्गीकारात् महावस्थानं तु मन्दालोकेनैव पूर्वमुक्तमिति चेत् न गोलकान्तर्वर्त्ति तमसः प्रतीत्युपपत्तेः नच नेत्रस्यान्तर्वर्त्तिवस्तुग्राहकत्वासम्भवः पिहितकर्णस्यान्तरशब्दग्राहकत्वदर्शनात्। न चैवं गोलकान्तरस्याञ्जनादेरपि निमीलितनयनेन ग्रहणप्रसङ्गः। तमोव्यतिरिक्तरूपिणः आलोकसहितचक्षुर्ग्राह्यत्वनियमात्। अथ मतं द्रव्यत्वे सति तमसः आलोकविनाशितस्यालोकापगमे झटिति नोत्पत्तिः कार्यद्रव्याणां द्व्यणुकादिक्रमेणैवारम्भादिति तन्न विपर्ययादिनां क्रमानपेक्षणात् कारणं तु मूलाविद्यैव। यथापि तमो न रूपवद्द्रव्यं स्पर्शशून्यत्वादाकाशवदिति चेत् न वायुर्न स्पर्शवान् रूपशून्यत्वादाकाशवदित्याभाससमानयोगक्षेमत्वात् प्रत्यक्षविरोधस्य तुल्यत्वात्। अथालोकाभावे समारोपितं नीलं रूपं गोचरयतीति तमःप्रत्यक्षस्यान्यथा गतिरुच्येत एवमपि हेतुरनैकान्तिकः रूपवद्द्रव्यस्यैव धूमस्य चक्षुःप्रदेशादन्यत्र स्पर्शशून्यत्वात्। तत्र विद्यमान एव धूमस्पर्शोऽनुद्भूत इति चेत् तर्हि तमःस्पर्शोऽपि सन्नेव सर्वत्रानुद्भूत इति हेत्वसिद्धिः स्यात्। नच सतः सर्वत्रानुद्भवोऽसम्भावितः। आकरजे सुवर्णादौ सत एव स्वपरप्रकाशकभास्वररूपस्योष्णस्पर्शस्य च सर्वत्रानुद्भवदर्शनात्तदेवं भावरूपतमोवादे न कोऽपि दोषः। नन्वभाववादेऽपि तथा उपचयाऽपचयाद्यवस्थानां प्रतियोग्यालोकोपाधिकत्वात् नीलरूपस्य चारोपितत्वादिति चेत् नैवं दुर्निरूपत्वात् तथाहि किमालोकमात्राभावस्तमः उत नैकालिकाऽभावः सर्वालोकाभावो वा प्रथमद्वितीयपक्षयोः प्रागभाव इतरेतराभावः प्रध्वंसाभावो वा तम इति दुर्भणं सवितृकिरणसन्तते देशे प्रदीपजन्मनः प्राग् जाते वा प्रदीपे दीपनाशे वा। तमोव्यवहाराभावात्। तृतीये सर्वालोकसन्निधानमन्तरेण न निवर्त्तते। रूपदर्शनाभावस्तम इत्यप्ययुक्तं बहुलान्धकारसंवृतापवरकमध्यस्थितस्य सर्वरूपदर्शनात्तमोदर्शनयोर्युगपदेव भावात्। तथाचाभावस्तम इति दृष्टान्ते नास्त्युक्तोपाधिः"। २तमोवदावरके अज्ञाने अविद्यायां "स ह देवः परं ज्योतिः तमः पारे प्रतिष्ठितम्" कुमा०। "आदित्यवर्णं तमसः परस्तात्" श्रुतिः। "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्" "महाभूतादि वृत्तौजाः प्रादुरासीत् तमोनुदः" मनुः।

सांख्योक्ते अविद्यायाः ३अष्टविधे भेदे च। "भेदस्तमसोऽष्टविधः" सां० का०। "तमसोऽविद्याख्याया अष्टविधो भेदः। अष्टासु विधाः अव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु अनात्मसु आत्मबुद्धिरविद्या तस्या अष्टविधविषयत्वादष्टविधत्वम्" सा० तत्त्वकौ०। ४राहौ पु० न०। तस्य छायारूपत्वात् तथात्वम्। अगुशब्दे दृश्यम्। "तमोमुखे चेत् सुधया तनुस्था" नील० ता०। ५विशेषदर्शनविरोधिदोषे ६काव्यार्थकार्याविवेके च मे० शब्दार्थचि०। समाहार्थकाण्डशब्दे परे कस्का० विसर्गस्य सः। तमस्काण्डः "अपातमस्काण्ड मनोमसं नभः" माघः।

"अवसमन्धेभ्यस्तमसः" पा० अच् समा०। अवतमसं सन्तमसम् अन्धतमसम्। तृतीयान्तेनानेन क्तान्तस्य समासे तृतीयाया अलुक्। तमसाकृतः तमसाच्छन्न इत्यादि। तमसाकृतस्येदं अण्। तामसाकृत तमःसम्बन्धिनि त्रि० स्त्रियां ङीप्।

**तमस** पु० तम—असच्। १कूपे २अन्धकारे च संक्षिप्तसारः ३अन्धकारे ४नगरे न० त्रिका०। ५नदीभेदे स्त्री "संप्राप्य तीरं तमसापगायामगङ्गाम्बुसम्पर्कविशुद्धिभाजः"। "विगाहितं यावत्तमम्बु पुणाम्" भट्टिः। "यस्याः स्मरणात् ताम्यति पापं सा तमसा" जयमङ्गला। गङ्गाम्बुसम्पर्कत्वक्तेः सा गङ्गासङ्गता यमुना चास्याः सन्निक-

स्थिता। सेयं वाल्मीकिमुनेराश्रमनिकटस्था यथाह रामा॰ आदि॰ २ स॰ “जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः”। “स तु तीरं समासाद्य तमसाया मुनिस्तदा। शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम्। अकर्दममिदं तीर्थं भरद्वाज! निशामय। रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा। न्यस्यतां कलसस्तात! दीयतां वल्कलं मम। इदमेवावगाहिष्ये तमसातीर्थमुत्तमम्”। “दृष्ट्वा तमसा तत्र वारयन्तीव राघवम्। ततः सुमन्त्रोऽपि रथाद्विमुच्य श्रान्तान् हयान् संपरिवर्त्य शीघ्रम्। पीतोदकांस्तोयपरिप्लुताङ्गानचारयद्वै तमसाविदूरे” रामा॰ अर॰ ४५ अ॰। “ततस्तु तमसातीरं रम्यमाश्रित्य राघवः” ४६ अ॰।

**तमस्काण्ड** पु॰ ६त॰। कस्का॰ विसर्गस्य सः। तमःसमूहे “व्यपानमस्काण्डमलीमसं नभः” माघः।

**तमस्तति** स्त्री ६त॰। अन्धकारसमूहे।

**तमस्वत्** त्रि॰ तमस्+अस्त्यर्थे मतुप् मस्य वः सान्तत्वात् मत्वर्थे न विसर्गः। तमोयुते स्त्रियां ङीप् सा च १रात्रौ स्त्री निघण्टुः २हरिद्रायाञ्च।

**तमस्विन्** त्रि॰ तमोऽस्तीति विनि सान्तत्वात् मत्वर्थे न विसर्गः। १तमोयुक्ते स्त्रियां ङीप्। सा च २रात्रौ ३हरिद्रायाञ्च अमरः। “अहश्यमानस्तस्याद्य तमस्विन्यामनिन्दिते”। भा॰ वि॰ २२ अ॰।

**तमाल** पु॰ तम—कालन्। स्वनामख्याते वृक्षभेदे अमरः। “तमालो मधुरो बल्यो वृष्यश्च शिशिरो गुरुः। कफपित्ततृषादाहश्रमभ्रान्तिहरश्च सः” राजनि॰। तत्पत्राकारत्वात् २तिलके ३खड्गभेदे ४वरुणवृक्षे च मेदि॰। ५कृष्णखदिरे शब्दच॰ ६वंशत्वचि भरतः”। ७पत्रके (तेजपात) राजनि॰। “यत्र तालतमालसालसरलव्याभोलवल्लीलता” गङ्गास्तवः “वनन्तनानेकतमालतालम्” “तेनोपमीयेत तमालनीलम्” माघः। “एकाकिन्यपि यामि सत्वरमतः स्रोतस्तमालाकुलम्” सा॰ द॰। तमालदले तु पर्युषितत्वदोषो नास्ति यथोक्तं आ॰ त॰ योगिनीतन्त्रे “विल्वपत्रं च माघ्यञ्च तमालामलकीदलम्। कह्लारं तुलसी चैव पद्मकं मुनिपुष्पकम्। एतत् पर्युषितं न स्यात् यच्चान्यत् कलिकात्मकम्”। स्वार्थे क। तमालक तमालार्थे वंशत्वचि च तमालवृक्षे पु॰ न॰ शब्दरत्ना॰।

**तमालपत्र** न॰ तमालपत्रस्येवाकारोऽस्त्यस्य अच्। १तिलके अमरः २पत्रके (तेजपात) ३तमालवृक्षे च पु॰ मेदि॰। ६त॰ ४तमालवृक्षपत्रे न॰। “तमालपत्रास्तरणासु रन्तुम्” रघुः।

**तमालिका** स्त्री तम—कालन् संज्ञायां कन् कापि अत इत्त्वम्। १ताम्रवल्ल्यां २भूम्यामलक्यां च राजनि॰। (तमलुक) ३देशभेदे त्रिका॰।

**तमालिनी** स्त्री तमालवृक्षाः बहवः सन्त्यत्र पुष्करा॰ देशे इनि ङीप्। १तमोलिप्तदेशे (तमलुक्) हेम॰। तमालाकृतियुक्तपत्रत्वात् २भूम्यामलक्यां राजनि॰।

**तमाली** स्त्री तम—कालन् गौरा॰ ङीष्। १ताम्रवल्ल्यां (पान) २वरुणवृक्षे च राजनि॰।

**तमि(मी)** त्रि॰ तम—इन् वा ङीप्। १रात्रौ अमरः। “स तमीं तमोभिरभिगम्य तताम्” माघः। २मोहे च तमिषीचिः।

**तमिषीचि** स्त्री तमिं मोहं सिञ्चति सिच—इन् संज्ञायां षत्वं पृषो॰ दीर्घः। १अप्सरोभेदे। “याः क्रन्दास्तमिषीचयोऽक्षकामा मनोमुहः। ताभ्यो गन्धर्वपत्नीभ्योऽप्सरोभ्योऽकरं नमः” अथ॰ २।२।५ २बलवति त्रि॰ “निरतमन् तमिषीचीरभैषुः” ऋ॰ ८।४८।११। “तमिषीचीर्लम्भयित्र्यः” भा॰। छान्दसः जसः शस्।

**तमिस्र** न॰ तमोऽस्त्यत्र ज्योत्स्नेत्यादि॰ नि॰ तमिस्रा रात्रिराश्रयत्वेनास्त्यस्य अच् वा। १अन्धकारे २क्रोधे च मेदि॰। ३तमःप्रधानरात्रौ स्त्री अमरः ४दर्शरात्रौ वाचस्पतिः। ५अन्धकारततौ स्त्री मेदि॰। “सूर्य्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा” रघुः। “वनभिन्नास्तमिस्राणां दुर्दिनेष्वभिसारिकाः” कुमा॰ “उज्जृम्भते युवतिवायु तमिस्रा” किरा॰।

**तमिस्रपक्ष** पु॰ तमिस्राऽस्त्यस्य अच् तादृशः पक्षः। कृष्णपक्षे “तमिस्रपक्षत्रुटिकूटभक्षितम्” नैष॰। “तमिस्रपक्षस्य तिथौ भृगोः सुतः” हृ॰ स॰ ५ अ॰। “प्राजेयमासाद्य तमिस्रपक्षे व्यपाकरोत्योपगतं समीक्ष्य” २४ अ॰। [वृक्षभेदे।

**तमुष्टुहीय** न॰ तमु ष्टुहि इत्यादिकर्ममधिकृत्य प्रवृत्तः गहा॰ छ।

**तमेरु** त्रि॰ ताम्यति तम—एरु। १ग्लानियुक्ते “अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयात्” यजु॰ १।२३ “यज्ञो यागहेतुः पुरोडाशः अतमेरुर्भूयात्। तस्य ग्लानो ताम्यतीति तमेरुः औणादिक एरुप्रत्ययः न तमेरुः अतमेरुः। रक्षाच्छादनेन ग्लानिरहितो भवतु। यजमानस्य प्रजा पुत्रपौत्रादिः अतमेरुर्ग्लानिरहिता भूयात् यजमानस्य प्रजायाः कदापि दुःखं मास्त्वित्यर्थः” वेददी॰।

**तमोघ्न** पु॰ तमोऽन्धकारं मोहमज्ञानं वा हन्ति हन—टक्। १सूर्य्ये, २वह्नौ, ३चन्द्रे, ४बौद्धे, ५विष्णौ, ६शिवे च मेदि॰। मनुष्यकर्त्तृके तु न टक् किन्तु अण्। तमो-घात अमनुष्ये तमोनाशके त्रि॰ तत्र सूर्य्ये "आगामी तमोघ्नश्च हरिदश्व कीर्त्यसे" भा॰ व॰ ३ अ॰। "यथा तमांस्यभ्युदितस्तमोघ्नः पूर्वां प्रतिष्ठां गमयाद्य वीरः" भा॰ द्रो॰ १४६ अ॰। [क्रीटे शब्दरत्ना॰।

**तमोज्योतिस्** पु॰ तमसि अन्धकारे ज्योतिरस्य। खद्योते

**तमोनुद्** पु॰ तमोनुदति खण्डयति नुद-क्विप्। १सूर्य्ये २चन्द्रे ३वह्नौ ४दीपे च शब्दरत्ना॰५अन्धकारनाशके त्रि॰ "एवमुक्तस्तदाऽश्विभ्यां तमोनुदभवच्छशी" भा॰आ॰ १५६अ॰।

**तमोनुद** त्रि॰ तमोऽज्ञानमन्धकारं वा नुदति नुद—क। १अन्धकारनाशके २अज्ञाननाशके ३ईश्वरे पु॰। "वायोरपि विकुर्वाणात् विरोचिष्णु तमोनुदम्" मनुः। भूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः" मनुः।

**तमोऽपह** पु॰ तमोऽपहन्ति अप+हन—ड। १सूर्य्ये २चन्द्रे ३वह्नौ ४बौद्धे च मेदि॰।५तमोनाशकमात्रे प्रदीपादौ त्रि॰ "प्रवर्त्तितो हि तमोऽपहं सुकृः" माघः। "पुत्रं तमोऽपहं लेभे नक्तं ज्योतिरिवौषधिः"रघुः। ६मोहनाशके"आगमादिव तमोऽपहादितः" किरा॰। बुद्धेरज्ञाननाशकत्वात् तथात्वम् "तत्ताज्ञानं धिया नश्येत्" वेदान्तका॰।

**तमोभिद्** पु॰ तमो भिनत्ति भिद—क्विप्। १शार्वरतमोभेदके खद्योते शब्दर॰ २तमोभेदकमात्रे त्रि॰ क। तमोभिदोऽप्यत्रार्थे त्रि॰।

**तमोमणि** पु॰ तमसि मणिरिव। १खद्योते त्रिका॰। २गोमेदके मणौ राजनि॰।

**तमोमय** त्रि॰ तमआत्मकम् तमःप्रचुरं वा तमस्+मयट्। १अन्धकारात्मके २अज्ञानात्मके ३तमःप्रचुरे च। ४राहौ पु॰ "तमोमयं सैंहिकेयाख्यम्" ह॰ स॰ ५अ॰। राहोश्च यथा तमोरूपत्वं तथा अनुग्रहे ४८पृ॰ उक्तम्। "विसृजतीत्मनः कायं नाभिनन्दस्तमोमयम्" भाग॰ ३। २०।२२। तमोमयमन्धकारप्रचुरं रात्रिरूपं कायमित्यर्थः।

**तमोऽरि** पु॰ ६त॰। १सूर्य्ये २चन्द्रे ३वह्नौ ४ज्ञाने च "तमोऽरिविम्बप्रतिविम्बधारी बराव कान्ते। पवनाशनाशः" सुन्दरचमत्कापूरकम्। तमःशत्रुप्रभृतयोऽप्यत्र।

**तमोलिप्ती** स्त्री तमसाऽलं लिप्यते अत्र करणोपपदे लिप—क्त अप॰ स॰ ङीप्। देशभेदे। (तमलुक) शब्दरत्ना॰।

**तमोविकार** पु॰ ६त॰। तमसो विकारे निद्रालस्यादौ तमःशब्दे दृश्यम्। तमसैव विकारो यस्य। २रोगे राजनि॰। ३तमिस्रजाताौ शब्दार्थचि॰।

**तमोवृध** त्रि॰ तमसि आर्ध्वरे, तमसा आवरकेणाज्ञानेन वा बर्द्धते वृध—क्विप् ७त॰ ३त॰ वा। १तमसि रात्रौ वर्द्धमाने प्रचुरचञ्चारिणि राक्षसादौ। "अर्पयतं वृषणा तमोवृधः" ऋ॰ ७।१४०।१। २अज्ञानबद्धे च।

**तमोहन्** त्रि॰ तमोहन्ति हन—क्विप्। अज्ञाननाशके "ज्योतीरयं शुक्रवर्णं तमोहनम्" ऋ॰ ।।१४०।१। तमोहन्तरि २सूर्य्ये ३चन्द्रे च "तमोघ्ना यदि पापेन गवेषौव हि जीवितः" ज्यो॰ त॰।

**तमोहर** त्रि॰ तमोहरति हृ—अच् ६त॰। १अन्धकारनाशके २अज्ञाननाशके च ३सूर्य्ये ४चन्द्रे च पु॰शब्दर॰"निर्गुणं ध्यानमार्गेण बाह्यमार्गेऽङ्गुता निशा। मध्येनाथ स्वयं ज्योतिस्तज्ज्योतिर्मं तमोहरम्" शब्दार्थचि॰ धृतवाक्यम्

**तम्पा(म्बा)** तम्ब—अच् पृषो॰ वा। सौरभेय्याम् हेमच॰।

**तम्ब** गतौ भ्वा॰ पर॰ सक॰ सेट्। तम्बति अतम्बीत्। ततम्ब

**तम्बिका** स्त्री तम्ब—ण्वुल् टाप् अतापि अत इत्त्वम्। सौरभेय्यां हेमच॰।

**तम्बीर** पु॰ तम्ब—बा॰ ईरन्। "वक्री राध्यलग्नोऽन्यवर्गगामी दीप्तांशकैर्मुक्तः। ऽतेऽन्यके कार्य्यकरस्तम्बीरोऽन्यकार्य्ययोः" नी॰ ता॰ उक्ते योगभेदे।

**तम्र** त्रि॰ ताम्यत्यनेन तम—करणे र। ग्लानिसाधने "प्रजया अथपत्तमसि" ऋ॰ १०।७२।५। [तिथे।

**तय** गतौ रक्षणे च भ्वा॰ आ॰ सक॰ सेट्। तयते अतयिष्ट-

**तर** पु॰ तॄ—भावे अप्। १तरणे "पणं यानं तरे दाप्यं पौरुषोऽर्द्धपणं तरे" "ब्राह्मणाश्चलिङ्गिनश्चैव न दाप्यास्तेपणं तरे" मनुः कर्त्तरि अच्। २अग्नौ पु॰ मेदि॰। तरत्यनेन करणे अप्। ३आतरे पथ्यादौ। "दीर्घाध्वनि यथादेशं यथाकालं तरो भवेत्" मनुः।

**तरक्षु** पु॰ तरं गतिं मार्गं वा क्षिणोति मितद्रु॰ डु। मृगादने तरक्ष्याम्रे अमरः। "श्वा लघ्वाकर्णौ मर्दमकारत्स्ते रक्षसामिन्द्राय" यजु॰ २४।४०। अश्वमेधे राक्षसेन्द्रदेवताकपशुकथनम्। "तरक्ष्वृक्षवानरान्" हरिवं॰ १६५ अ॰।

**तरङ्ग** पु॰ तॄ—अङ्गच्। (ढेउ) जले वायुना जलस्य चञ्चलनेन तिर्य्यगूर्द्धादिप्लवने अमरः। "समीरणोत्थेव तरङ्गलेखा" रघुः २वस्त्रे ३हयादीनां उत्प्लवनकाले उत्फादि॰। ततः तारका॰ इतच् तरङ्गित जाततरङ्गे त्रि॰। "वाग-

रप्रतिमं घोरं बाहूर्मीभिस्तरङ्गितम्" भा० भी० ८८अ० । पुष्करा० देशे इनि ङीप् तरङ्गिन् तरङ्गयुक्तदेशे त्रि० । नद्यां स्त्री ङीप् ।

**तरङ्गिणी** स्त्री तरङ्ग+पुष्करा० नदी रूपदेशे इनि ङीप् । नद्याम् अमरः । "तरङ्गिणीवेणिरिवायता भुवः" माघः । "गजवाजिमनुष्याणां शोणितानां तरङ्गिणी" भा० भी० ६४ अ० ।

**तरङ्गित** त्रि० तरङ्गः संजातोऽस्य तार० इतच् । १जाततरङ्गे २चञ्चले च । तरङ्गशब्दे उदा० दृश्यम् ।

**तरण** पु० तॄ—करणे कर्मणि भावे वा ल्युट् । १प्लवे (भेला) २स्वर्गे । ३प्लवने ४देशान्तरगमने ५पारगमने च न० शब्दार्थचि० "भवति भवार्णवतरणे नौका" मोहमुद्गरः । "स्वप्ननदीतरणायवर्षणामेध्यदर्शनप्रयाणेषु तु सकृत्कालद्रव्यैकार्थत्वात्" कात्या० श्रौ० १।७।१२

**तरणि** पु० तॄ—अनि । १सूर्ये, २भेलके, ३अर्कवृक्षे, च अमरः ४किरणे हेमच० ५ताम्रे च । ७नौकायां, ८घृतकुमार्य्याम् स्त्री मेदि० । वा ङीप् नौकायां ९तारके १०शीघ्रगन्तरि त्रि० । "येषा धूर्षु तरणीन् यो वहन्ति" ऋ० ७।६७।८। "तरणींस्तारकान् शीघ्रगन्तॄन् वा" भा० ११गत्यनुतीर्य्य वर्त्तमाने "पृतनु तरणिर्नीया" ऋ० १।८।१२ गत्यनुतीर्य्य वर्त्तते इति तरणिः" भा० "सोऽयं व्याकरणार्णवैकतरणिः" वोपदेवः ।

**तरणिपीत** पु० तरणेः पीत इव । काम्बाम्बुवाहिन्यां जटा० ।

**तरणिरत्न** न० तरणिप्रियं रत्नम् । सूर्यप्रिये १माणिक्ये राजनि० तरणिमणिप्रभृतयोऽप्यत्र पद्मरागशब्दे २७६३पृ०दृश्याम्

**तरणी** स्त्री तरत्यनया तॄ-करणे ल्युट् ङीप । १नौकायां शब्दरत्ना० २पद्मचारिणीलतायां शब्दच० । ३घृतकुमार्य्यां राजनि० ।

**तरण्ड** पुंन० । तॄ-अण्डच् । १वडिशीसूत्रबन्धनकाष्ठे,(छिप) २प्लवे पु० । ३नौकायां स्त्री मेदि० स्त्रीत्वपक्षे गौ० ङीष् । ४कुम्भतुम्बीरम्भादिकृतप्लवे शब्दरत्ना० ५देशभेदे पु० शब्दर० ।

**तरण्डक** न० तरण्ड+संज्ञायां कन् । तीर्थभेदे "ततो गच्छेत राजेन्द्र ! द्वारपालं तरण्डकम् । तस्य तीर्थं सरस्वत्यां यक्षेन्द्रस्य महात्मनः" भा० व० ८३ अ० । २वडिशसूत्रमध्यबद्धतनुकाष्ठभेदे (फाता) न० । "संसारसागरावर्त्तपतज्जन्तुतरण्डकम्" काशीख० ३३ अ० । ३नौकायां स्त्री गौरा० ङीष शब्दरत्ना० ।

**तरण्डपादा** स्त्री तरण्ड एव पाद इव तरणहेतुत्वात् यस्याः । नौकाभेदे शब्दरत्ना० ।

**तरण्य** तरण गतौ कण्ड्वा० यक् भ्वा० प० सक० सेट् । तरण्यति अतरणीत् अतरण्यीत् ।

**तरत्सम** त्रि० तरत्समेत्यादि ऋचः सन्त्यत्र अच् । पावमानसूक्तान्तर्गते सूक्तभेदे तरत्समन्दीयशब्दे दृश्यम् । "शुद्धवत्योऽथ कुष्माण्ड्यः पावमान्यस्तरत्समाः" हेमाद्रि श्राद्धकल्पधृतवाक्यम् ।

**तरत्समन्दीय** न० पावमानसूक्तान्तर्गते सूक्तभेदे । "जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहात्" मनुः । "तरत्समन्दीदीवतीत्येताः चतस्र ऋचोजपन्" कुल्लू० । ताश्च ऋचः ऋ० ६।५८।१ प्रभृतयश्चतस्रः ।

**तरतम** त्रि० तरेति तमेति प्रत्ययार्थौ बोध्यतयाऽस्त्यत्र अच् । न्यूनाधिकभावेन वर्त्तमाने तरतमौ हि प्रत्ययौ न्यूनाधिकभावबोधकाविति तदर्थकत्वादस्य तथात्वम् । "तरतमयोगयुक्तांश्च भावानतिरूक्षानतिस्निग्धानत्युष्णानतिशीतानित्येवमादीन् विवर्जयेत्" सुश्रु० । तस्य भावः ष्यञ् । तारतम्य न्यूनाधिकभावे न० "ता●तम्येन वर्त्तमानः" शा० भा० ।

**तरद्** स्त्री तॄ—करणे अदि । १प्लवे भेलके । कर्त्तरि अदि । २कारण्डवखगे च मेदि० ।

**तरदी** स्त्री तरेण तरणेन दीयते खण्ड्यते दो–खण्डने घञर्थे क गौरा० ङीप् । कण्टकयुक्तवृक्षभेदे । राजनि० । "तरदी मधुरा तिक्ता गुर्वी बल्या कफापहा" राजनि० । टाप तरदाप्यत्र तरटीति पाठान्तरम् ।

**तरहटी** स्त्री पक्वान्नभेदे "घृतेन मर्दितां दद्यात् फेनिका मेलयेत्ततः । विधाय वटिकास्तस्या घृते मन्दाग्निना पचेत् । प्रलिप्ताः खण्डपाकेन कर्पूरेण विमिश्रयेत् । तत एताः समरिचास्तरहट्यस्तु ताः स्मृताः । बल्या वृष्यकरी हृद्या हृष्या पित्तानिलापहा । सुस्निग्धा कफदा ऽत्यर्थं किञ्चित् सन्धानकारिका" शब्दार्थचि० वाक्यम् ।

**तरन्त** पु० तॄ-झच् । १समुद्रे, २प्लवे, ३भेके, ४राक्षसे च ५नौकायां स्त्री गौरा० ङीष् । उणादिको० ।

**तरन्तुक** न० कुरुक्षेत्रस्थानभेदे । "तरन्तुकारन्तुकयोर्यदन्तरं रामहृदानां च मचक्रुकस्य च । एतत् कुरुक्षेत्रसमन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते" भा० व० ८३४ अ० ।

**तरपण्य** न० तरस्य नद्यादिपारयानस्य पण्यं शुल्कम् । नद्यादेः पारयानार्थं देये शुल्के आतरे (भाड़ा) अमरः ।

**तरवालिका** स्त्री करपालिका+पृषो०। खड्गभेदे हेमच०।

**तरब्बुज** न० मध्यजलके फलभेदे कालिकापुराणे २९७ पृ० तदुत्पत्त्यादि दृश्यम्।

"ज्यैष्ठे मासि महेशानि! पौर्णमास्यां निशार्द्धके। तृष्णातुरा महाकाली भ्रमन्ती पितृकानने। तज्ज्ञात्वा ब्रह्मणा तस्यै फलं दत्तं तरब्बुजम्। तत्फलभक्षणात्तृप्ता वरदापि हरप्रिया। यो मे दद्यात् फलं रम्यं स चिरायुश्चतुर्युगम्" । उत्तरकामाख्यातन्त्रम्।

**तरल** पु० तॄ–अलच्। १हारमध्यस्थे मणौ, अमरः २हारे, ३तले मेदि०। ४चपले, ५कामुके, ६विस्तीर्णे, ७भास्वरे, ८मध्यशून्ये-द्रव्ये, ९द्रवीभूते पदार्थे च त्रि० हेमच०। १२हीरके रत्ने १०यवाग्वाम्, ११सुरायाञ्च स्त्री धरणिः तत्र भास्वरे "ताराविताननतरला इव यामवत्यः" किरा० "आधानुसार्य्यमाणतरलतारासगा" काद०। "उत्क-म्पितार्थि! तरले" सा० द०। "तारापतिस्तरलविद्युदिवाभ्रवृन्दम्" रघुः। "वैरायितारस्तरलाः" माघः। हारमध्यमणौ "प्रवालमुक्तास्तरलाश्च हाराः" भा० क० ९४अ० १४ अ०। "हारांस्तरलविन्यासान् सूर्य्याभासा विभूषिताः" हरिवं० १५२ अ०। भ्रंशा० अभूततद्भावे क्यङ्। तरलायते "तथापि तरलायते चेतः" उद्भटः।

**तरललोचना** स्त्री तरलं चञ्चलं लोचनं यस्याः। चञ्चलनयनायां स्त्रियां हेमच० २चञ्चलनेत्रयुक्तमात्रे त्रि० कर्म०। ३चञ्चले नेत्रे न०।

**तरलित** त्रि० तरल इवाचरति तरलं करोति तरल+क्विप्-णिच् वा क्त। १आन्दोलिते, २कम्पिते, ३धृते, ४लुलिते च हेम०।

**तरवारि** पु० तरं शत्रूणां गतिं वारयति वृ–णिच्–इन्। खड्गभेदे। (तरवार) इति भाषा। हेमच० युक्तिकल्पतरौ ५५१पृ० तल्लक्षणादिकमुक्तं युक्तिकल्पतरावत्र विशेष उक्तो यथा "अङ्गं रूपं तथा जातिर्नेत्रारिष्टे च भूमिका। ध्वनिर्मानमिति प्रोक्तं खड्गस्याष्टकं शुभम्। अभिन्ने दृश्यते यादृग् विभिन्ने घटिते तथा। यदेव दृश्यते चिह्नं तदङ्गं संप्रचक्षते। नीलकृष्णादिकं खड्गे रूपमित्यभिधीयते। तेनैव यत् प्रतीतं स्यात् तज्जातिरिति गद्यते। अङ्गातिरिक्तं यज्जातिस्तन्मात्रात्योपसूचकम्। तन्नेत्रमिति जानीयात् खड्गे खड्गविशारदाः। अङ्गातिरिक्तं खड्गादि यच्छुभत्वोपसूचकम्। तदरिष्टमिति प्राहुर्भूमिरङ्गादिधारणम्। यः खड्गे जायते शब्दो दण्डदलादिना हते। स ध्वनिस्तुलनामानं मानमष्टविधन्त्विदम्। पश्चाद्या निपुणैः खड्गे दृश्यान्यन्येऽपि कृत्रिमाः। अन्यावकृत्रिमौ ज्ञेयौ तावेव खड्गजाविति। शतमङ्गानि चत्वारि रूपाणि जातयस्तथा। त्रिंशन्नेत्राणि जानीयादरिष्टानां तथैव च। भूमिश्च द्विविधा ज्ञेया ध्वनिरष्टविधो मतः। मानन्तु द्विविधं प्रोक्तमित्येषां संग्रहो मतः"। खड्गस्य शताङ्गनामानि लौहार्णवे "कुम्भस्वर्णगजोदकूकदम्बम्लूनालाङ्गलम्पाहयश्वेतामोजगदातितालनलकपालमित्रि-त्रिरात्रेतित्तिराः। मालाजीयकपट्पदोर्ध्वमरिचव्यालाश्मवह्नीञ्जनवार्द्धगुड्ककमलिकालुपयवत्रोहिक्षुमासर्षपाः। सिंहीतण्डुलगोशिराशिवनखपाहाचिकीपोपलद्रोणीकाककपालपत्रतुवरीविम्बीफलीसर्षपाः। नीलीरक्तवचारवोनसुमनाजिह्वाशमीरोहितप्रोष्ठीमारिषभार्गवीक्षुरतास्त्रिकोधाह्रि-गुञ्जाधराः। दूर्व्वाविल्वमसूरटुण्टुकमठीमाञ्जारिकाकेतकीमूर्व्वावज्रकवायवश्यकवलाण्योधवंशाश्मनाः। ज्यैष्ठीजालपीपलिकामलरजःकुष्माण्डरोमन्नुहीकर्कटशृङ्गिकारनालमहिषस्वक्रजुयक्ता इति। प्रोक्ता लौहविचारदेन मुनिना खड्गस्य भेदाः क्रमात्"। तस्य चत्वारि रूपाणि। "नीलः कृष्णश्च पिङ्गश्च धूम्रश्चेति चतुर्विधः। वर्णप्रकर्षः खड्गानां कथितो मुनिपुङ्गवैः"। चतस्रो जातयः। "ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति चतुर्विधः। जातिभेदे विनिर्दिष्टः खड्गानां मुनिपुङ्गवैः"। त्रिंशन्नेत्राणि। "चक्रं पद्मं गदा शङ्खो डमरुस्तुरङ्गमः। छत्रं पताका वीणा च मत्स्यलिङ्गध्वजेन्दवः। कुम्भः शूलश्च शार्दूलः सिंहः सिंहासनं गजः। हंसो मयूरो जिह्वा च दमनः खड्ग एव च। पुत्रिका चामरं शैलः पुष्पमाला भुजङ्गमः। त्रिंशदेतानि नेत्राणि खड्गानां कथितानि वै"। त्रिंशदरिष्टानि "छिद्रं काकपदं रेखाभिन्नं भेकश्च मूषिकः। विडालः शर्करा भौली मशको भङ्गसूचिके। त्रिविन्दुः कालिका दारी कपोतः काक एव च। खर्परः शृगाली क्रोडी कुशपत्रक जालिके। करालकङ्कखर्जूरश्वङ्कुपुच्छवनिलकम्। अङ्गलं वडिशाख्यञ्च मुनिना तत्त्ववेदिना। प्रोक्तान्येतान्यरिष्टानि खड्गानां त्रिंशदेव हि"। द्विविधा भूमिः "दिव्यभौमविभागेन भूमिस्तु द्विविधा भवेत्"। अष्टधा ध्वनिः। "हंसकांस्याब्धठक्कानां कालतन्त्री खराश्मनाम्। ध्वनयोऽष्टविधाः प्रोक्ता नागार्जुन

मुनेर्मताः” । द्विविधं मानम् । “उत्तमाधमभेदेन मानं तद्द्विविधं भवेत् । इति प्रोक्तानि लक्ष्माणि खड्गानां ज्ञानहेतवे । एतानि तत्त्वतो ज्ञात्वा भवेन्नृपतिपूजितः” खड्गाध्यायः । “तत्र प्रथमतोऽङ्कानां लक्षणानि निबोधत” । लौहदीपे “शष्पपत्रसमा भूमिरङ्कं श्वेतं प्रतीयते । अङ्कं तत्तु महामूल्यं शष्पवज्रमुशन्ति तम् । एष खड्गवरो दद्यात् लक्ष्मीमायुर्यशो बलम् १ । स्वर्णरेखावली तन्वी यद्भूमौ निकषोपमा । स्वर्णवज्रमिति प्राहुरायुर्लक्ष्मीजयप्रदम् २ । गजशुण्डाकृतिर्भूमौ कृष्णायामङ्कसम्भवः । गजवज्रमिति प्राहुस्तत्स्पर्शे तु तद्विशेत् । ज्वरादिव्याधिशमनं तस्य प्रक्षालनाम्भसा । अपि क्षीणोऽपि भूपालस्तद्वीर्य्यात् साधयेन्महीम् ३ । एरण्डबीजप्रतिममङ्कं भूमिः सितेतरा । एवारुकमिदं नाम्ना शत्रुदर्पक्षयङ्करः । एतस्य स्पर्शमात्रेण नरः सम्यग्विमुच्यते । मञ्जिष्ठाख्यमिदं वज्रं केचिदाहुर्मनीषिणः ४ । अङ्कं दमनपत्राभं खड्गे यस्मिन् प्रतीयते । विद्याद्दमनवज्रञ्च तज्ज्ञेयं द्विविधं बुधैः । नीला शुभ्रा भवेद्भूमिस्तत्र नीला गरीयसी । तस्मिन् पर्य्युषितं तोयं गन्धे दमनकोपमम् । तत्प्रभावान्महीपालः कृत्स्नां पृथ्वीं हि साधयेत्” ५ । शार्ङ्गधरीये “एका स्थूला सिता रेखा भूमिर्नीला दृढा यदि । स्थूलाङ्कमङ्कं वज्रं तद्विद्याल्लक्ष्मीयशःप्रदम् । एतत्तृष्ते भवेच्छोथः स्थूलश्चिरतरस्थितिः । एतं महान्तमपरे वदन्ति खड्गकोविदाः ६ । छटायां दृश्यते भूमौ चक्रस्य प्रतिबिम्बितम् । चक्रवज्रं भवेत्तस्य द्विधा भूमिः सिताऽसिता ७ । लौहप्रदीपे “निरङ्कं कृष्णपत्राभमीषन्नृमणिनिभञ्च यत् । दुर्लभं तन्महामूल्यं कान्तलौहं प्रचक्षते । कृष्णा भूमिर्भवेत् स्वच्छा पीता वज्राङ्कसंकुला । कृष्णवज्रमिति प्राहुस्तत्तृष्ते मोह उच्यते । कृष्णा भूमिः शुक्लाभमीषच्चक्राङ्कसङ्कुलम् । डाकुलीवज्रकं विद्यात् कालसंक्रमणापहे ८ । अरुणं शुभ्रमूर्द्धस्थेदङ्कं भूमिः सितेतरा । अरुणाख्यमिदं वज्रं शत्रुदर्पनिसूदनम् । सूर्य्यांशुस्पर्शमात्रेण वह्निरूपां वहेत् शिखाम् । तस्य स्पर्शनमात्रेण पद्मकोषः स्फुटेद्विधि । दुर्लभं तन्मनुष्याणां भाग्यैः क्वापि लभ्यते । तद्योजनसहस्राद्रिं नाशयति भुवम् ९ । श्वेताभिन्नो यदा रेखा आमूलादुपलक्षिताः । श्वेताङ्कमिति तद्विद्याद्यशोलक्ष्मीबलप्रदम् १० । अम्भोजदलसङ्काशमङ्कं भूमिः सितेतरा । अम्भोजवज्रं तज्ज्ञेयं कथितं मुनिपुङ्गवैः ११ । अङ्कं यस्य गदाकारं भूमिश्चैव सितेतरा । गदावज्रमिदं ब्रूयात् तत्तृष्ते शूलसम्भवः १२ । अङ्कं कृष्णतिलाकारं भूमिश्चैव सिताऽसिता । तिलवज्रमिदं ज्ञेयं लक्ष्मीबलयशःप्रदम् । तत्तृष्ते तिलतैलाभा वसा प्रचलतेऽधिकम् १३ । धूम्रवर्णा भवेद्भूमिरङ्कं वह्निशिखोपमम् । अग्निवज्रमिदं ज्ञेयं शत्रूणां दाहकारकम् । अत्र शीतोदकं न्यस्तं तप्तं भवति च क्षणात् । शाखे वह्निं वमेद्यस्तु तथा सूर्य्यांशुसङ्गमात् । तत्तृष्ते बलवान् दाहो दग्धवच्च व्रणो भवेत् । एतत् परमभाग्येन लभ्यते धरणीतले १४ । भूमिः सिताऽसिता वापि अङ्कश्चेत् पिप्पलीप्रभम् । कषायवज्रमिदं ज्ञेयमन्तर्दाहस्तु तत्तृष्ते १५ । कृष्णा भूमिर्यदीयाङ्के दृश्यते ग्रन्थिसञ्चयः । ग्रन्थिवज्रमिदं ज्ञेयं वैरिपक्षविनाशनम् । तत्तृष्ते बलवान् दाहस्तृषा च ज्वर एव च १६ । शालपर्णीदलाकारमङ्कं कृष्णाविपुलिका । स्थिरावज्रमिदं प्राहुस्तत्तृष्ते वेपथुर्भवेत् १७ । यदा तित्तिरिपक्षाभमङ्कं भूमिः सितेतरा । एतत्तित्तिरिवज्रं स्यात् तत्तृष्ते बन्धुधेर्य्यकम् १८ । वनमालासमा यस्मिन् माला खड्गे प्रदृश्यते । मालाङ्कवज्रं तद्विद्यात्तत्तोयं गन्धवद्भवेत् । अत्र तप्तोदकं न्यस्तं शीतं भवति तत्क्षणात् । एष दाहपरीतानामतिपित्तहतात्मनाम् । भवेत् परमभैषज्यं भाग्येनैतद्धि लभ्यते १९ । यदा जीवकसङ्काशमङ्कं भूमिः सिताऽसिता । एतज्जीवकवज्रं स्यात् तत्तृष्ते तत्क्षणाज्ज्वरः २० । भूमिः सिताऽसिता चेत्ते स्यादङ्कं भ्रमराभमिष्यते । तत्र चेन्मधु विन्यस्तं शोभामाप्नोति केवलम् । एतद्भ्रमरवज्रं स्यात्तत्तृष्ते स्याद्विसूचिका २१ । शृङ्गं कपिलाभासमङ्कं यस्मिन् प्रतीयते । शृङ्गवज्रमिदं प्राहुर्विषवेगनिसूदनम्” । लौहप्रदीपे “शृङ्गं कपिलाभासमङ्कं यस्मिन् प्रतीयते । शाङ्कवाङ्कन्तु तद्विद्यात् स्पर्शे तस्याऽहिनाशनम् २२ । अङ्कं मरीचसङ्काशं भवेद्भूमिः सितेतरा । मरिचाङ्कमिदं वज्रं तत्तृष्ते कटुरसता । तत्प्रक्षालनतोयेन नश्यन्ति पीनसादयः २३ । यदा सर्पफणाकारमङ्कं भूमिस्तु निर्मला । भुजङ्गवज्रं तद्विद्यात्तत्तृष्ते विषवद्रुजा ।

तस्य स्पर्शनमात्रेण भेकः प्राणैर्विमुच्यते । एकस्यास्य प्रसादेन तद्राज्ञां याति मेदिनी नृपः २४ । यदाऽश्वखुर-सङ्काशमङ्कं भूमिस्तु निर्मला । अश्वाङ्कमिति तं विद्यात् खड्गं परमदुर्लभम् । तस्य संयोगमात्रेण वाजी-मन्दोऽपि धावति । तस्य चालनतोयेन हयानां रोग-नाशनम् । एतद्धते भयं मूर्च्छा दाहश्च श्रम एव च २५ । मयूरपिच्छसदृशमङ्कं भूमिः सितेतरा । बर्हाङ्कमिति तं विद्यात्तद्धते वान्तिरिष्यते । सर्पाणा-मिह सर्वेषामस्य स्पर्शाद्विजिष्णुता । एतदेव नृपतिभि-र्भोग्यैः क्वापि लभ्यते २६ । भूमिरञ्जनसङ्काशा-धारा चास्य सिता भवेत् । अञ्जनाख्यमिदं प्रायः सर्व-देशोपलभ्यते" । लौहप्रदीपे "धारा शुभ्रा भवे-द्यस्य भूमिः कज्जलसन्निभा । कृष्णमङ्कैः सितं वापि विद्यात् कज्जलवज्रकम् । मधुवर्णसमा भूमिरङ्कं वा मधुबिन्दुवत् । क्षौद्राख्यमिति जानीयात् जय-लक्ष्मीयशःप्रदम्" । शार्ङ्गधरीये "निम्नलक्ष्मो भवेद्यत्र राजिन्दिवविशेषितः । मधुरो मधुवर्णाभः स खड्गो देववल्लभः । विशेषाश्चात्र रक्ष्यन्ति सततं मक्षिकादयः" । "आसीमकोषिका यस्य क्षुद्राङ्कं कुण्डलीकृतम् । क्षुद्रवज्रकनामानं प्राह नागार्जुनो मुनिः । इदं कुण्डलवज्रञ्च प्राह लौहार्णवे मुनिः । अस्य घातेषु बलवान् दाहो मदविशेषितः २९ । यदङ्कं मक्षिकाकारं भूमिश्चैव सिताऽसिता । क्ष्वेडं शुष्यति चैयात्र मक्षिकाङ्कं तमादिशेत् ३० । अङ्कं यदा तुषाकारं या च भूमिः सिताऽसिता । तुषवज्र-मिदं ख्यातं प्राह नागार्जुनो मुनिः ३१ । अङ्कं यव-फलाकारं भूमिः कृष्णा सिता तथा । यवाङ्कमिति तं विद्यात्तद्धत्सर्वे कण्डुरज्वरः । एष खड्गाधम-स्त्याज्यो यदीच्छेद्भूतिमात्मनः ३२ । अङ्कं व्रीहि-प्रसूनाभं भूमिर्धूम्रा यते ऽतिरक् । तद्व्रीहिवज्रं जानीयात्क्ष्मभृतां भयवर्द्धनम् ३३ । अतसीफलसङ्काश-मङ्कं भूमिः सिताऽसिता । अतसीवज्रमाख्यातं तद्धते शिरसोरुजा ३४ । यदा सर्षपबीजाभमङ्कं भूमिः सिताऽसिता । खरधारः खरस्पर्शः सर्षपाङ्कः सदु-र्लभः ३५ । सिंहाकारं भवेद्यस्य भूमिर्यस्य सिताऽसिता । सिंहीवज्रन्तु तद्विद्यात्तद्धते प्रलेपनः । एतत्प्रावन-तोयेन काचरोगापनाशनम् ३६ । अङ्कं तण्डुल-प्रख्याभं भूमिर्धूम्रा सिताऽसिता । तण्डुलाङ्कमिमं विद्यात्त्रयः श्रीबलवर्द्धनम् । एतदृष्युषितं तोयं तण्डुलोदकसन्निभम् । अस्य प्रभावान्मनुजोऽभ्वरं हि लभते श्रियम् ३७ । अङ्कञ्चेद्गोखुराकारं भूमि-राघातनिःसहा । खड्गाधममिदं विद्याद्गोशृङ्ग नाम नामतः ३८ । स्थूला दीर्घाः शिराः कृष्णा भूमि-श्चैव सिताऽसिता । शिराङ्कमिति तं ब्रूयादेनं खड्गाधमं बुधाः ३९ । शिवलिङ्गाकृतिश्चाङ्के धारा-चैव सिताऽथवा । शिवाङ्कमिति तं ब्रूयाच्छत्रुपक्ष-निसूदनम् ४० । यदा व्याघ्रनखाकारमङ्कं भूमिस्तु पिङ्गला । नखवज्रमिदं विद्यात् तद्धते क्षयथुर्भवेत् । एतदाभिषसंस्पर्शात् प्रविशेत् स्वयमेव हि ४१ । शाल-पुष्पोपमश्चाङ्कं भूमिर्धूम्रा खराकृतिः । शालाङ्कमिति जानीयाच्छत्रुवंशोपनाशनम् । अस्य स्पर्शनमात्रेण जीवन्मृतश्च जहत्यसून् ४२ । यदा मनुजनेत्राभ-मङ्कं भूमिः सिताऽसिता । नेत्राङ्कमिति जानीयात् संग्रामे विजयप्रदम् । एतत्प्रावनतोयेन नूनमन्धोऽपि पश्यति ४३ । अङ्कं केशसमं यस्य भूमिर्धूम्रा सिताऽसिता । केशाङ्कमिति जानीयात् क्रोधदुःखभया-पहम् ४४ । निरङ्कं स्थूलप्रकृतिमपताङ्कं विदुर्बुधाः । एतद्धि प्रायशो लोके दृश्यते द्विजसत्तम" । ४५ । पद्म-पुराणे "निरङ्का निशिता धारा शाणे वह्निं वम-त्यपि । क्रोधीवज्रमिदं श्रेयं पृथिव्यां नातिदुर्लभम् ४६ । अङ्कं काकपदाकारं भूमिराघातनिःसहा । एष खड्गाधमस्त्याज्यो काकाख्यो भूतिमिच्छता ४७ । यदा कपालमङ्केषु दृश्यते सर्वतः खरम् । एतद्धि दुःख-जनकं कपालाङ्कं बुधस्त्यजेत् ४८ । तन्वी पत्रा बलीतुल्या सुवर्णाङ्काऽतिपुष्किका । पत्रवज्रकमाख्यातमा-युर्वेदविदो जनाः" । लौहार्णवे "सुपर्णसन्निभा भूमिरङ्कं काकं प्रतीयते । तत् पत्रवज्रं काकस्य सुपर्णमुपजायते ४९ । तुवरीदलसङ्काशमङ्कं यस्मिन् प्रतीयते । तुवरीवज्रमाख्यातं तद्धते शिरसो भ्रमः । एष खड्गाधमस्त्याज्यो यदीच्छेज्जीवनं निजम् ५० बिम्बीदलसमा भूमिरङ्कं बिम्बीफलोपमम् । बिम्बी-वज्रन्तु तद्विद्यात्तत्फलं तिक्तमुच्यते । पित्तशूलविका-राणां प्रशमाय प्रयुज्यते ५१ । प्रियङ्गुसदृशश्चाङ्कं भूमिश्च कपिलाकृतिः । फलीवज्रमिदं प्रोक्तं शाणे धूम्रं वमत्यपि ५२ । अङ्कं सर्षपपुष्पाभं भूमिश्चैव सिताऽसिता । एतत् सर्षपवज्रं स्यात् शाणे वह्निं वमत्यपि ।

अपि कुत्कुलिकां याति एतद्रत्नकोमलम् । एतत्प्रसादात् क्षितिपः शत्रूणां साधयते महीम् ५३ । नीलोत्पलसमा भूमिरङ्कं नीलोत्तरङ्कवत् । नीलोवज्रमिदं दृष्टं शाणे वह्निशिखां वमेत् । एष खड्गवरोऽन्यासामरिष्टभयनाशनः ५४ । रक्तासितो भवेद्रेखा भूमिस्त्वेव सिताऽसिता । रक्ताङ्कमिति जानीयाद्वैरिपक्षविनाशनम् । शाणेन यस्तु रक्तां वा नीलां वा वमते शिखाम् । रक्तस्पर्शनमात्रेण स्वयमेव निकृन्तति । अतोऽस्य रक्तस्यगन्धदग्धा दाहश्च जायते ५५ । अङ्कं वचादलसमं भूमिस्त्वेव सिताऽसिता । वचावज्रमिदं ज्ञेयं सदृक्षताद्विपनाशनम् । एष खड्गवरो राज्ञा साधनीयः प्रयत्नतः ५६ । रसोनाद्रूत्तमं ह्यङ्कं भूमिस्तस्य दलोपमा । रसोनवज्रं जानीयात् शाणे वह्निं वमत्यपि । अस्य भावनतोयेन आमवातविनाशनम् ५७ । निरङ्का निर्मला भूमिर्धारा तीक्ष्णा खरः खरः । सुमना वज्रमेतत् स्याद्भुवि नात्यन्तदुर्लभम् ५८ । जिह्निनी सदृशी दीर्घा यस्या रेखा सुविस्तरा । जिह्नीवज्रमिदं नाम सर्वकामार्थसाधनम् ५९ । अङ्कं शमीपत्रसमं भूमिर्मूला सिताऽसिता । शमीवज्रमिदं ज्ञेयं शनैश्चरसुदावहम् । शाणेषु वमते वह्निं सहते वह्निपीड़नम् ६० । रोहितमत्स्यकसदृशमङ्कं भूमिः सिताऽसिता वापि । धूम्रा गम्भीरस्वरयुक्ता धारा तीक्ष्णाऽसिता भवेद्रेखा । रोहिताख्यमिदं वज्रं सर्वारिष्टविनाशनम् । वह्निसंस्पर्शमात्रेण किञ्चिच्चिमिचिमायते । इत्ययं दुर्लभः खड्गो देवानामपि कथ्यते ६१ । शफरीवल्कलाकारमङ्कं भूमिः सिताऽसिता । प्रोष्ठीवज्रमिदं प्रोक्तं न्यस्तं तरति वारिधिं । एष खड्गोत्तमो राज्ञां विपक्षकुलनाशकः । कदाचिल्लभ्यते भाग्यैर्लभ्यते तेन वै मही ६२ । अङ्कं मारिषपत्राभं भूमिः स्याद्विपमच्छविः । इत्ययं मारिषाङ्कः स्यात् पृथिव्यां नातिदुर्लभः ६३ । भक्तराजस्य पुष्पाभमङ्कं भूमिर्दलप्रभा । आघातं सहते नैव एष खड्गाधमो मतः ६४ । धारा तीक्ष्णा क्षुराकारा भूमिरङ्कविवर्जिता । आघातं सहते घोरं शाणे वह्निं वमत्यपि । क्षुराङ्कमिति जानीयात् पृथिव्यां नातिदुर्लभम् ६५ । निर्मला सरला भूमिर्भवेन्मैव कदा कदा । मन्दा तीव्रा भवेद्धारा तद्विद्रजस्य लक्षणम् ६६ । नीलाञ्जनसमा भूमिरङ्कं जलतरङ्गवत् । मेघाङ्कमिति जानीयाच्छाणे शीतं भवत्यपि । एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मनः । भर्तुः प्रतापं शमयेद्रविबिम्बं यथा घनः ६७ । मन्दा धारा भवेत् गाढ़ा भूमिरङ्कविवर्जिता । पर्वताङ्कमिदं नाम सर्वत्रैवोपलभ्यते ६८ । अङ्कं गुञ्जाफलसमं भूमिर्नीलदलोपमा । गुञ्जावज्रमिदं घृष्टं तप्तं भवति घर्षणे । शाणे सिन्दूरसङ्काशं रजोवमति चासकृत् । एष खड्गवरो राज्ञा भाग्यादेवोपलभ्यते । अस्य प्रभावात्तन्नास्ति यन्न साधयते नृपः ६९ । अङ्कं तनु शराकारं भूमिस्त्वेव सिताऽसिता । धारा तीक्ष्णा च वमति शाणे वह्निसमाः शिखाः । शरवज्रमिदं ज्ञेयं राज्ञां वाञ्छितसिद्धये ७० । दूर्व्वादलनिभा भूमिर्धारा तीक्ष्णा खरः खरः । शाणेन वमते वह्निं दूर्व्वावज्रं सुदुर्लभम् ७१ । अङ्कं बिल्वदलाकारं भूमिस्त्वेव सिताऽसिता । बिल्ववज्रमिदं शाणे नीलपीते वमेच्छिखे । एष खड्गवरः प्रोक्तः शत्रूणां कुलनाशनः ७२ । मसूरदलसङ्काशा भूमिरङ्कं मसूरवत् । मसूराङ्कमिदं शाणे रजो वमति चारुणम् ७३ । शणपुष्पनिभा रेखा दीर्घा भूमिः सितेतरा । शणाङ्कमिति जानीयात् खड्गं परमदुर्लभम् ७४ । शटीदलसमा भूमि रङ्कं तत्कुसुमोपमम् । शटीवज्रमिदं प्रायो लभ्यते पुण्यवत्तरम् ७५ । माजीररोमसदृशमङ्कं भूमिः सितेतरा । माजीराङ्कमिदं नाम्ना रोगशोकभयावहम् । एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मनः ७६ । केतकीपत्रसदृशमङ्कं यस्मिन् प्रतीयते । विद्यात् केतकवज्रं तत् वाराणससमुद्भवम्" ७७ । लौहप्रदीपे "अङ्कं मूर्त्तितन्तुनिभं भूमिर्मूर्वादलच्छविः । शाणेन वमते शुक्लां शिखां मौर्वी भवेत्ततः । मौर्व्यङ्कमिदमुत्कृष्टं यशःकीर्त्तिबलावहम् ७८ । लिङ्गं तीक्ष्णं खरं गाढ़ं शाणे वह्निं वमेत् कणम् । छिनत्त्यन्यविधं लौहं वज्राङ्कमिति तद्वदेत् ७९ । कलायपुष्पसदृशमङ्कं भूमिः सिताऽसिता । कलायवज्रं जानीयात् तत्क्वते पाक इष्यते ८० । अङ्कं चम्पकपुष्पाभं भूमिः कृष्णा तथा सिता । शिखां शाणे वमेच्छीतं तिक्तं तस्य जलं भवेत् । इदं चम्पकवज्रं स्यात् सर्वत्र विजयप्रदम् ८१ । अङ्कं बलादलसमं भूमिः शुक्ला तथेतरा । बलावज्रमिदं ज्ञेयं नानाभावं भवेद्ध्रुतम् । इत्ययं वातरोगाणां नाशने परमौषधम् ८२ । अङ्कं वटारोहसमं भूमिर्वटदलच्छविः । वटवज्रमिदं ज्ञेयं खरं खड्गाधमं बुधैः ।

"तिलतैलं गुरु स्थैर्य्यबलवर्णकरं सरम्। वृष्यं विकाशि विशदं मधुरं रसपाकयोः। सूक्ष्मं कषायानुरसं तिक्तं वातकफापहम्। वीर्य्योष्णं हिमं स्पर्शे बृंहणं रक्तपित्तकृत्। लेखनं बद्धविण्मूत्रं गर्भाशयविशोधनम्। दीपनं बुद्धिदं मेध्यं व्यवायि व्रणमेहनुत्। श्रोत्रयोनिशिरःशूलनाशनं लघुताकरम्। त्वच्यं केश्यञ्च चक्षुष्यमभ्यङ्गे भोजनेऽन्यथा। छिन्नभिन्नच्युतोत्पिष्टमथितक्षतपिच्चिटे। भग्नस्फुटितविद्धाग्निदग्धविश्लिष्टदारिते। तथाभिहतनिर्भुग्ने मृगव्याघ्रादिविक्षते। वस्तौ पानेऽथ संस्कारे नस्ये कर्णाक्षिपूरणे। सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते"। ननु बृंहणलेखनयोः कथं सामानाधिकरण्यमित्यत आह। "कफादिदुष्टः पवनः स्रोतः सङ्कोचयेद्यदा। रसोऽसम्यग्वहन् कार्श्यं कुर्य्याद्रक्तादिवर्द्धयन्। तेषु प्रविष्टं सरता सौक्ष्म्यस्निग्धत्वमार्दवैः। तैलं क्षमं रसं नेतुं कृशानां तेन बृंहणम्। व्यवायि सूक्ष्मतीक्ष्णोष्णसरत्वैर्मेदसः क्षयम्। शनैः प्रकुरुते तैलं तेन लेखनमीरितम्। कृतं पुरीषं बध्नाति स्खलितं तत्प्रवर्त्तयेत्। ग्राहकं सारकञ्चापि तेन तैलमुदीरितम्। एतमब्दात्परं पक्वं क्षीणवीर्य्यं प्रजायते। तैलं पक्वमपक्वं वा चिरस्थायि गुणाधिकम्"। सर्षपतैलगुणाः। "दीपनं सार्षपं तैलं कटुपाकरसं लघु। लेखनं स्पर्शवीर्य्योष्णं तीक्ष्णं पित्तास्रदूषकम्। कफमेदोऽनिलार्शोघ्नं शिरःकर्णामयापहम्। कण्डूकुष्ठकृमिश्वित्रकोठदुष्टकृमिप्रणुत्"।

राजिकातैलगुणाः "तद्वद्राजिकयोस्तैलं विशेषान्मूत्रकृच्छ्रकृत्"। राजिकयोः (कृष्णाराई) (आरक्तराई) द्वयोः। तुवरी(तोरी)तैलगुणाः "तीक्ष्णोष्णं तुवरीतैलं लघु ग्राहि कफास्रजित्। वह्निकृद्विषकण्डूकुष्ठकोठकृमीन्नुत्। मेदोदोषापहञ्चापि व्रणशोथहरं परम्"। अतसीतैलगुणाः "अतसीतैलमाग्नेयं स्निग्धोष्णं कफपित्तकृत्। कटुपाकमचक्षुष्यं बल्यं वातहरं गुरु। मलकृद्रसतः स्वादु ग्राहि त्वग्दोषनुद्घनम्। वस्तौ पाने तथाभ्यङ्गे नस्ये कर्णस्य पूरणे। अनुपानविधौ चापि प्रयोज्यं वातशान्तये। वरटेः तैलगुणाः "कुसुम्भतैलमम्लं स्यादुष्णं गुरु विदाहि च। चक्षुर्भ्यामहितं बल्यं रक्तपित्तकफप्रदम्। खस (खाखस) बीजतैलस्य गुणाः। "तैलं तु खसबीजानां बल्यं वृष्यं गुरु स्मृतम्। वातघ्नं कफहृच्छीतं स्वादुपाकरसं च तत्"। एरण्डतैलगुणाः "एरण्डतैलं तीक्ष्णोष्णं दीपनं पिच्छिलं गुरु। वृष्यं त्वच्यं वयःस्थापि मेधाकान्तिबलप्रदम्। कषायानुरसं सूक्ष्मं योनिशुक्रविशोधनम्। विस्रं स्वादु रसे पाके सतिक्तं कटुकं सरम्। विषमज्वरहृद्रोगपृष्ठगुह्यादिशूलनुत्। हन्ति वातोदरानाहगुल्माष्ठीलाकटीग्रहान्। वातशोणितविड्बन्धब्रध्नशोथामविद्रधीन्। आमवातगजेन्द्रस्य शरीरवनचारिणः। एक एव निहन्तायमेरण्डस्नेहकेशरी"। रालतैलगुणाः "तैलं सर्जरसोद्भूतं विस्फोटव्रणनाशनम्। कुष्ठपामाकृमिहरं वातश्लेष्मामयापहम्"। सर्वतैलगुणाः "तैलं स्वयोनिगुणकृदभ्यङ्गेनाखिलं मतम्। अतःशेषस्य तैलस्य गुणा ज्ञेयाः स्वयोनिवत्"। "प्रातः स्नाने व्रते श्राद्धे द्वादश्यां ग्रहणे तथा। मद्यलेपसमं तैलं तस्मात्तैलं विवर्जयेत्" कर्म्मलोचन०। "हतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम्। अदुष्टं पक्वतैलञ्च तैलाभ्यङ्गे च नित्यशः" तिथ्या० त०। वारविशेषे तैलग्रहणफलं यथा।

"अर्के नूनं दहति हृदयं कीर्त्तिलाभश्च सोमे भौमे मृत्युर्भवति नियतं चन्द्रजे पुत्रलाभः। अर्थग्लानिर्भवति च गुरौ भार्गवे शोकयुक्तस्तैलाभ्यङ्गात्तनयमरणं सूर्य्यजे दीर्घमायुः" ज्यो०त०। "दशादष्टगुणं तैलं मर्दयेन्न तु खादयेत्" वैद्यक०। स्वल्पे कन्। तैलक स्वल्पतैले न०।

**तैलकन्द** पु० तिलस्यायम् अण् तैलः तिलसम्बन्धी कन्द इव कन्दोऽस्य। तिलचित्तपत्रके वृक्षभेदे "तैलकन्दः कटूष्णश्च लौहद्रावकरो मतः। वातापस्मारविषशोफनाशकरश्च सः। रसस्य बन्धकारी च देहशुद्धिकरस्तथा" राजनि०।

**तैलकल्कज** पु० तैलात् तिलसम्बन्धिनः कल्काज्जायते जन—ड। तिलकल्कजाते (तैलेर काट) तैलकिट्टे राजनि०।

**तैलकार** पु० तैलं करोति कृ—अण् (तेली) (कलु) इति प्रसिद्धे वर्णसङ्करे चाक्रिके तैलिनि। स च कोटकस्त्रीगर्भे कुम्भकाराज्जातः सङ्कीर्णजातिभेदः ब्रह्मवै० ब्रह्मख०

**तैलकिट्ट** न० ६त०। तैलमले (काट) इति ख्याते।

**तैलकीट** पु० कीटभेदे राजनि०।

**तैलक्य** न० तिलकस्य भावादौ पुरो० ष्यञ्। तिलकभावे।

**तैलङ्ग** पु० "श्रीशैलं तु समारभ्य चोलेशान्मध्यभागतः। तैलङ्गदेशो देवेशि! प्रोक्तो" १देशे। २तत्रस्थे जने ब०व०। शब्दरत्ना०

**तैलचोरिका** स्त्री तैलं चोरयति चुर—ण्वुल् पृषो०। तैलपायिकायाम् (तेलापोका)। पृषो०। तैलचौरिकाप्यत्र।

**तैलद्रोणी** तैलपूर्णा द्रोणी शा०त०। "कण्ठपर्य्यन्तमज्जनार्थं"

तैलपूर्णे काष्ठादिनिर्मिते पात्रविशेषे। अवगाहस्थिति-गुणाः। "वातरोगव्याधिकृतरोगपङ्गुवाधिर्यग्रहिग्लानगद्गद-कुब्जकुष्ठपृष्ठग्रहविनतगात्रभग्नकपाटीपीडाभङ्गाप-तन्त्रकयक्ष्मिरसमूत्रकृच्छ्रवर्त्मरोगेषु हितमिति" राजवल्लभः।

**तैलधान्य** न० तैलोपयोगि धान्यं मयूरव्यंसकादि। "तिलोऽ-तसी च तोरी (डी) च त्रिविधश्चापि सर्षपः। द्विधा राजी खसश्चैव बीजं कौसुम्भसम्भवम्। एतानि तैल-धान्यानीत्युक्तेषु तिलादिषु।

**तैलपक** पु० तैलं पिबति पा—क स्वार्थे क। तैलपायिकाख्ये पक्षयुक्ते कीटे। तैलचरणे तज्जातिर्धर्मप्रभेनुनोक्ता यथा "मांसं गृध्रोवपां मद्गुस्तैलं तैलपकः खगः" [भावप्र०

**तैलपर्णक** पु० तैलाक्तमिव पर्णमस्य कप्। ग्रन्थिपर्णवृक्षे

**तैलपर्णिक** न० तैलपर्णो गिरिभेदः उत्पत्तिस्थानत्वेना-स्त्यस्य ठन् तैलाक्तं पर्णमस्त्यस्य ठन् वा। १हरिचन्दने अमरः। तिलपर्णाः इव उत्पत्तिस्थानत्वेनास्त्यस्य ठन्। २चन्दनभेदे।

**तैलपर्णी** स्त्री तिलपर्णो गिरिभवत्वात् अण् ङीप्। १चन्दने २श्रीवासे ३सिह्लके च मेदि०। स्वार्थे क। तैलपर्णिका तत्रार्थे। "कालियकादुकुनाश हिङ्गुस्तैलपर्णिकाः" हरिवं० २२१अ०। [राजनि०।

**तैलपा** स्त्री तैलं पिबति पा—क। (तेलापोका) कीटभेदे।

**तैलपायिका** स्त्री पा—ण्वुल् ह्रस्व०। (तेलापोका) (आर-सुला) कीटभेदे अमरः।

**तैलपायिन्** पु० तैलं पिबति पा—णिनि। तैलपायिकाख्ये पक्षयुक्ते कीटभेदे। "तैलहृत् तैलपायी स्यात्" याज्ञ०।

**तैलपिपीलिका** स्त्री तैलाक्तेव पिपीलिका। पिपीलिकाभेदे

**तैलपीत** त्रि० पीतं तैलं येन आहि०पर०नि०। पीततैलके।

**तैलफल** पु० तैलं फले यस्य। इङ्गुदीवृक्षे राजनि०।

**तैलभाविनी** स्त्री तैलं भावयति वासयति भू—णिच् णिनि ङीप्। तैलवासके जातीपुष्पवृक्षे राजनि०।

**तैलमाली** स्त्री तैलेन मालः सम्बन्धो यस्याः गौरा० ङीष्। वर्त्तिकायां दीपदशायां शब्दमाला।

**तैलम्पाता** स्त्री तिलस्य पातोऽत्र ज नि०मुम् च। १स्वधा-याम्, २तदुपलक्षिते श्राद्धे च अमरः।

**तैलयन्त्र** पु० तैलमर्ह्दनार्थं यन्त्रम्। तिलादिनिष्पीड़-नार्थे यन्त्रभेदे (कलुरघानि) "अमीमांस्यानि शौचानि तैलयन्त्रेक्षुयन्त्रयोः" स्मृतिः "रविरथचक्रं च तैलयन्त्र-चक्रवत् भ्रमत्" भागवते ५।२१।१८ श्लोकः।

**तैलवक** पु० तैलुवकस्य विषयो देशः राजन्या० वुञ्। तैलु-वकविषये देशे। [रविन०।

**तैलवल्ली** स्त्री तैलाक्तेव वल्ली। शतमूलाख्यायां पारस्क०

**तैलसाधन** न० तैलं साधयति सुरभीकरोति सिध—णिच् साधि—ल्यु। कक्कोले गन्धद्रव्ये शब्दच०। [मेदे हेमच०।

**तैलस्फटिक** पु० तैलाक्तः स्फटिक इव। तद्वर्णमणौ गो-

**तैलस्यन्दा** स्त्री तैलमिव स्यन्दति स्यन्द—अच्। १श्वेत-गोकर्ण्यां २काकोल्यां पारस्करनिघण्टुः।

**तैलागुरु** पु० तैलाक्तमिवागुरु। दाहागुरौ राजनि०।

**तैलाटी** स्त्री अटति अटं तैलेनाटं विद्यतेऽस्याः गौरा० ङीष्। वरटायां तैलस्पर्शे तद्विषनाशात् तस्याः तथात्वम्।

**तैलाम्बुका** स्त्री तैलमम्बु इव पेयमस्याः। तैलपायि-काख्ये कीटे जटा०।

**तैलिक** त्रि० तैलं पण्यं यस्य तैलं शिल्पमस्य वा ठक्। १तैलार्थं तिलनिष्पीड़ने (कलु) "स्वकर्मविननीच-तैलिकपिङ्गीनसक्वोपकृतपुंस्त्वा" हंस०१६अ०। २तैल-विक्रेतरि च "समुद्रगामी वन्दी च तैलिकः कूट-कारकः" मनुः तिलविक्रेतुरपाङ्क्तेयत्वमुक्तम्।

**तैलिन्** त्रि० तैलं निष्पाद्यत्वेनास्त्यस्य इनि। १तैलकारे हेमच०।२तैलयुक्ते त्रि०। स्त्रियां ङीप् ङीबन्तः। ३तैल-कीटे राजनि० ४दशायां वर्त्तौ शब्दमा०। [हेम०।

**तैलिशाला** स्त्री ६त०। तैलनिष्पीड़नार्थे गृहे (घानिघर)

**तैलीन** तिलानां भवनं क्षेत्रं खञ्। तिलभवनयोग्ये क्षेत्रे अमरः। [हेमच०त्रिणि स्त्रियां ङीप्।

**तैव्रदारव** त्रि० तीव्रदारुणःइदम् रजता० अञ्। तीव्रदा-

**तैष** पु० तिष्यनक्षत्रयुक्ता पौर्णमासी अस्मिन्नमासे अण्। तौषी सा(ऽ)स्मिन् मासे अण्।१पौषे मासि धनुःस्थरव्यारब्धे शुक्लप्रतिपदादिदर्शान्ते चान्द्रे मासि अमरः तदीय पूर्णिमायामेव तद्योगसम्भवः। तिष्यशब्देन तत्समीप-नक्षत्रस्यापि ग्रहणात् कदाचित् तत्सम्बन्धाभावेऽपि न क्षतिः २तदीयपौर्णमास्यां स्त्री "सास्मिन् पौर्णमासी" पा० नक्षत्रयुक्तकालस्य पूर्णिमायामेव तद्योगे साधुत्वेन पौर्णमासीपरत्वमेवेति बोध्यम्। "तैष्या नवीतपूर्वा-याम्" आश्व० श्रौ० ८।१४।२२।

**तोक** न० तौ० तु—क तस्य नेत्वम्। १अपत्ये पुत्रे, दु-हितरि च अमरः। "नित्ये तोके दीदिवांसम्" ३।२।११ "यच्छे तोकाय तनयाय जीवसे" ऋ० १०।३५।१२ "तोकेन

**तोयकर्मन्** न० तोयेन कर्म । तर्पणे "तोयकर्मणि चारब्धे रामाम्रुदकदानिके" भा०आ०।अ० ।

**तोयकाम** पु० तोयं कामयते कम-अण् । १जलवेतसे जटाधरः । २जलाभिलाषुके त्रि० ।

**तोयकुम्भ** पु० तोयस्य कुम्भ इव । शैवाले पारस्करनिघण्टुः ।

**तोयकृच्छ्र** न० जलमात्रपानरूपे याज्ञवल्क्योक्ते व्रतभेदे ।

"यदा तु बिल्वानि फलानि प्रत्येकं क्वथितानि मासमश्नीयन्ते तदा फलकृच्छ्रादिव्यपदेशं लभते । यथाह मार्कण्डेयः "फलैर्मासेन कथितः फलकृच्छ्रो मनीषिभिः । श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्माक्षैरपरस्तथा । मासेनामलकैरेवं श्रीकृच्छ्रमपरं स्मृतम् । पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते । मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो जलेन तु" इति ।"इति पर्णकृच्छ्रमेकादशविधम्" मिता० ।

**तोयडिम्ब** पु० तोयस्य डिम्ब इव । १मेघोपले करकायां हारा० ।

**तोयद** पु० तोयं ददाति दा+क । १मेघे, २मुस्तके च । ३घृते न० मेदि० । ४विधिना जलदातरि त्रि० । "तोयदस्तृप्तिमाप्नोति" पुरा० । तद्दानमाहात्म्यं भा० शा० दानधर्मे यथा

"अन्ने दत्ते नरेणेह प्राणा दत्ता भवन्त्युत । प्राणदानाद्धि परमं न दानमिह विद्यते । अन्नं वापि प्रभवति पानीयात् कुरुसत्तम ! । नीरजातेन हि विना न किञ्चित् संप्रवर्त्तते । अन्नौषध्यो महाराज ! वीरुधश्च जलोद्भवाः । यतः प्राणभृतां प्राणाः सम्भवन्ति विशाम्पते ! । तस्मात् पानीयदानाद्धि न परं विद्यते क्वचित् । तच्च दद्यान्नरोनित्यं यदीच्छेद् भूतिमात्मनः । धन्यं यशस्यमायुष्यं जलदानमिहोच्यते । शत्रूंश्चाप्यधि कौन्तेय ! सदा तिष्ठति तोयदः । सर्वकामानवाप्नोति कीर्त्तिञ्चैवेह शाश्वतीम् । प्रेत्य चानन्त्यमश्नाति पापेभ्यश्च प्रमुच्यते । तोयदो मनुजव्याघ्र ! स्वर्गं गत्वा महाद्युते ! । अक्षयान् समवाप्नोति लोकानित्यब्रवीत् मनुरिति" ।

**तोयधर** पु० तोयं धरति धृ-अच् । १मेघे मेदि० २मुस्तके च "नीला इवातपात्यये तोयं तोयधरा घनाः" रामा० बा० ६३ अ० ।

**तोयधार** पु० तोयानां धारा यत्र । १मेघे २मुस्तके च । धारि-भावे अच् । तोयस्य धारः वर्षणम् । ३जलवर्षणे पु० "घनवत्तोयधारेण ववर्ष कनकाम्बुभिः" हरिवं० ११२अ० ।६त० । ४जलधारायां स्त्री ।"महान्ति व्यसनानि शीघ्रं तोयधारा घना इव" भा०वि० ३२अ० । "गिरिः प्रस्रवण इव तोयधारा" रामा० आ० ३५ स० ।

**तोयधि** पु० तोयानि धीयन्ते ऽत्र धा-कि उप०स० । १समुद्रे अब्धिप्रभृतयोऽप्यत्र । २चतुःसंख्यायाञ्च ।"समन्तात् समध्यात् तु तस्योभागेषु तोयधेः" सू० सि० ।

**तोयधिप्रिय** न० तोयधिं प्रीणाति प्री-क ।१लवङ्गे शब्दच० ।

**तोयनिधि** पु० तोयं निधीयतेऽस्मिन् नि+धा-कि उप०स० । १समुद्रे २चतुःसंख्यायाञ्च ।"पूर्वापरौ तोयनिधी वगाह्य" कुमा० ।

**तोयनीवी** स्त्री तोयं समुद्रोदकं नीवीव यस्याः आर्षे न कप् । १पृथिव्यां "तोयनीव्याः पतिं भूमेरभ्यषिञ्चज्जनाङ्कुरे" भाग० ३।१५।१८। लोके तु कप् तोयनीविका तत्रार्थे । [लाङ्गल्याम् अमरः।

**तोयपिप्पली** स्त्री तोये पिप्पलीव । (काँचड़ा) शाकभेदे

**तोयपुष्पी** स्त्री तोयेन बहुजलदानेन पुष्पाण्यस्याः । १पाटलावृक्षे शब्दमाला ।

**तोयप्रसादन** पु० तोयं प्रसादयति फलयोगेन प्र+सद-णिच्-ल्यु । १कतके (निर्मली) । फलपरत्वे न० रत्नमाला "तोयप्रसादनाम्बुप्रसादकादयोऽप्यत्र "फलं कतकवृक्षस्य यद्यम्बुप्रसादकम्" मनुः ।

**तोयफला** स्त्री तोयप्रधानं फलं यस्याः ।१इर्वारौ कर्कटीभेदे राजनि० । [२मुस्तके च ।

**तोयमुच्** पु० तोयं मुञ्चति मुच-क्विप् ६त० । ।जलमुचि मेघे

**तोययन्त्र** न० सू० सि० उक्ते कालज्ञानार्थं घटीयन्त्रभेदे घटीयन्त्रशब्दे २७८१ पृ० दृश्यम् । (फोयारा) इति ख्याते २जलयन्त्रभेदे च ।

**तोयराज्** पु० तोयेषु राजते राज-क्विप् । १समुद्रे "यदीच्छेत् सागरः किञ्चिदुत्स्रष्टुं मिह तोयराट्" हरिवं०२२६अ०।२वरुणे च

**तोयराशि** पु० तोयानां राशिरिव । १समुद्रे । ६त० । २जलसमूहे च "तोयराशिस्तथापि तृष्णां संवर्द्धयति" काद० । [रत्नमा० स्वार्थे क । तोयराशिकाप्यत्र ।

**तोयवल्ली** स्त्री तोयसन्निहितस्थाने वल्ली ।१कारवेल्ले (उच्छे)

**तोयशुक्तिका** स्त्री तोयजाता शुक्तिका श०त० । जलशुक्तिकायां राजनि० ।

**तोयशूक** पु० तोयस्य शूक इव । शैवाले पार० नि० ।

**तोयसूचक** पुंस्त्री० तोयं तोयवर्षं सूचयति रवेण सूच-ण्वुल् । १भेके शब्दार्थच० । स्त्रियां जातित्वात् ङीष् । २जलवर्षणसूचके योगभेदे त्रि० । जलयन्त्रे१०६६पृ०दृश्यम् ।

**तोयविम्ब** न॰ तोयोत्थितं विम्बम् अर्द्धविम्बाकारं वस्तु । जलविम्बे जलोपरिभासमाने अर्द्धगोलाकारे पदार्थे । अयं शब्दः तोयशब्दात् परं पाठ्यः ।

**तोयात्मन्** पु॰ तोयमात्मा स्वरूपं यस्य तत्प्रकृतित्वात् । १परमेश्वरे । "यस्य केशेषु जीमूताः । नद्यः सर्वाङ्गसन्धिषु कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः" शिव स्तुतिः ।

**तोयाधार** पु॰ ६त॰ । १जलाशये । जलाशयोत्सर्गशब्दे ३०७५ पृ॰ तडागादि दृश्यम् । "तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः" शकु॰ ।

**तोयाधिवासिनी** स्त्री तोयं तोयाढ्यं देशमधिवसति अधि+वस–णिनि ङीप् । पाटलाहक्षे रत्नमाला ।

**तोयेश** पु॰ ६त॰ । १वरुणे तदधिदेवताके २शतभिषानक्षत्रे च । तोयं जलमधिदेवोऽस्य । ३पूर्वाषाढ़ानक्षत्रे न॰ ।

**तोरण** पुंन॰ । तुर–युच आधारे ल्युट् तोलयत्यनेन तुल–उन्माने करणे–ल्युट् लस्य रो वा । बहिः स्थिते १द्वारे । "अर्थाश्वकैस्तोरणमङ्गभङ्गेति" "गणो नृपाणामथ तोरणाद्बहिः" माघः । "भासोज्ज्वलत्काञ्चनतोरणानाम्" कुमा॰ । तत्र द्वाराग्रे निखातस्तम्भोपरिनिबद्धो धनुराकारः (फटक्) इति ख्यातः पदार्थः । यागादौ मण्डपादूर्ध्वहिर्द्वारकृतस्य तोरणस्य काष्ठविशेषप्रमाणादिकं मण्डपशब्दे दृश्यं मत्स्यतदुक्तादाशादिपक्षतौ विस्तरो दृश्यः । २कन्धरायां न॰ हारा॰ ।

**तोरश्रवस्** पु॰ अङ्गिरोमुनौ ।

**तोल** पुंन॰ । पु॰ तुल–कर्म्मणि अच । अशीतिरत्तिकामाने १कर्षे । "एकतोलं द्वितोलं वा त्रितोलं वट्तोलकम् । इतोऽधिकं नरः कृत्वा प्रायश्चित्तीयते ध्रुवम्" आगमः । स्वार्थे क । तत्रार्थे "पलं तु लौकिकैर्मानैः साष्टरक्तिद्विमाषकम् । तोलकत्रितयं ज्ञेयम्" तिथित॰ ।

**तोल्य** त्रि॰ तुल+उन्माने कर्म्मणि–यत् । १तोलनीये । भावे यत् । २तोलने न॰ । "जीवानां वयसां मौल्ये तोल्ये वर्णस्य हेम्नि" लीला॰ ।

**तोश** पु॰ तुश–वधे भावे घञ् । १हिंसायाम् । कर्त्तरि अच् । २हिंसके "त्वे राय इन्द्र ! तोशतमाः" ऋ॰ १।१६९।५। "तोशतिर्वधकर्मा नितोशयति निवर्हयतीति तन्नामसु पाठात् तोशतमाः नाशयितृतमाः" भा॰ । "तोशा वृत्रहणा हुवे" ऋ॰ ३।१२।४ । "तोशा बाधकौ" भा॰ । औणादिके अच् [भा॰ उ॰ २६ अ॰ ।

**तोष** पु॰ तुष–भावे घञ् । सन्तोषे । "तोषपरो हि लाभः"

**तोषण** न॰ तुष–भावे ल्युट् । १सन्तोषे । तुष–णिच् भावे ल्युट् । २सन्तोषोत्पादने । "एतावदेव पुरुषैः कार्य्यं हृदयतोषणम्" भा॰ स॰ १६ अ॰ । कर्त्तरि ल्यु । ३सन्तोषजनके त्रि॰ "पश्यन् हृदयतोषणान्" भा॰ उ॰ ८३ अ॰ । करणे ल्युट् । ४तोषसाधने स्त्रियां ङीप् तोषणी ।

**तोषल** न॰ तोषं लुनाति लू बा॰ ड । अस्त्रभेदे १मुषलेऽस्त्रे "कृष्णस्तोषलमुद्यम्य गिरिकूटोपमं बली" हरिवं॰ ८७ अ॰ ।

**तौक्षिक** पु॰ धनूराशौ दीपिका कौर्प्य शब्दे २२७८ पृ॰ दृश्यम् ।

**तौतातिक** न॰ तुतातभट्टेन निर्वृत्तम् ठञ् । तुतातभट्टकृतशास्त्रे "नैयायिकापि गुरोर्मतं न विदितं तौतातिकं दर्शनम्" प्रबोधच॰ ।

**तौतिक** न॰ १मुक्तायां २शुक्तौ च राजनि॰ ।

**तौदी** स्त्री विपनाशके ओषधिभेदे एतक्रमाच्याम् । "तौदी नामासि कन्या घृताची वा अमि" अथ॰ १६।४।४२।

**तौम्बरविन्** पु॰ व॰ व॰ । तुम्बुरुणा कलाप्यन्तेवासिना प्रोक्तमधीयते इनि । कलाप्यन्तेवासिना तुम्बुरुणा प्रोक्तशाखाध्येतृषु ।

**तौर** न॰ यागभेदे । "संवत्सरमहरहस्तौरेण यजेत" लाट्या॰ श्रौ॰ १०।२०।१ । "दार्षद्वततौरयोर्व्रतानि" १०।१८।१० तत्रैव ।

**तौरयान** न॰ तूर्णं यानमस्य पृषो॰ । तूर्णगमनयुक्ते । "स तौरयान उपयाहि यज्ञम्" निरुक्ते ५।२५। श्रुतिः तौरयानः तूर्णयानः "तौरयान इत्यपि निगमो भवति"

**तौरश्रवस** न॰ तोरश्रवसाऽङ्गिरसा दृष्टं साम अण् । सामभेदे "तौरश्रवसे माध्यन्दिने पवमाने तदावपनश्रुतेः" कात्या॰ श्रौ॰ २५।१४।१४ । "तौरश्रवसे सामनी" कर्कः ।

**तौर्य्य** न॰ तूर्य्ये मुरजादौ वाद्ये भवम् अण् । मुरजादिध्वनौ ।

**तौर्य्यत्रिक** न॰ त्रयः परिमाणमस्य कन् तौर्य्योपलक्षितं त्रिकम् । समुदितेषु नृत्यगीतवाद्येषु अमरः । "वनेऽपि तौर्य्यत्रिकमारराध तम्" नैषधम् । "तौर्य्यत्रिकं वृथाट्या कामजो दशको गणः" मनुः ।

**तौल** न॰ तुलैव तुला+स्वार्थे अण् स्वार्थिका अपि प्रत्ययाः क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इत्युक्तेः दैवतादिवत् क्लीवता । मानभेदे १तुलायाम् २उन्मानदण्डे ३तुलाराशौ च ज्यो॰ ।

**तौलिक** पु॰ तूल्या जीवति तूली+ठक् । चित्रकरे शब्दमाला ।

**तौलिकिक** पु॰ तूलिकया जीवति ठक् । चित्रकरे हेमच॰ ।

**तौलिन्** पु० तुला तौलं तत् विद्यतेऽस्य इनि । तुलाराशौ "तौलिनि चित्रान्त्यार्द्धे स्वातिः पादत्रयं विशाखायाः" ब्र०सं०१०२अ०। अस्य क्लीवत्वमपि "शक्रे तौलि कुलाशनेऽलिभवनौ यास्ये यमो नैर्ऋते" ज्यो०तारिकलग्ननिर्णयः ।

**तौल्य** त्रि० तुलया परिच्छिन्नम् ष्यञ् । तुलया परिच्छिन्ने सिद्धा० । तुल्यमेव स्वार्थे ष्यञ् । २तुल्ये न० ।

**तौल्वलि** पु०तुल्वलस्यापत्यम् इञ् । तुल्वलार्षेरपत्ये "सर्वेभ्य एव निष्पणीयादिति तौल्वलिः क्रियागुणत्वात्" आश्व० श्रौ० २।६।१७ "अभ्यासमितरेषां तौल्वलिः कृतार्थत्वात्" ५।६।२४ । ततः इञन्तत्वात् यूनि फक् तौल्वल्यादित्वात् युवप्रत्ययस्य न लुक् । तौल्वलायन—यूनि तदपत्ये ।

**तौल्वल्यादि** पु० "न तौल्वलिभ्यः" पा० सूत्रोक्ते युवप्रत्ययस्य लुकि पर्युदस्ते शब्दगणे स च गणः पा०ग०सू० उक्तो यथा

"तौल्वलि, धारणि, पारणि, रावणि, दैलीपि, दैवति, वार्कलि, नैवकि, दैवमति, दैवयज्ञि, चाफट्टकि, वैल्वकि, बैङ्कि, आनुराहति, पौष्करसादि, आनुरोहति, आनुति, प्रादोहनि, नैमिश्रि, प्राडाहति, वान्धकि, वैशीति, आसिनासि, आहिंसि, आसुरि, नैमिषि, आसिबन्धकि, पौष्करेणुपालि, वैकर्णि, वैरकि, वैहति ।

**तौवरक** त्रि० तुवर्य्याः इदम् अण् स्वार्थे क । तुवरीसम्बन्धिनि १स्नेहादौ "कृते भल्लातकस्नेहात् स्नेहात्तौवरकात्तथा" सुश्रुतः । स्वार्थे अण् । ततः स्वार्थे क । २तुवरके । "आयुष्करं तौवरकं कषायं कटुपाकिकम् । उष्णं कृमिज्वरानाहमेहकायस्तविनाशनम्" सुश्रुतः ।

**तौविलिका** स्त्री ओषधिभेदे । तौविलिके ! ऽवेलयावयमैलब ऐलयीत्" अथ० ६।१६।३ ।

**तौषायण** त्रि० तुषस्यादूरदेशादि पक्षा० चतुरर्थ्यां फक् । तुषस्यादूरदेशादौ ।

**तौषार** त्रि० तुषारस्येदमण् । तुषारसम्बन्धिनि जले राजनि० "तत्रान्तरिक्षं धारं कारं तौषारं हैममिति" आन्तरिक्षजलविभागे सुश्रुतः । भावप्र० तद्गुणादि उक्तं यथा "अपि नद्याः समुद्रान्ते वह्निरापश्च तद्गुणाः । धूमावयवनिर्मुक्तास्तौषाराख्यास्तु ताः स्मृताः । अपथ्याः प्राणिनां प्रायो भूरुहाणान्तु ता हिताः । तुषाराम्बु-हिमं रूक्षं स्याद्वातलमपित्तलम् । कफोरुस्तम्भ-कण्ठाग्निमेदोगलगण्डादिरोगनुत्" । नदीमारभ्य समुद्रपर्य्यन्तं वह्निरापो तद्गुणा वह्निभवाः धूमावयवनिर्मुक्ताः धूमांशरहिता आपः तौषाराख्या इत्यर्थः ।

**त्मन्** पु० आत्मन्+आलोपः । आत्मनि "त्मनमर्जं न विश्वध क्षरध्यै" ऋ० १।६३।८ । त्मनमात्मानम् । "आङोऽन्यत्रापि छन्दसि दृश्यते" पा० इत्यात्मन आकारलोपः संज्ञापूर्वकस्य विधेरनित्यत्वादुपधादीर्घो भावः" भा० । "त्मने तोकाय तनयाय मृड" ऋ० १।११४।६ । "उप त्मन्या वनस्पते" ऋ० १।१८८।१०। 'त्मन्या आत्मना" भा० । तृतीयास्थाने या । "अश्वो घृतेन त्मन्या" यजु० २९।१०। "वनस्पतिरवसृष्टो न पाशैः त्मन्या" २०।४५ ।

**त्यक्त** त्रि० त्यज—कर्मणि क्त । कृतत्यागे उत्सृष्टे समुज्झिते अमरः "अदृष्टार्थत्यक्तद्रव्यस्वीकारः प्रतिग्रहः" मूलपाणिः त्यजधातौ उदा०।२त्यक्तसुद्यते च "मदर्थे त्यक्तजीविताः" गीता "इत्युक्तः कटुकं वाक्यं वानरैस्त्यक्तजीवितैः, रामा० कि० ५४ अ० ।

**त्यज** हानौ दाने च भ्वा० सक० पर० अनिट् । त्यजति अत्याक्षीत् तत्याज । त्यक्तव्यं त्याज्यम् त्यागः त्यक्तं त्यक्ता त्यागी । "त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्" चाणक्यः "योऽत्याक्षीत् संयुगं भयात्" भा० द्रो० ६५ अ० "तं तत्याजाहितं पुत्रम्" रामा० २।३६अ० । "नैव नीतिविद्यमैन कदाचित् त्यज्यते" पञ्चत०। (सूराः) "मदर्थे त्यक्तजीविताः" गीता "प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्द्धुषिस्तथा" मनुः "न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति" मनुः "त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः । यज्ञदानतपः कर्म न त्याज्यमिति चापरे" गीता "ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः" मनुः "तत्युष्पदाः स्वयूथेभ्यस्त्यक्तव्याः परभूमिषु" ब्र०स०६०अ० । वेदे तु निं०। यनि तित्याज "यस्तित्याज सचि विदं सखायम्" ऋ०१०।७१।६। त्यागश्च स्वत्वध्वंसानुकूलव्यापारः न ममेदमित्याकारः। स च मूर्त्तद्रव्याणामेव भवति अमूर्त्तजीवनादेर्वियोजनरूपः । उपसर्गपूर्वकस्य तत्तदुपसर्गद्योत्यार्थयुक्तत्यागे इति भेदः ।

**त्यजस्** पु० त्यज—भावेऽसुन् । १त्यागे "दृष्टरश्च न त्यजसा वि ह्रुणाति" ऋ०१।१६६।१२। "त्यजसा त्यागेन" भा०कर्त्तरि—असुन् ।२त्यागकर्त्तरि त्रि०। "चिद्धारयातेमहि ! त्यजः" ऋ०

१०।१४४।६। त्यजो दुःखस्य वर्जयितृ भा० “न तं तिग्मं चन त्यजो न” ऋ०८।४७।७। करणे ल्युट्। ३क्रोधे च क्रोधात् प्रयुज्यमानमायुधं मुच्यते इति तस्य तथात्वम्।

**त्यद्** त्रि० त्यज—“त्यजितनियजिभ्यो डित्” उ० अदि डित्। १प्रसिद्धे। अस्य सर्वनामतया त्यदादिकार्य्यम्, स्यः त्यौ त्ये त्यस्मै त्यस्मात् त्येषां त्यस्मिन्। स्त्रियां स्या त्ये त्याः। क्लीबे त्यद् त्ये त्यानीति भेदः। २सर्वदा परोक्षाभिधानार्हे वस्तुनि।

“द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चैवामूर्त्तञ्च मर्त्यञ्चामृतञ्च स्थितञ्च यच्च सच्च त्यच्च। तदेतन्मूर्त्तं यदन्यद्वायोश्चान्तरीक्षाच्चैतन्मर्त्यमेतत् स्थितमेतत् सत्तस्यैतस्य मूर्त्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः। अथामूर्त्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यत्तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन्मण्डले पुरुषस्तस्य ह्येष रस इत्यधिदैवतम्” बृ० उ०। “ते एते द्वे वाव वावशब्दोऽवधारणार्थः। द्वे एवेत्यर्थः। ब्रह्मणो परमात्मनो रूपे रूप्यते याभ्यामरूपं परमब्रह्माविद्याध्यारोपणाभ्यां के ते द्वे। मूर्त्तञ्च एव मूर्त्तमेव च। तथा अमूर्त्तञ्च एवामूर्त्तमेव चेत्यर्थः। अन्तर्नीतस्वात्मविशेषणे मूर्त्तामूर्त्ते द्वे एवेत्यवधार्य्येते। कानि पुनस्तानि विशेषणानि मूर्त्तामूर्त्तयोरित्युच्यन्ते। मर्त्यं मरणधर्म्यमृतञ्च तद्विपरीतम्। स्थितं परिच्छिन्नं गतिपूर्वकं यत् स्थास्नु। यच्च यातीति यद्व्याप्यपरिच्छिन्नं स्थितविपरीतम्। सच्च सदित्यन्येभ्यो विशेष्यमाणासाधारणधर्मविशेषवत्। त्यच्च तद्विपरीतं त्यदित्येव सर्वदा परोक्षाभिधानार्हम्। अथामूर्त्तमथाधुनाऽमूर्त्तमुच्यते। वायुश्चान्तरिक्षञ्च यत्परिशेषितं भूतद्वयं एतदमृतममूर्त्तत्वादस्थितमतोऽविरुध्यमानं केनचिदमृतममरणधर्मि तद्यत् स्थितविपरीतं व्याप्यपरिच्छिन्नं यस्माद्यदेतदन्येभ्योऽप्रविभज्यमानविशेषमतस्त्यत्त्यदिति परोक्षाभिधानार्हमेव पूर्ववत्। तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्य चतुष्टयविशेषणस्यामूर्त्तस्यैष रसः। कोऽसौ। य एष एतस्मिन्मण्डले पुरुषः करणात्मको हिरण्यगर्भः प्राण इत्यभिधीयते। यः स एषः अमूर्त्तस्य भूतद्वयस्य रसः पूर्ववत् सारिष्ठः, एतत्पुरुषसारञ्चामूर्त्तं भूतद्वयं हैरण्यगर्भलिङ्गारम्भाय हि भूतद्वयाभिव्यक्तिरव्याकृतात्तस्मात्तादर्थ्येन सारं भूतद्वयम्। तस्य ह्येष रसो यस्मान्मो मण्डलस्थः पुरुषो मण्डलस्य रसः सारञ्च भूतद्वयस्य च साधर्म्यम्। तस्माद्युक्तं प्रसिद्धवदेतदुपादानं त्यस्य ह्येष रस इति” शा० भाष्यम् “सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम्” वेणी०। अव्ययीभावे शरदा० अच् समासान्तः। उपत्यदम्।

**त्यदादि** पु० पा० गणसूत्रोक्ते शब्दसमूहे। स च गणः “त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवत् किम्” “त्यदादीनामः” पा० अत्र अत्वविधौ द्विपर्य्यन्तस्यैव ग्रहणमिति भाष्यकारेष्टिः।

**त्याग** पु० त्यज—भावे घञ्। उत्सर्गे मूर्त्तद्रव्यस्य स्वत्वध्वंसानुकूलव्यापारे न ममेदमित्याकारे। “न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति” “उन्मत्तं पतितं क्लीबमवीरं पापरोगिणाम्। न त्यागोऽस्ति द्विषन्त्याश्च न च दायापवर्त्तनम्” मनुः अमूर्त्तद्रव्यस्य २वियोगमात्रे च। त्यागश्च सात्त्विकादिभेदात् त्रिविधः। यथाह गीता “नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते। मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः। दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत्। स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्। कार्य्यमित्येव यत् कर्म नियतं कुरुतेऽर्जुन!। सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः”। विशेषणाभावात् विशेष्याभावात् उभयाभावाच्च पुनरपि सात्त्विकस्त्यागः त्रिविधः तथा हि फलाभिसन्धिपूर्वककर्मत्यागः सत्यपि कर्मणि फलाभिसन्धित्यागादेकः। स च सात्त्विकत्वादादेयः। सत्यपि फलाभिसन्धौ कर्मत्यागात् द्वितीयः। स च दुःखबुद्ध्या कृतो राजसः विपर्य्यासेन कृतस्तामसः इति भेदः। द्विविधोऽपि हेयो भवति। फलाभिसन्धेः कर्मणश्च त्यागात् तृतीयः। स च कर्मानधिकारिकर्तृको नैर्गुण्यरूपः। सोऽपि साधनफलभेदेन द्विविधः। तत्र सात्त्विकेन फलाभिसन्धित्यागपूर्वककर्मानुष्ठानरूपेण त्यागेन शुद्धान्तःकरणस्योत्पन्नविविदिषस्य आत्मज्ञानसाधनश्रवणाख्यं वेदान्तविचाराय फलाभिसन्धिरहितस्यान्तःकरणशुद्धौ सत्यां तत्साधनस्य परित्यागः स एकः साधनभूतो विविदिषासन्न्यास उच्यते। जन्मान्तरकृतसाधनाभ्यासपरिपाकादस्मिन् जन्मनि आदावेवोत्पन्नात्मबोधस्य कृतकृत्यस्य स्वत एव फलाभिसन्धेः कर्मणश्च परित्यागः फलभूतः स विद्वत्सन्न्यास इत्युच्यते। “त्यागप्रपञ्चरूपस्य चिदात्मत्वावलोकनात्। त्यागो

हि महतां पूज्यः सद्यो मोक्षमयो यतः। त्यागेन युक्ता दिवमुत्पतन्ति त्यागेन हीना नरकं व्रजन्ति। न त्यागिनां दुष्करमस्ति किञ्चित् त्यागो हि सर्वव्यसनानि हन्ति" शब्दार्थचि० धृतवाक्यम्।

**त्यागिन्** त्रि० त्यज–घिनुण्। १ दातरि, २शूरे, ३वर्ज्जनशीले, ४कर्मफलत्यागिनि च "न द्वेष्ट्यकुशलं कर्म कुशलेनानुषज्जते। त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः। न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः। यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते" गीता "त्यागिनस्त्यागिनां चैव निवर्त्तेतोदकक्रिया" मनुः।

**त्यागिमन्** त्रि० त्यागेन निष्पन्नं त्याग+इमनिच्। त्यागेन निर्वृत्ते।

**त्याज्य** त्रि० त्यज+ण्यत् कुत्वाभावः। १वर्ज्जनीये "तारे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः" प्रा० त०। २दातुं योग्ये च। "त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता" रघुः। "सा स्वभावान्यतो भर्त्रा त्याज्या भवति पापिनी। महापातकदुष्टा च पतिगर्भविनाशिनी" व्यासः।

**त्रक** गतौ भ्वा० आत्म०सक०सेट्। त्रकते अत्रकिष्ट। तत्रके।

**त्रख** गतौ भ्वा० पर० सक० सेट् धातुपाठः। त्रखति अत्रखीत् अत्राखीत्। तत्राख। [अत्रङ्खीत्। तत्रङ्ख।

**त्रङ्ख** गतौ भ्वा० पर० सक० सेट् इदित् धातुपाठः। त्रङ्खति

**त्रग** गतौ भ्वा० पर०सक०सेट् इदित्। त्रङ्गति अत्रङ्गीत्। तत्रङ्ग। अयं दिवा० धातुपाठः। त्रङ्ग्यति।

**त्रङ्ग** पुंस्त्री त्रगि–अच्। पुरभेदे हरिश्चन्द्रपुरे सौभे उद्गङ्गे पतिमार्गके त्रिका०।

**त्रन्द** चेष्टायां भ्वा० पर० अक० सेट् इदित्। त्रन्दति अत्रन्दीत्। तत्रन्द।

**त्रप** लज्जायां भ्वा०आ० अक० वेट्। त्रपते अत्रपिष्ट अत्रप्त तेपे। णिच् वा घ०। त्रपयति त्रापयति। षित् त्रपा। "कालया कालसंयोगे किमकारि नवोढया। अत्रापि च क्रिया प्रश्नोत्तरा गुप्ता न बुध्यते" विदग्धमुख०। "अपेक्षाभिन्नायामपि किमपि चेतस्त्रपयति" शान्तिश०। अप–अन्यतो लज्जायाम् "तस्मादपत्रपते" भट्टिः। "लज्जा सापत्रपाऽन्यतः" अमरः।

**त्रपा** स्त्री त्रप–भावे अङ्। १लज्जायाम् अमरः। कर्त्तरि अच्। २सलज्जे त्रि०। ३कुलटायां स्त्री मेदि०। ४कुले ५कीर्त्तौ च शब्दच०।

**त्रपाक** पुंस्त्री० त्रप–आक। म्लेच्छजातिभेदे उणादि०।

**त्रपारण्डा** स्त्री त्रपायां रण्डा। लज्जाहीनायां वेश्यायां जटा० शब्दक०। वस्तुतः त्रपारण्डेति नामद्वयं मेदिनौ त्रपाशब्दस्य वेश्यार्थकत्वोक्तेः रण्डाशब्दस्य च तदर्थप्रसिद्धेस्तत्समानार्थकत्वौचित्यात्।

**त्रपिष्ठ** त्रि० अतिशयेन तृप्रः अतिशायने इष्ठन् प्रियादि० त्रपादेशः। तृप्रतरे। [स्त्रियां ङीप्।

**त्रपीयस्** त्रि० अतिशयेन तृप्रः ईयसुन् त्रपादेशः। तृप्रतमे

**त्रपु** न० अग्निं दृष्ट्वा त्रपते लज्जते इव त्रप–उन्। १सीसके २रङ्गे च मेदि० तस्य विकारः अण् "त्रपुजतुनोः षुक् च" पा० षुक् च। त्रापुष तद्विकारे त्रि०। "ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च" मनुः। "सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु। ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलम्" भा०उ० ३८ अ०। [लताभेदे।

**त्रपुकर्कटी** स्त्री त्रपु इव शुभा कर्कटी। (ससा) इति ख्याते

**त्रपुटी** स्त्री त्रप–बा०-उटन् गौरा० ङीष्। सूक्ष्मैलायाम्। रत्नमाला।

**त्रपुल** न० त्रप- बा० उल। रङ्गे हिकृपकोषः।

**त्रपुष(स)** न० त्रपुस्याः(षयाः)फलम् अण् फले तस्य लुप्। त्रपुषी(सी)फले। "त्रपुसं(षं) लघु नीलञ्च नवं तृट्क्लमदाहजित्। स्वादु पित्तापहं शीतं रक्तपित्तहरं परम्। तत्पक्वमत्युष्णं स्यात् पित्तलं कफवातनुत्। तद्बीजं तूलं शीतं रूक्षं पित्तास्रकृच्छ्रजित्" भावप्र०।

**त्रपु(ष)स** न०त्रप-बा०उस(ष)। १रङ्गे हिकृपकोषः। गौरा० ङीष् २माहेन्द्रवारुण्यां कर्कटीभेदे (ससा) लताभेदे। सा च पीतपुष्पा कण्टालुः बहुफला क्षुद्रफला कण्टकफला सुधावासा च।

**त्रप्सा** स्त्री घनीभूतदध्न्यादौ। "कृमिकीटपतङ्गैर्दूषिता यत्र मेदिनी। त्रप्सया कर्दमैः क्षिप्रा पान्थैर्या दूरतो व्रजेत्। नखदशनतनजात्वकतुपांसुरजोमलैः। भस्मपङ्कास्थिभिर्वापि प्रच्छन्ना मलिना भवेत्" "त्रप्सा घनीभूतदध्यादि" शु०त०।

**त्रप्र** न० घनेतरदधनि अमरटीकायां विद्याविनोदः।

**त्रय** न०स्त्री त्रयाणामवयवम् अयच्। लिङ्गे १त्रित्वसंख्यायाम् "वेदत्रयं निरदुहत् भूर्भुवः स्वरितीति च" मनुः। स्त्रीत्वपक्षे ङीप्। "व्याघोतिष्ट सभावेद्यामसौ नरशिखित्रयी" माघः त्रयोऽवयवा अस्य अयच्। २त्रित्वसंख्यान्विते त्रि० स्त्रियां ङीप्। "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम्। त्रयं सुविदितं कार्यं धर्म-

शुश्रूषमभीप्सता:" मनुः ङीपन्तः "ऋग्यजुःसामरूपे २वेदत्रये त्रित्वसंख्यान्वितेषु ऋगादिवेदेषु अमरः"एत-द्विदन्तो विद्वांसस्त्रयीनिष्कर्षमन्वहम्" "त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिञ्च शाश्वतीम्" मनुः। "ब्रह्माऽथ पुरुषो रुद्रस्त्रयमेतत् त्रयीमयम्। सर्गादावृङ्मयो ब्रह्मा स्थितौ विष्णुर्यजुर्मयः। रुद्रः साममयोऽन्ताय तस्मात् तस्याशुचिर्ध्वनिः"मनुः।४पुरन्ध्र्यां ५सुमतौ स्त्री विश्वः ६सोमराजीवल्ल्यां स्त्री शब्दच०। ७भवान्याम् दुर्गायाम्। यथा "ऋग्यजुःसामभागेन साङ्गवेदगतापि या। त्रयीति पठ्यते लोके दृष्टा दृष्टार्थसाधिनीति" देवीपु०।

**त्रयःपञ्चाशत्** स्त्री त्र्यधिका पञ्चाशत् त्रिशब्दस्य त्रय आदेशः। (निपात्य) १त्र्यधिकपञ्चाशत्संख्यायां २तत्संख्या-न्विते च बहुत्वेऽप्येकत्वम्। एवं त्रयोदशत्रयोविंशतित्रय-स्त्रिंशत् त्रयश्चत्वारिंशत् प्रभृतयः त्र्यधिकदशादिसंख्यायां तत्संख्ये ये च। इयांस्तु भेदः अशीतिभिन्ने चत्वारिंश-दादौ वा त्रय आदेशः। तेन पक्षे त्रिचत्वारिंशादित्यादि तत्रार्थे अशीतौ नेति त्र्यशीतिः।

**त्रययाय्य** पु० त्रयं जन्मत्रयं याति या--बा० आय्य। जन्म-त्रयप्राप्ते "स्तुतुर्न त्रययाय्यः"ऋ० ६।२।७। "त्रययाय्यो जन्मत्रयं प्राप्तः। जन्मत्रयं कथ्यते। मातुरग्रेऽधि-जननात् द्वितीयं मौञ्जिबन्धनात्। तृतीयं यज्ञदीक्षाया इति जन्मत्रयं स्मृतमिति" तादृशः पुत्र इति"भा०।

**त्रयस्त्रिंश** त्रि० त्रयस्त्रिंशत्+पूरणे डट्। त्र्यधिकत्रिंशत्-संख्यापूरणे स्त्रियां ङीप्।

**त्रयस्त्रिंशत्पति** पु० त्रयस्त्रिंशतो देवानां पतिः। १इन्द्रे हेमच०। २प्रजापतौ च तयोः त्र्यधिकत्रिंशतो देवानां पतित्वात् तथात्वम्। देवानां त्रयस्त्रिंशत्त्वं तु

"अष्टौ वसवः एकादश रुद्रा द्वादशादित्या इमे एव द्यावा पृथिवी त्रयस्त्रिंश्यौ,त्रयस्त्रिंशद्वै देवाः प्रजा-पतिश्चतुस्त्रिंशस्तदेनं प्रजापतिम्" शत० ब्रा० ४।५।६।२। "कतमे ते त्रयस्त्रिंशदित्यष्टौ वसव एकादश रुद्रा द्वादशा-दित्यास्त एकत्रिंशत् इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति" शत० ब्रा० ११।६।३।५। तु अन्यथोक्ता अस्मिन् पक्षे नि-र्धारणषष्ठ्याःसमासात् इन्द्रप्रजापतिपरत्वम् तयो-स्तेषां मध्ये श्रेष्ठत्वेन पतित्वात्तथात्वमिति बोध्यम्। "आदित्यांश्च वसूंश्चैव रुद्रांश्चैवाश्विनावपि" रामा० १। २०। अन्यथा संख्योक्ता।

**त्रयस्त्रिंशस्तोम** पु०·त्रयस्त्रिंशत् स्तोमा अस्य पृषो०। यज्ञ-भेदे। "त्रयस्त्रिंशस्तोमेन शोणः सात्रासाहः पाञ्चालो राजा। तदेतद्गाथयाऽभिगीतम् "सात्रासाहे यजमाने ऽश्वमेधेन तौर्वशाः। उदीरते त्रयस्त्रिंशाः षट् सहस्राणि वर्मिणाम्" शत० ब्रा० १३।५।४।१६।

**त्रयस्त्रिंशिन्** न० त्रयस्त्रिंशत् स्तवः सन्त्यस्मिन् इनि डिच्च। त्रयस्त्रिंशद्गणभिगीयमाने सामभेदे। "त्रयस्त्रिंशि नाम साम माध्यन्दिने पवमाने भवति" तैत्ति० १।२।२।४

**त्रयीतनु** पु० त्रयी वेदा एव तनुरस्य। १सूर्ये हला०। "स्वर्गद्वारं त्रय्या विद्यया भगवन्तं त्रयीमयं सूर्यमात्मानं यजन्ते" भाग०५।२०।७। तस्य त्रयीमयत्वोक्तास्तथात्वम्।

**त्रयीधर्म्म** पु० त्रय्या वेदत्रयेण विधीयमानो धर्मः शाक०। वैदिके धर्मे ज्योतिष्टोमादौ अमरः।

**त्रयीमय** पु०त्रय्यात्मकः मयट्। १सूर्ये त्रयीतनुशब्दे उदा० २त्रयीधर्मात्मके त्रि०। "एवं मुहूर्त्तेन चतुस्त्रिंशल्लक्ष-योजनान्यष्टशताधिकानि सौरो रथस्त्रयीमयोऽसौ चत-सृषु परिवर्त्तते पुरीषु" भाग० ५ २१।१७। "त्रयीमयं रूपमिदञ्च शौकरम्"इत्युक्ते वाराहे ३रूपे न०तद्रूपवि-वृतिस्तत्रैव "स्रुक्तुण्ड आसीत् स्रुव ईश! नासयोरिडो दरे चमसाः कर्णरन्ध्रे। प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम्। दीक्षानुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः जिह्वाप्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते। सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव! धातवः। सत्राणि सर्वाणि शरीरसन्धयस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः। नमो नमस्तेऽखिलमन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने" भाग० ३।१३।४०। ४परमेश्वरे च पु०। "स एष आत्मात्मव-वतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः" भाग०२।४।१९।

**त्रयीमुख** पु० त्रयी मुखेऽस्य। विप्रे हेमच०।

**त्रयोदशन्** त्रि०त्रयश्च दश च, त्र्यधिका वा दश शाक० त्रय आदेशः। १त्र्यधिकदशसङ्ख्यायां २तत्संख्यान्विते च। "क्वचित् द्वादश मासाः संवत्सराः क्वचित् त्रयोदश मासाः" श्रुतिः म०त०। ततः पूरणे डट्। त्रयोदश तत्पूरणे त्रि० "ज्यैष्ठे ज्येष्ठस्य कुर्वीत त्रयोदशादिनात् परम्" ज्यो० स्त्रियां ङीप्। सा च चन्द्रस्य त्रयोदशकलाक्रियात्मके तिथिभेदे सा च वारतिथिः तत्रैव तस्योत्पत्तेः। "त्रयो-दशी पञ्चदशी च माघे" मन्वादिकथने"वरुणेन समायुक्ता मघौ कृष्णा त्रयोदशी" वारुणीकथने च ति०त०।

**त्र्यारुण** पु० मान्धातृवंश्ये त्रिधन्वनः सुते नृपभेदे "राम-

"त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते" सू० सि० ।

**त्रिंशक** त्रि० त्रिंशता क्रीतः वुन् डिच्च । त्रिंशत्संख्यान्वित-द्रव्येण क्रीते वस्तुनि ।

**त्रिंशत्** स्त्री० त्रयोदशतः परिमाणमस्य नि० । १त्रिदशकसं-ख्यायां २तत्संख्यान्विते च । तत्र संख्येये "निमेषा दश चाष्टौ च काष्ठाः त्रिंशत्तु ताः कलाः। त्रिंशत् कला मुहूर्तः स्यादहोरात्रन्तु तावतः" "त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्" मनुः "संख्यायां "तस्त्रिंशता भवे-न्मासः" सू० सि० ।

**त्रिंशत्क** त्रि० त्रिंशत्परिमाणमस्य कन् । १त्रिंशत्परिमाणे अवयवे कन् । २तत्संख्यायाम् "अमावास्याः पृथक् तेषां त्रिंशत्कं परिकीर्त्यते" कामन्द० ।

**त्रिंशति** स्त्री त्रिंशत्+पृषो०। १त्रिंशत्संख्यायां २तत्संख्येये च ।"पञ्चकं मण्डलं जयं त्रिंशत्यास्तु मनीषिभिः"काम०

**त्रिंशत्तम** त्रि० त्रिंशतः पूरणः तमप् । १त्रिंशत्संख्यापूरणे स्त्रियां ङीप् । "ततस्त्रिंशत्तमे व्यूहे पङ्क्तिमभ्यतिष्ठन्" शत०ब्रा० १०।४।२।२२ ।

**त्रिंशत्पत्र** न० त्रिंशत्संख्यानि पत्राणि दलानि प्रतिपुष्प-मस्य । १कुमुदे शब्दमाला ।

**त्रिंशांश** पु० त्रिंशस्त्रिंशत्पूरणोऽंशः । राशेस्त्रिंशत्पूरणे भागे षष्टिकलात्मके भागे पञ्चवर्गान्तर्गतानां राशिभेदे तेषामंशविशेषाणामधिपतयः ज्यो० उक्ता यथा

"पञ्च पञ्चाष्टसप्ताश्चा विषमे त्रिंशदंशकाः । भास्के-यशनिजीवज्ञशुक्राणां व्युत्क्रमात् समे" । विषमराशौ कुजशनिगुरुबुधशुक्राणां पञ्च पञ्चाष्टसप्तपञ्चमितास्त्रिंशां-शकाः क्रमात् ज्ञेयाः । समे राशौ व्युत्क्रमात् तेषां विपर्ययेण त्रिंशांशा ज्ञेयाः । यथा मेषो विषमराशिः तत्र प्रथमावधिपञ्चांशा भौमस्य । षष्ठांशमारभ्य दशमां-शपर्य्यन्तं पञ्चांशाः शनेः । एकादशांशमारभ्याष्टादशांश-पर्य्यन्तमष्टावंशा गुरोः । ऊनविंशांशमारभ्य पञ्चविंशांश-पर्य्यन्तं सप्तांशा बुधस्य । ततः षड्विंशांशमारभ्य त्रिं-शांशपर्य्यन्तं पञ्चांशाः शुक्रस्य त्रिंशांशाः क्रमात् ज्ञेयाः। मिथुनसिंहतुलाधनुःकुम्भेष्वप्येवम् । समराशौ व्युत्-क्रमाद्यथा । वृषे प्रथमांशमारभ्य पञ्चांशा भृगोः । ततो द्वादशांशपर्य्यन्तं सप्तांशा बुधस्य, ततो विंशांश-पर्य्यन्तमष्टावंशा गुरोः । ततः पञ्चविंशांशपर्यन्तं पञ्चांशाः शनेः, ततस्त्रिंशांशपर्यन्तं पञ्चांशाः कुजस्य त्रिंशांशाः । एवं कर्कटकन्यावृश्चिकमकरमीनेष्वपि बोध्याः। त्रिंशदंशका इत्यत्र इत्ती त्रिभागवत् पूरणार्थता

**त्रिंशिन्** त्रि०त्रिंशत् प्रमाणमस्य इनि डिच्च । त्रिंशत्प्रमाणे स्त्रियां ङीप् ।

**त्रिक** न०त्रयाणां संघः कन् ।१त्रित्वसंख्यायाम् २पृष्ठवंशाधो-भागे,३कटिभागे,४त्रिफलायाम् (हरितक्यामलकीवयस्था-फलत्रये) ५त्रिकटुनि, (शुण्ठीपिप्पलीमरिचत्रये) । वा-तादिषु मिलितेषु त्रिषु कायति कै-क । ६गोक्षुरे प० अमरः । ७त्रिपथसंस्थाने हेम० । ८त्रिमदे "गुडूची-क्वाथसंयुक्तात् त्रिकत्रयसमन्वयात् । वातरक्तं नि-हन्त्याशु सर्वरोगहरस्त्वयः"सुखबोधः त्रिकत्रयं त्रिकटु-त्रिमदम् त्रिफलम् चेति त्रयमित्यर्थः।"युगं समुत्कारवि-वर्तितत्रिकः" माघः । "व्यपोढपार्श्वैरपवर्तितत्रिका" किरा० । "त्रिफला तु फलत्रिकम् "कश्चिद्विवृत्तत्रि-कभिन्नहारः" रघुः । "एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथा" हरिका० । ९तृतीयेण रूपेण ग्रहणं यस्य कन् पूरणप्रत्ययस्य वा लुक् । १०तृतीयके त्रि० । त्रयः अधिकाः शुल्कं लाभो वृद्धिर्वा यत्र शतादौ ११त्र्यधिकलाभादियुक्ते शतादौ । "द्विकं त्रिकं चतुष्कञ्च पञ्चकञ्च शतं समम् । मासस्य वृद्धिं गृह्णीयात् वर्णाना-मनुपूर्वशः"मनुः। (शतकरा तिनटाका सुद) "स्कन्धयोः पृष्ठवंशास्थ्नोर्यः सन्धिस्तत्त्रिकं स्मृतम्" इत्युक्ते १२सन्धिभेदे न०।

**त्रिककुद्** पु० त्रीणि ककुदतुल्यानि शृङ्गाण्यस्य ककुदस्य अन्त्यलोपः समा० । त्रिकूटाख्ये पर्वतभेदे अमरः । पर्वत-पक्षस्य अन्त्यलोपः नान्यत्र । तत्र त्रिककुद तद्युक्ते त्रि० । २विष्णावपि पु० वा अन्त्यलोपः । "तथैवाहं त्रिककुदो वाराहं रूपमास्थितः । त्रिककुत् तेन विख्यातः शरीरस्य प्रमापणात्" भा० शा० ३४४ अ० । ३दशरात्र-साध्ये यज्ञभेदेऽपि वा अन्त्यलोपः । "त्रिककुद्वा एष यज्ञो यद्दशरात्रः ककुत् पञ्चदशः ककुदेकविंशः ककुत्त्रय-स्त्रिंशो य एवं विद्वान् दशरात्रेण यजते त्रिककुदेव समानानाम्" तै०सं०७।२।५।२ । "चतुष्टोमात् समूढा त्रिककुदः शस्तम् अथ महात्रिककुदश्च, छन्दोमत्रिककुदश्च" शा० श्रौ० १६।२६।१४ । "यत्र वा इन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीत्तं गिरिं त्रिककुदमकरोत्" शत० ब्रा०३।१।३। १२।"वर्षिष्ठः पर्वतानां त्रिककुन्नाम ते पिता"अथ०४।९।८।

**त्रिककुभ्** पु० त्रेधा कं पीतसदृशं कुभ्नाति कुभ-क्विप् छान्दसः सलोपः । १उदाने वायौ "उदानो वै त्रिककुप्छन्दः"शत०ब्रा०८।५।२।४। २नवरात्रसाध्ये यज्ञ०

भेदे । त्रिककुभोऽप्यत्र । त्रिककुबध्यर्द्धः पुंस्त्रः । अह्नात्रिककुप् व्यूढो नवरात्रः । समूढ़स्त्रिककुप्समूढः" आश्व०श्रौ०१०। ३।२१ नवरात्र इत्यनुवर्त्तते, नारा० "चतुष्टोम त्रिककुबध्यर्द्धोऽभिप्लवः एतैश्चतुर्भिः स्वानां श्रैष्ठ्यकामो यजेत । २२ एतैस्त्रिककुम्भ्राजिककुप्समूढ़स्त्रिककुप्चतुष्टोमत्रिककुब्भिः स्वानां श्रैष्ठ्यकामो यजेत । एतेषां दशमो वैश्वानर एव भवति । कामश्चैतेषामेकैकेन सम्बध्यते" नारा० ।

**त्रिककुब्धामन्** पु० मूर्द्धाधोमध्याभेदेन त्रयाणां ककुभां दिशां समाहारः त्रिककुब् तत् धाम आश्रयो यस्य । विष्णौ विष्णुस० । [ गोक्षुरवृक्षे शब्दर० ।

**त्रिकट** पु० त्रीन् वातादिदोषान् कटति आवृणोति अच् ।

**त्रिकटु** न० त्रयाणां कटुरसानां समाहारः । मिलितेषु शुण्ठीपिप्पलीमरिचेषु हेम० । "विश्वोपकुल्यामरिचं त्रयं त्रिकटु कथ्यते । त्र्यूषणं दीपनं हन्ति श्वासकास त्वगामयान् । गुल्ममेहकफस्थौल्य मेदश्लीपदपीनसान्" भावप्र० ।

**त्रिकण्ट** पु० त्रयः कण्टाः कण्टका अस्य । १गोक्षुरे २क्षुद्रगोक्षुरे, च रत्नमा० (टेंगरा) ३मत्स्यभेदे शब्दर० । ४पलगुप्ते शब्दच० । बृहत्यग्निदमनीदुःस्पर्शात्मके ५द्रव्ये राजनि० ।

**त्रिकण्टक** पु० स्त्री० लघुगर्गमत्स्ये त्रिका० समा० द्वि० । २कण्टकत्रये स्त्री । ततः परिमाणे रजता० अञ् । त्रैकण्टक तत्परिमाणे । त्रयः कण्टका अस्य । ३गोक्षुरवृक्षे पु० हेमच० । ४कण्टकत्रयान्विते त्रि० ।

**त्रिकद्रुक** पु० ज्योतिर्गौरायुरित्येतन्नामके "अभिप्लवाहस्त्रिके "अभिप्लवत्र्यहं पूर्वं त्रिकद्रुका इत्याचक्षते" आश्व०श्रौ० ११। ३।१ "त्रिकद्रुकेषु पाहि सोममिन्द्र!" ऋ०२।११।१७ "त्रिकद्रुकेषु ज्योतिर्गौरायुरित्येतन्नामकेषु आभिप्लविकेष्वहःसु" भा० "त्र्यहार्थे ज्योतिर्गौरायुरिति त्रिकद्रुकाः" कात्या० श्रौ० २४।१।६ त्रिकद्रुक इति ज्योतिरादीनां समुदितानां संज्ञा संव्यवहारार्था" कर्कः "त्रिकद्रुकाः पृष्ठावलम्ब्य इति पशुकामस्य" आश्व० श्रौ० ।१०।१।६ ।

**त्रिकर्म्मन्** पु० त्रीणि कर्म्माण्यस्य । यजनं याजनञ्चैव तथा दानप्रतिग्रहौ । अध्यापनञ्चाध्ययनं षट् कर्मा धर्मभाग् द्विजः" भा० अनु० १११ अ० । उक्तेषु षट्सु कर्मसु मध्ये इत्यर्थयाजनप्रतिग्रहाध्यापनभिन्नाध्ययनयजदानेज्याध्ययनरूपकर्मकारिणि द्विजे । "त्रैविद्यो ब्राह्मणो विद्वान् न चाध्ययनजीवकः । त्रिकर्मा त्रिपरिक्रान्तो मैत्र एव स्मृतः द्विजः" भा० अनु० ।१४१ अ० ।

**त्रिकश** न० त्रयाणां कशानां कशाघातानां समाहारः । कशाघातत्रये । कशाघातत्रिकञ्च कशाशब्दे १८२४पृ० दर्शितम् ।

**त्रिकशूल** न० ६त० । वातजन्ये त्रिकस्थे व्याधिभेदे । "स्फिगस्थ्नोः पृष्ठवंशास्थ्नोर्यः सन्धिस्त्रिकं स्मृतम् । तत्र वातेन या पीड़ा त्रिकशूलं तदुच्यते" भावप्र० ।

**त्रिका** स्त्री त्रिधा कायति कै—क । कूपस्थोपस्थे जलोद्धारके त्रिदारुमये यन्त्रभेदे क्षीरस्वामी ।

**त्रिकाण्ड** पु० त्रीणि काण्डान्यस्य । स्वर्गवर्गादिकाण्डभूमिवर्गादिकाण्डसामान्यकाण्डरूपात्मके नामलिङ्गानुशासने अमरसिंहकृते १कोषभेदे तस्यैव शेषभूतस्त्रिकाण्डशेषः पुरुषोत्तमकृतः यथाह तदुपोद्घाते "अलौकिकत्वादमरः स्वकोषे न यानि नामानि समुल्लिलेख । विलोक्य तेरप्यधुना प्रचारमयं प्रयत्नः पुरुषोत्तमस्य" । २निरुक्ते तदपि त्रिकाण्डं तच्चानुक्रमणिकाभाष्ये दर्शितम् यथा "आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा । तृतीयं दैवतं चेति समाम्नायस्त्रिधा मतः" । त्रयाणां काण्डानां समाहारः ङीप् । त्रिकाण्डी ३काण्डत्रये स्त्री । त्रीणि काण्डानि प्रमाणमस्य मात्रच् द्विगोस्तस्य लुकि क्षेत्रपरत्वे ङीप् त्रिकाण्डी क्षेत्रभक्तिः । त्रिकाण्डमिति रज्ज्वादौ स्त्री टाप् ।

**त्रिकाय** पु० त्रयः काया अस्य त्रिकं दुःखत्रिकमेत्यस्मात् इ—अपादाने अच् वा । बुद्धदेवे हेमच० ।

**त्रिकार्षिक** न० कर्षाय हितम् ठञ् त्रयाणां वातपित्तकफानां कार्षिकम् । नागरातिविषामुस्ताख्ये मिलिते औषधभेदे राजनि० ।

**त्रिकाल** न० त्रयाणां कार्यकालभूतभविष्यत्कालानां समाहारः । १भूतभविष्यद्वर्त्तमानकालत्रये २प्रातर्मध्याह्नरूपकालत्रये च । "त्रिकालं पूजयेद्देवीम्" इति तन्त्रम् । त्रिकालज्ञः । त्रयः काला अस्य । ३कालत्रयवर्त्तिनि त्रि० । साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्" सां० का० । करणस्य मनसः त्रिकालबुद्ध्यादिसाधनत्वं यथा "नदीपूरभेदादभूद्वृष्टिः, अस्ति धूमादग्निरिह नगनिकुञ्जे, अस्त्युपघातके पिपीलिकाण्डसञ्चरणाद्भविष्यति वृष्टिरिति । तदनुरूपाश्च सङ्कल्पाभिमानाध्यवसाया भवन्ति" सा० कौ० ।

**त्रिकालज्ञ** पु० त्रिकालवर्त्तिपदार्थान् जानाति ज्ञा—क । १सर्वज्ञे त्रिकालविदादयोऽप्यत्र । २भूतभविष्यद्वर्त्तमानकालाभिज्ञे त्रि० । "बुद्धं यथा यदा वा भविष्यदादिष्यते त्रिकालज्ञैः" ह०सं० १७ अ० । त्रिकालवेत्ताप्यत्र ।

**त्रिकालदर्शिन्** पु० त्रिकालं तद्वर्तिवस्तु पश्यति दृश–णिनि । १ऋषौ हारा० । २त्रिकालज्ञे त्रि० "प्रश्नं विन्यपि काले त्रिकालदर्शी कलौ भवति" वृ० सं० २१ अ० ।

**त्रिकूट** पु० त्रीणि कूटानि शृङ्गाण्यस्य । लवणसमुद्रमध्यस्थे लङ्कापुराधारे पर्वतभेदे अमरः । "तेऽरुचे केशरिक्रान्त-त्रिकूटशिखरोपमा" माघः "स सागरमनाधृष्यमतिक्रम्य महाबलः । त्रिकूटस्य तटे लङ्कां स्थितः स्वस्थो ददर्श ह" रामा० सु० २ अ० । स आकरत्वेनास्त्यस्य अच् । २तद्भवे सामुद्रलवणे न० । ३सुमेरुसुते क्षीरोदसमुद्रतीरस्थे पर्वते च तत्कथा वामनपु० "सर्वरत्नमयः श्रीमान् त्रिकूटो नाम पर्वतः । सुतः पर्वतराजस्य सुमेरोर्भास्कर द्युतेः । क्षीरोदजलवीच्याभो धौतामलशिलातलः । उत्थितः सागरं भित्त्वा देवर्षिगणसेवितः" इत्युपक्रमे "तस्यैकं काञ्चनं शृङ्गं सेवते यद्दिवाकरः । नानापुष्प-समायुक्तं नानागन्धाधिवासितम् । द्वितीयं राजतं शृङ्गं सेवते यन्निशाकरः । पाण्डुराम्बुदसंकाशं तुषारचयसन्निभम् । वज्रेन्द्रनीलवैदूर्यतेजोभिर्भासयन् दिशः । तृतीयं ब्रह्मसदनं प्रकृष्टं शृङ्गमुत्तमम् । न तत् कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः । नातप्त-तपसो लोका ये च पापकृतो जनाः । तस्य सानुमतः पृष्ठे सरः काञ्चनपङ्कजम् । कारण्डवसमाकीर्णं राजहं-सोपशोभितम् । गजोऽञ्चलसंकाशो मदाञ्चितलो-चनः । तृषितः पातुकामोऽसाववतीर्णश्च तज्जलम् । संलीनः पङ्कजवने यूथमध्यगतश्चरन् । गृहीतस्तेन रौद्रेण ग्राहेणाव्यक्तमूर्त्तिना । गरुडस्थो जगन्नाथो लोका-धारस्तपोधन ! । ग्राहग्रस्तं गजेन्द्रं तं तञ्च ग्राहं जलाशयात् । उज्जहाराप्रमेयात्मा तरसा मधुसूदनः । स्थलस्थं दारयामास ग्राहं चक्रेण माधवः । मोक्षया-मास नागेन्द्रं पाशेभ्यः शरणागतम्" ।

**त्रिकूटलवण** न० त्रिकूटं सामुद्रमिव लवणम् । द्रोणी-लवणे राजनि० ।

**त्रिकूटवत्** पु० त्रीणि कूटानि सन्त्यस्य मतुप् मस्य वः । १त्रि-कूटपर्वते । "हिमवान् पारिपात्रश्च सह्यः शुक्लस्त्रिकूट-वान्" भा० आश्वमेधिकप० श्वेतपर्वतकथने" ४२ अ० ।

**त्रिकूटा** स्त्री भैरवीभेदे तन्त्रसा० ।

**त्रिकूर्चक** न० सुश्रुतोक्ते शस्त्रभेदे अर्द्धधारशब्दे ३७५ पृ० दृश्यम् । "विशेषेण बालवृद्धकुमारभीरुनारीणां राज्ञां राजपुत्राणाञ्च त्रिकूर्चकेन विस्रावयेत्" सुश्रु० ।

**त्रिकोण** त्रि० त्रयः कोणा यस्य । त्रिकोटियुक्ते १पदार्थे "विन्दुत्रिकोणवसुकोणदशारयुग्मम्" तन्त्रे श्रीचक्रोक्तौ । ज्योतिषोक्ते लग्नात् २नवमपञ्चमस्थाने न० । "त्रिकोणं नवपञ्चमम्" दीपि० । "त्रिकोणगान् गुरुश्चैव पश्यन् पूर्ण-फलप्रदः" ज्यो० त० । ३योनौ शब्दकल्पतरुः । ४त्रिभुजे क्षेत्रभेदे न० । क्षेत्रशब्दे २३८१ पृ० समत्रिकोणविषमत्रिको-णादिस्वरूपादिकमुक्तम् । ५कामरूपपीठभेदे "करतोयां समा-रभ्य यावद्दिक्करवासिनीम् । शतयोजनविस्तारं त्रिकोणं सर्वसिद्धिदम्" कामाख्यातन्त्रम् । त्रिकोणपदार्थाश्च कतिचित् कविकल्पलतायां संक्षिप्य दर्शिताः । "हर-हरनेत्रकामाख्याग्निमण्डलैकारवज्रशृङ्गाटशकटयोनि-रूपाः" ।

**त्रिकोणफल** न० त्रिकोणं फलमस्य । १शृङ्गाटके भावप्र० । ६त० । त्रिभुजक्षेत्रफले "लम्बगुणं भूम्यर्द्धं स्पष्टं त्रिभुजे फलं भवति" लीला० । [कारेषु ।

**त्रिक्षार** न० त्रयाणां क्षाराणां समाहारः । मिलिते सर्जि-काक्षारयवक्षारटङ्कणक्षा-

**त्रिक्षुर** पु० त्रीणि क्षुराणीवाग्राण्यस्य । कोकिलाक्षवृक्षे रत्ना० ।

**त्रिखु** न० त्रिधा खमाकाशोऽवकाशः फलेऽस्य । त्रपुषे शब्दच० ।

**त्रिखट्व** न० तिसृणां खट्वानां समाहारः । खट्वात्रये । ततः वा ङीप् । तत्रार्थे स्त्री अमरः ।

**त्रिखर्व** पु० सामवेदशाखाभेदाध्यायिनि "तामेतान्त्रिखर्वा उपा-सते तस्मात्ते सर्द्धमाना न वीयन्ते" ताण्ड्यब्रा० २।८।१। "तामेतां दशसप्ताख्यां विष्टुतिं त्रिखर्वाः शाखिन उपा-सते प्रयुञ्जते" भाष्यम् ।

**त्रिगङ्ग** अव्य० तिसृणां गङ्गानां नदीनां यत्र बहुव्रीह्यर्थे "नदी-भिश्च" पा० अव्ययी० । १तीर्थभेदे । "सप्तगङ्गे त्रिगङ्गे च इन्द्रमार्गे च तर्पयन् । सुधां चैव लभेत् भोक्तुं यो नरो जायते पुनः" भा० अनु० २५ अ० ।

**त्रिगण** त्रि० ६त० । १त्रिवर्गे अमरटीकायां नीलकण्ठः "न बाधतेऽस्य त्रिगणः परस्परम्" किरा० ।

**त्रिगन्धक** न० त्रयाणां गन्धकद्रव्याणां समाहारः । १त्रि-जातके त्रि० नैघण्टुप्रकाशः । त्रिसुगन्धिकमप्यत्र । त्रिजातकशब्दे दृश्यम् ।

**त्रिगम्भीर** पु० त्रिभिर्गम्भीरः । स्वरेण सत्त्वनाभिभ्यां त्रिगम्भीरः त्रिशुः शुभः" काशी० ११ अ० उक्ते शुभलक्षणयुक्ते "त्रिषु विपुलो गम्भीरस्त्रिष्वेव षडुन्नतश्चतुर्ह्रस्वः" इत्युप-क्रमे "नाभिः स्वरः सत्त्वमिति प्रदिष्टं गम्भीरमेतत्त्रितयं नराणाम्" वृ० सं० ६८ अ० ।

त्वक्छेदारि पु॰ ६त॰। पवित्रकद्रे राजनि॰ त्वक्छेदाद्यो-ऽप्यत्र। [ अत्वचीत्। तत्वाच। त्वक्।

त्वच संवरणे तु॰ पर॰ सक॰ सेट्। त्वचति अत्व:चीत्

त्वच्(चा) स्त्री त्वच्यते संव्रियते देहोऽनया त्वचति सं-वृणोति वा देहम् त्वच–क्विप्। १गुडत्वचि (दारचिनि) २वल्कले ३चर्मणि च मेदि॰ ।४स्पर्शग्राहके वाह्येन्द्रियभेदे सा च देहव्यापिनी त्वचिस्थिता स्पर्श-वायोः सत्वांशेनोत्पन्ना वाताधिष्ठातृदेवताका" वेदा॰ सा॰ द्रष्टव्यम्। तत्र "उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः। रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कार-णम्। द्रव्याध्यक्षे, त्वचो योगो मनसा ज्ञानकारणम्" भाषा॰ चर्मन् शब्दे २९०२ पृ॰ दृश्यम्।

चर्मणि "त्वचं समेध्यां परिधाय रौरवीम्" रघुः "आर्जवि त्वचु निर्भिद्य प्राभञ्जनिरमोचयत्" भट्टिः। "त्वगुत्तरासङ्गवतीमधीतिनीम्" कुमा॰। वल्कले "भुजत्वचः कुञ्जरविन्दुशोणाः" कुमा॰। गुडत्वचि "त्वगेलापत्रकै-स्तुल्यैः त्रिसुगन्धि त्रिजातकम्" राजनि॰। हलन्तत्वात् वा टाप्। तत्रार्थे शब्दरत्ना॰ त्वचापत्रम्। "सुश्लक्ष्ण-त्वचोरगः" भा॰ शा॰ ३५०अ॰। "श्रीवत्सवाहोऽरविन्दाक्ष अहिरोमा च त्वक्" हरिवं॰ १७९ अ॰।

त्वच न॰ त्वच–अच्। वल्कले "त्वचवेष्टितमस्थिपञ्जरम्" उद्भटः॰। गुडत्वचम् इत्यादि। प्रयत्ना त्वगस्यास्य अच्। २त्वक्पत्रे न॰। "त्वचं लघूष्णं कटुकं स्वादु तिक्तञ्च रूक्षकम्। पित्तलं कफवातघ्नं कण्डूमारुचिनाशनम्। हृद्बस्तिरोगवातार्शःकृमिपीनसशुक्रहृदिति"। [त्वचयति।

त्वच त्वचं करोति सत्यापाशेत्यादि॰ पा॰ स्वार्थे–णिच् नामधातुः।

त्वचस् न॰ त्वच–असुन्। त्वचि। त्वचसि हितम् यत्। त्व-गिन्द्रियहिते "यच्छ त्वचस्यं ते वयम्" अथ॰ २।२१।७।

त्वचापत्र न॰ त्वचा त्वक् पत्रमिवास्य। (दारचिनि) त्वक्-पत्रे शब्दार्थचि॰।

त्वचिष्ठ त्रि॰ अतिशयेन त्वच्वान् इष्ठन् मतुपो लुकि न पदान्तकार्यम्। अतिशयत्वचन्युक्ते। ईयसुन् त्वचीयस् तत्रार्थे त्रि॰ स्त्रियां ङीप्।

त्वचिसार पु॰ त्वचि सारोऽस्य हलन्तत्वात् वा सप्तम्या न लुक्। वंशे अमरः। [ वावाम् शब्दा॰।

त्वचिसुगन्धा स्त्री त्वचि सुगन्धोऽस्याः अलुक् स॰। कुष्टे-

त्वच्य त्रि॰ त्वचि हितं यत् भत्वात् न पदान्तकार्यम्। त्वचि-हिते। "त्वच्यं द्रव्यं मधुरविपाकम्" सुश्रु॰।

त्वत् त्रि॰ तन–क्विप् अतो वा लुक् च। अन्यार्थे सर्वनामा-यम्। त्वपद् शब्दे दृश्यम्। सर्वनामत्वात् डेरतच् त्वतत्। इति बोध्यम्। [कामादित्वाद्यर्थे "त्वतः सर्वं प्रवर्तते"।

त्वतस् अव्य॰ एकार्थयुष्मदः तसिल् त्वदादेशः। त्वत्स-

त्वदीय त्रि॰ तव इदम् त्यदादित्वेन वृद्धत्वात् छ त्वदादेशः। एकवचनार्थकत्वयुष्मदर्थवाचिनि। "पितृत्वदीयस्य मया-ऽपहारितः" रघुः।

त्वन्च गतौ भ्वा॰ पर॰ सक॰ सेट्। त्वञ्चति अत्वञ्चीत्। तत्वञ्च। उदित्। त्वञ्चित्वा त्वक्त्वा। त्वक्तः

त्वन्च सङ्कोचे रुधा॰ पर॰ सक॰ वेट्। त्वनक्ति अत्वा-ङ्क्षीत् मतान्तरे उदित्। क्त्वा वेट्। अन्यत्र सेट्। त्वक्तः।

त्वद्विध त्रि॰ तवेव विधा प्रकारो यस्य। त्वत्सदृशे।

त्वम्पदलक्ष्यार्थ पु॰ त्वमिति पदस्य लक्ष्योऽर्थः। अज्ञानादि-व्यष्ट्युपाध्युपहिताधारभूते अनुपहितप्रत्यगानन्दरूपे तुरीयचैतन्ये। [जीवस्तु त्वम्पदाभिधः" वेदान्तप॰।

त्वम्पदवाच्य त्रि॰ ६त॰। त्वम्पदाभिधे। "देहादिभिः परिच्छिन्नो

त्वम्पदवाच्यार्थ त्रि॰ त्वम्शब्दार्थे अज्ञानादिव्यष्टिः एतदुपहि-ताल्पज्ञत्वादिविशिष्टं चैतन्यम् एतदनुपहितचैतन्यञ्च। एतत्त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानः त्वम्पदवा-च्यार्थो भवति" वेदान्तसा॰।

त्वम्पदाभिध पु॰ त्वम्पदमभिधा यस्य। त्वम्पदवाच्ये जीवे "आत्मत्वगतया भाति योऽस्मत्प्रत्ययशब्दयोः। अन्तः-करणविच्छिन्नबोधः स त्वम्पदाभिधः" इत्युक्तेः।

त्वयता स्त्री त्वया दत्तम् पृषो॰। त्वया दत्ते इत्यर्थे "मम इन्द्र! त्वयताया इषे" ऋ॰ ७।२०।२०। "त्वयतायै इषे त्वया दत्तायै इषे अन्नाय" भा॰ अन्नाय अन्नं भोक्तुमित्यर्थः।

त्वर वेगे भ्वा॰ आत्म॰ अक॰ सेट्। त्वरते अत्वरिष्ट। घटा॰। णिच्–त्वरयति। भित् त्वरा। ञीत् त्वरितो-ऽसि। "गन्धावः सङ्गतौ तत्र ममापि त्वरते मनः" रामा॰ आर॰ ७८ स॰। "यस्य वा त्वरते बुद्धिः" भा॰ स॰ १५५श्लो॰ "दूता हि त्वरयन्ति माम्" रामा॰ वा॰ "अतत्वरन्न माम् योद्धुम्" भट्टिः।

त्वरा स्त्री त्वर–अङ् ।१वेगे, २अभीष्टलाभार्थं विलम्बासहत्वे च "औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया" रत्नावली।

त्वरायत त्रि॰ त्वरा अयनमस्य यस्य। त्वरान्विते अमरः

त्वरायस् त्वरणे कण्ड्वा॰ आकृतिगणः पर॰ अक॰ सेट्। त्वरायति।

**त्वरि** स्त्री त्वर–भावे भावे इन् । त्वरायां हेमचन्द्रकोषः ।

**त्वरित** न० त्वर–क्त । १शीघ्रे । २तद्वति त्रि० । “पयोऽभिवत् त्वरितं चमूचराः”माघः “त्वरितगतिश्च अनुवतिः” छन्दोम० । ३देवीभेदे स्त्री “अथाभिधास्ये त्वरितां त्वरितं फलदायिनीम्”इत्युपक्रमे तन्त्रसा० तद्ध्यानादिकमुक्तं दृश्यम् ।

**त्वरितक** पु० त्वरितं कायति प्रकाशते जायते कै–क । व्रीहिभेदे ( तोरी ) कृष्णव्रीहीत्याद्युपक्रमे “त्वरितककुक्कुटाण्डकेत्यादि” सुश्रु० ।

**त्वरितगति** स्त्री “त्वरितगतिश्च नजनगैः” छ० म० उक्ते दशाक्षरपादके वर्णवृत्तभेदे । [ क्वचित् अमरः ।

**त्वरितोदित** न० त्वरितमुदितम् । शीघ्रोच्चारिते निरस्ते

**त्वलग** पु० जलग+पृषो० । जलचर्ये पारस्करगृ० ।

**त्वष्ट** त्रि० त्वक्ष–तनूकरणे क्त । तनूकृते शब्दकल्पार्थे अमरः

**त्वष्टि** पु० “मत्स्यघातो निषादानां त्वष्टिस्त्वायोगवस्य च” मनूक्ते सङ्कीर्णजातिभेदे ।

**त्वष्टीमती** स्त्री त्वष्टा तदनुग्रहेणोऽस्त्यस्याः मतुप् पृषो० । त्वष्टृदेवताकोपेतायां स्त्रियाम् “स्त्रीपुंसमिथुनरूपाणां पशुमनुष्यादीनां शरीरनिर्माता त्वष्टा तथा च श्रुत्यन्तरम्–पश्यामग्रं० श्रूयते “यावन्तो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावन्तो वै तत् प्रजायते” तादृशस्य त्वष्टृरनुग्रहोपेता” भा० ।

**त्वष्टृ** पु० त्वक्ष–तृच् । “एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते” भा० आ० ६५ अ० उक्ते ।द्वादशादित्यमध्ये १आदित्यभेदे । “निर्भिन्ने अक्षिणी त्वष्टा लोकपालोऽविशत् विभोः । चक्षुषांशेन रूपाणां प्रतिपत्तिर्यतो भवाम्”भाग०२।६।१४श्लो०। उक्तेस्तस्य नेत्रोपकारकतया नेत्राधिष्ठातृत्वम् ।२देवशिल्पिभेदे अमरः“विश्वकर्मा च त्वष्टा च चक्राते ह्यायुधं बहु” हरिवं० २१६ अ० । “आहूय विश्वकर्माणमथ त्वष्टारमेव च” रामा० बा० ८१ स० । “त्वष्टा तथैवोक्तिं तविश्वकर्मा” हरिवं० २४२ अ० इत्यादिषु तयोर्भेदेन निर्देशात् न पर्य्यायता । ३ तद्देवताके चित्रानक्षत्रे । ४ तक्षणे तक्षके वर्णसङ्करभेदे च । ५तनूकर्त्तरि त्रि० स्त्रियां ङीप् ।६पशुमनुष्यादीनां गर्भान्तःशरीरोत्पत्तिविकारकारके देवभेदे त्वष्टीमतीशब्दे दृश्यम् ।

**त्वष्टृमत्** त्रि०त्वष्टृ+अस्त्यर्थे मतुप् । वीर्य्याधिष्ठातृदेवभेदयुक्ते “त्वष्टृमन्तस्त्वा सपेम”यजु०२७।२०। “त्वष्टा रेतसामधिष्ठाता तद्युक्ताः । वैतुनार्त्तीयपक्षार्थे वीर्य्याधिष्ठाता–पेक्षितोऽत एतद्युक्ताः” वेददी० ।

**त्वाम्कामा** स्त्री त्वां कामयते अण्–णिङ् अण् वेदे द्विती०याया: न लुक् । त्वामभिलषन्त्याम् । “अग्ने ! त्वांकामया गिरा” ऋ० ८।११।७। लोके तु त्वत्काम इत्येव ।

**त्वायु** त्रि० त्वामात्मन इच्छति क्यच् युष्मदस्मदादेशे क्याच्छन्दसि” पा० उ । आत्मनः त्वां भजमाने । “सुता इमे त्वायवः” ऋ० १।२।४ ।

**त्वावत्** त्रि० तवेव दर्शनमस्य युष्मद्+वतुप्प्रकरणे “युष्मदस्मद्भ्यां छन्दसि सादृश्ये उपसंख्यानम्” उक्तेः सादृश्ये वतुप् त्वादेशः “आ सर्वनाम्नः” पा० आ । त्वत्सदृशे “आ च त्वावान् त्मनाप्तः” ऋ० १।३०।१४ ।

**त्वावसु** पु० त्वं वसुर्व्यापकोऽस्य त्वादेशः वेदे पृषो० आ । त्वया व्याप्ते । लोके तु त्वद्वसुः इत्येव ।

**त्वाष्ट्री** स्त्री दुर्गायाम् । “त्वष्टृ तष्टौ स्मृतो धातुस्तस्य तष्टौ–निपातने । त्वजसप्टा प्रजास्तृष्टी त्वाष्ट्री तेन प्रकीर्त्तिता” देवीपु० ४५ अ० ।

**त्वाष्ट्र** त्रि०त्वष्टा देवता अस्य अण् । त्वष्टृदेवताके १आज्यादौ २चित्रानक्षत्रे स्त्री । त्वष्टुः आदित्यभेदस्य अपत्यम् अण् । ३विश्वरूपे ४वृत्रासुरे च । “त्वाष्ट्रस्य चिह्निवरूपस्य गोनाशात्कायः सोऽपि गोत्रीयरायके”ऋ०१०।८।६।“विश्वमान–र्य्यमा पूषा त्वष्टाथ सविता तथा”इत्युपक्रमे विवस्वदादीनां वंशमभिधाय । “त्वष्टुर्दैत्याभवत् भार्य्या रोचना नाम कन्यका । सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्य्यवान् । तं वव्रिरे सुरगणाः स्वस्त्रीयं द्विषतामपि” भाग०६।६अ० ४४श्लो० इति विश्वरूपोत्पत्तिकथा । वृत्रासुरोत्पत्तिकथा च “हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे । इन्द्रशत्रो ! विवर्द्धस्व मा चिरं जहि विद्विषम्” इत्युपक्रमे तदुत्पत्तिमुपवर्ण्य “येनावृता इमे लोकास्तमसा त्वाष्ट्रमूर्त्तिना । स वै वृत्र इति प्रोक्तः पापः परमदारुणः” भाग० ६।६ अ०दृश्या । त्वष्टुः अपत्यम् अण् ङीप् । संज्ञानाम्नि ५सूर्य्यपत्न्यां स्त्री शब्दरत्ना० । छायाशब्दे २९८५ पृ० दृश्यम् । ६त्वष्टृरथे त्रिका० । ७वायभेदे । “इन्द्रो वृत्राद्विभ्यतः प्राविशत् तं त्वाष्ट्रेऽमृतम् अनयामेति तमेतैः सामभिरजनयन्” पञ्चविंशब्रा० ।

**त्विष** दीप्तौ भ्वा० उभ० सक० अनिट् । त्विषति ते । अत्विषत् अत्विक्षत । तित्वेष तित्विषे । त्विषीट । “ओजसा दस्य तित्विषे” ऋ० ८।६।५ । “अमचत्राभ ब्रजनाति

त्विषस्य सत्" ऋ० ५।५४।१२ "अग्निरिव मन्यो ! त्विषितः सहस्व" ऋ० १०।८४।२ ।

**त्विष्(षा)** स्त्री त्विष–सम्प०भावे क्विप् । दीप्तौ । "निर्धौतदोषाः सहसा कृतत्विषः" रघुः । "रविधाम्नि भर्तरि परलोकमभ्युपगते विविशुः । ज्वलनं त्विषः कथमिवेतरथा" "चयस्त्विषामित्यवधारितं पुरः" माघः । हलन्तत्वात् वा टाप् । तत्रार्थे शब्दरत्ना० ।

**त्विषामीश** पु० ६त० अलुक् समा० । १सूर्य्ये हेमच० २अर्कवृक्षे च । [ वृक्षे च ।

**त्विषाम्पति** पु० ६त० अलुक् स० । १सूर्य्ये अमरः २अर्क-

**त्विषि** पु० त्विष–इन् । किरणे हेमच० ।

**त्विषित** त्रि० त्विष् जाताऽस्य तार० इतच् । ज्वलिते । "अग्निरिव मन्यो त्विषितः" ऋ० १०।८४।२ ।

**त्वेषथ** त्रि० त्विष–अथच् । दीप्ते । "शूरस्येव त्वेषथा दीयते वयः" ऋ० १।१४।८ ; [त्वेषः" ऋ० १।६६।११

**त्वेषस्** त्रि० त्विष–असुन् । दीप्ते "अप्स्वेदु त्वेषसा रन्त सि-

**त्वै** अव्य० त्वत–बा० डै । १वितर्के २विकल्पे च शब्दार्थचि० ।

**त्वोत** त्रि० त्वया ऊतः वेदे नि० । त्वया रक्षिते इत्यर्थे । "त्वोतासो न्यर्वता" ऋ० १।८।२ । लोके तु त्वदूत इत्येव

**त्सर** छद्मगतौ भ्वा० पर० सक० सेट् । त्सरति अत्सारीत् । "यस्त्वा स्वपन्तीं त्सरति यस्त्वा दिप्सति जाग्रतीम्" अथ० ८।६।८ । "यो हैनं पाप्मा मायया त्सरति न हैनं सोऽभिभवति" शत० ब्रा० ११।१।६।१७ ।

**त्सरु** पु० त्सर–उन् । खड्गमुष्टौ । "मा मां पद्येन रपसा विदत् त्सरुः" ऋ० ७।५०।१ । "खड्गं च कनकत्सरुम्" भा० व० १५२७ श्लो० । "गृहीतखड्गचर्माणः सत्वरा भूयः प्रहारिणः । त्सरुमार्गान् यथोद्दिष्टांश्चेरुः सर्वासु भूमिषु" भा० शा० ५२४८ श्लो० ।

**त्सारुक** त्रि० त्सरौ तद्युद्धे निपुणः आकर्षा० कन् ततः स्वार्थे अण् । असियुद्धनिपुणे । "तथाऽतिपुरुषानन्यान् त्सारुको यमजावुभौ" भा० आ० १३२-अ० ।

**त्र्यवद्स्पृश्** पु० त्र्यब्दं सौरवर्षत्रयं स्पृशति स्पृश क्विन् चैत्रवर्षत्रययुक्ते चान्द्रसंवत्सरे सौरवर्षभेदे । "एकस्मिन् रविवर्षे सौरवर्षद्वयावसानं चेत् । त्र्यवद्स्पृगेवमेनं विष्णुप्रसृतं प्राहुः" यमाधरजातकम् । "शुचवर्षयुक्तवत्सरा गदिता या तम् भुवर्णचिता" ज्योतिर्विदाभरणम् ।

इति वाचस्पत्ये तकारादिशब्दार्थसङ्कलनम् ।

## थ

थकारः तवर्गीयद्वितीयवर्णः व्यञ्जनवर्णविशेषः अस्योच्चारणस्थानम् दन्तमूलं तदुच्चारणे दन्तमूलेन सह जिह्वाग्रस्पर्शः आभ्यन्तरप्रयत्नः, अतएवास्य स्पर्शवर्णता । बाह्यप्रयत्नास्तु विवारश्वासाघोषमहाप्राणाश्च । अस्य वाचकशब्दा वर्णाभिधाने उक्ता यथा

"थः स्थिरामी महाग्रन्थिर्ग्रन्थिग्राही भयानकः । शिली गिरजिको दन्ती भद्रकाली शिलोच्चयः । कम्पो वह्निर्विकर्णी च दक्षिणनासाधिपोऽमरः । वरदा लोमदा केशो वामजङ्घाऽङ्गुलोऽनलः । नोज्जयिनी पृथुर्बुद्धः घरचन्द्रो विदारकः" । मातृकान्यासे अस्य वामजङ्घायां न्यासः । अस्याधिष्ठातृदेव्याः ध्यानरूपं यथा "नीलवर्णां त्रिनयनां षड्भुजां वरदां पराम् । पीतवस्त्रपरीधानां सदा सिद्धिप्रदायिनीम् । एवं ध्यात्वा थकारन्तु तन्मन्त्रं दशधा जपेत् । पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा । तरुणादित्यसङ्काशं थकारं प्रणमाम्यहम्" अस्य स्वरूपं यथा "थकारं चञ्चलापाङ्गि ! कुण्डली मोक्षरूपिणी । त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा । पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा । तरुणादित्यसङ्काशं थकारं प्रणमाम्यहम्" कामधेनुतन्त्रम् । काव्यादौ अस्य प्राक्प्रयोगे दुःखं फलम् "थस्तु दुःखम्" वृ० र० टीका धृतः ।

**थ** पु० थुड–थुर्व वा ड । १पर्वते २भयत्रायके त्रि० ३मङ्गले ४भये रक्षणे न० मेदि० । [पाङ्गि !" कामधेनुत० ।

**थकार** पु० थ+स्वरूपे कार । थस्वरूपे वर्णे "थकारं चञ्चला-

**थर्व्व** चरणे भ्वा० पर० सक० सेट् । थर्वति अथर्वीत् । तथर्व "अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः" निघण्टुधृता श्रुतिः "अथर्वाणोऽथर्वणवन्तः । थर्वतिश्चरतिकर्मा तत्प्रतिषेधः" निरु० ११।१८ । लोकेऽपि गतिशून्ये ( अथर्व इति ) प्रसिद्धिः ।

**थुड** संवृतौ तु० कु० पर० सक० सेट् । थुडति अथुडीत् । तुथोड । [ करणे शब्दभेदे ।

**थुत्कार** पु० थुत् इत्यव्यक्तशब्दस्य कारः । निष्ठीवनत्यागानु-

**थुथूकृ** थुथु इत्यव्यक्त शब्दात् निष्ठीवनत्यागानुकरणशब्दात् च्वि–कृञोऽनुप्रयोगः । थुथूकरोति । "थुथूकृत्य वमङ्गिरध्वगजने." स्वाङ्गकणाङ्कितम् ।

**थुथूकृत्** स्त्री थुथु इत्यव्यक्तशब्दं करोत्यस्याम् कृ–बा० आधारे क्विप् । ष्ठीवनायां पारस्करादि० ।

युध्ये वधे च्वा० पर० सक० सेट् । यूषति अयूषीत् । युयूष ।

यैषै अव्य० यै—यै इत्यव्यक्तशब्दानुकरणशब्दभेदे संगीतदामो० ।

यो(यु)द्वन न० युध्—भावे ल्युट् कुटादित्वेऽपि वा० गुणः । संयरणे । वस्तुतः युद्धनमित्येव तदर्थे साधु यद्धन्य द्वने योध्नमब्दकरणं प्रमादिकमेव । [शब्दार्थचि० ।

यौषीय त्रि० यूषायां हितादि ढक् चुरो० । यूषाहितादौ

# इति वाचस्पत्ये यकारादिशब्दार्थसङ्कलनम् ।

---

# द

दकारः तवर्गीयतृतीयवर्णः व्यञ्जनवर्णभेदः अस्यो-च्चारणस्थानं दन्तमूलम् । दन्तमूलेन सह जिह्वा-ग्रेण स्पर्शनादस्य उच्चार्यत्वात् स्पर्शवर्णता । अस्यो-च्चारणे बाह्यप्रयत्नाः संवारनादघोषा अल्पप्राणश्च । तस्य वाचकशब्दा वर्णाभिधानोक्ता यथा ।

"दोऽत्रीशोधातकि धीता दाता त्रासः कलत्रकम् । दीनं ध्यानञ्च दानञ्च भक्तिरायहनी धरा । सुषुम्णा योगिनी सद्यःकान्तो वामगुल्फकः । कात्यायनी शिवा दुर्गोऽबडनामा त्रिकण्टकी । स्वस्तिकः कुटिलारूपः कृष्णः श्यामा जितेन्द्रियः । धर्मब्रह्मदेवश्च अमरेशः सुवज्वला । हरिद्रापुरवेदी च दक्षपार्श्वस्थिरेखकः" अस्याधिष्ठातृदेवता ध्यानादि यथा "ध्यानमस्य दकारस्य वक्ष्यते शृणु पार्वति ! । चतुर्भुजां पीतवस्त्रां नवयौवनसंस्थिताम् । अनेकरत्न-घटितहाररत्नूपरशोभिताम् । एवं ध्यात्वा दकारन्तु तन्मन्त्रं दशधा जपेत् । त्रिशक्तिसहितं देवि ! त्रिवि-न्दुसहितं तथा । आत्मादितत्त्वसंयुक्तं दकारं प्रणमा-म्यहम्" वर्णोद्धारतन्त्रम् । अस्य स्वरूपं यथा "दकारं शृणु चार्वङ्गि ! चतुर्वर्गप्रदायकम् । पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा । त्रिशक्तिसहितं देवि ! त्रिविन्दु-सहितं सदा । आत्मादितत्त्वसंयुक्तं स्वयं परमकुण्डली । रक्तविद्युल्लताकारं दकारं हृदि भावयेत्" कामधेनुतन्त्रम् । काव्यादौ अस्य प्रयोगे सौख्यं फलम् । "दोधः सौख्यं मुदं नः" इत्य० ट० टी० उक्तेः । मातृकान्यासेऽस्य वामगुल्फे न्यासः ।

द पु० दैप्—शुद्धौ दा—दाने दो—खण्डने वा क दद्—दाने बा० ड वा । १पर्वते २दत्ते ३दातरि च मेदि० । ४कलत्रे न० एकाक्षरकोषः । दो—खण्डने सम्प० भावे क्विप् । ५खण्डने ६रक्षणे च स्त्री मेदि० । "दावदोऽदडदादीदाददोदूददीददोः । दुह्यादं ददे दुद्दे-ददाददददोऽददः" माघः अस्य मल्लिनाथव्याख्यायामर्थ विशेषा बोध्याः । "अरण्यापावधिदां अरस्वतीम्" कुमा० "करिणां मदे मनसदा मददाः" किरा० । "स्थाद्यन्त-मदं विना न दयते तापस्य कोऽपि क्षमः" "हे! नःपतिविदुषि नैषधराजगत्या:" नैषधम् । हे विदुषिदे विद्वज्जने दाति ! यो वरुणः इति वरुणपक्षे च्छेदः ।

दंश पु० दन्श—अच् भावे घञ् वा । (डांश) मक्षिके कीट-भेदे २सन्नदहने (वर्मणि) ३दंशने च मेदि० । ४दोषे ५सर्पक्षते च विश्वः करणे घञ । ७दन्ते पु० हेमच० "सर्वस्य दंशमशकं स्थावरस्य पृथग्विधम्" । "स्वेदजा दंश-मशकं यूकामक्षिकमत्कुणम्" मनुः । "कण्डूयनैर्दंश-निवारणैश्च" रघुः । गौरा० ङीप् क्षुद्रोदंशः अल्पार्थे ङीप् वा । दंशभेदे (मशक) भेदे स्त्री अमरः ।

दंशक पु० दन्श—ण्वुल् । (डांस) १मक्षिकाभेदे हारा० । २दंशनकर्त्तरि त्रि० ।

दंशन न० दन्श—भावे ल्युट् । (कामडान्) (कुलयदान) १दन्तादिना खण्डने । "दष्टाश्च दंशनैः कान्तं दासीकुर्वन्ति योषितः" सा० द० २वर्मणि न० । "छन्दुनामहत्या ह्य न विभोक्ष्यामि दंशनम्" भा० क० ५७ अ० ।

दंशनाशिनी स्त्री दंशं नाशयति नाशि—णिनि—ङीप् । तैलकीटभेदे राजनि० ।

दंशभीरु पु० दंशात् भीरुः । महिषे हेमच० ।

दंशमूल पु० दंश्यते कर्मणि घञ् दंशं मूलमस्य । शिग्रौ (सजिना) राजनि० ।

दंशित त्रि० दंशः वर्म संजातोऽस्य तार० इतच् । १कृतसन्नाहे छतवर्मणि "कृत्यां बल च सौवर्णास्तयो भान्ति दंशिताः । तेजसा प्रज्वलन्तो हि कर्मतन्नहुत्तमम्" भा० वि० ४२ अ० "छत्राणि च विराजन्ते दंशितानि चि तानि च" हरिवं ५४५४ श्लो० ।

दंशूक त्रि० दन्श वा० ऊक । दंशनशीले । "तस्मात् क्षीवाः दन्दशूका दंशुकाः" तैत्ति० ब्रा० १।७।८।२ ।

दंष्ट्रा स्त्री दंश—ष्ट्रन् गौरादिषु आलामकपदस्य पाठात् नित्यात् ङीपोऽनित्यत्वात् टाप् । १स्थूलदन्तभेदे । दन्त-

पञ्चविंशत्प्रान्ते चत्वारो दन्तभेदा दंष्ट्रा इति प्रसिद्धिः । हिंस्रजन्तुदन्तमात्रविशिष्टे "दंष्ट्राकरालानि च ते मुखानि" गीता । "दंष्ट्रायां धरणिर्येन हिरण्याक्षः परे रोहणी" चा॰ द॰ । "दंष्ट्रामयूखैः शकलानि कुर्वन्" रघुः

**दंष्ट्रानखविष** पु॰ दंष्ट्रायां नखे च विषं यस्य । मार्जारादौ यथाह सुश्रुतः ।

"तत्र दृष्टिनिश्वासदंष्ट्रानखमूत्रपुरीषशुक्रलालार्त्तवमुखसन्दंशविशर्धितास्थिपित्तशूकशवानीति" विषस्थानोपक्रमे "मार्जारश्ववानरमकरमण्डूकपाकमत्स्यगोधाशम्बूकप्रचलाकगृहगोधिकाचतुष्पादकीटास्तथान्ये दंष्ट्रानखविषाः"।

**दंष्ट्राल** त्रि॰ दंष्ट्रा+अस्त्यर्थे चूडा॰ लच् । दंष्ट्रायुक्ते "धूम्रकेशो हरिश्मश्रुर्दंष्ट्रालोऽद्भुताननः" हरिवं॰ ४७ अ॰ ।

**दंष्ट्राविष** पु॰ दंष्ट्रायां विषमस्य । १भौमे सर्पे "भौमास्तु दंष्ट्राविषाः" सुश्रुतः २ लूताभेदे स्त्री । यथाह सुश्रुतः

"विषन्तु लालानखमूत्रदंष्ट्रारजःपुरीषैरथ चेन्द्रियेण ।
सप्तप्रकारं विसृजन्ति लूतास्तदुग्रमध्यावरवीर्ययुक्तम् ।
स्वकच्छकोठं स्थिरमल्पमूलं लालाकृतं मन्दरुजं वदन्ति ।
शोफश्च कण्डूश्च पुलाकिका च धूमायनं चैव नखाग्रदंशे ।
दंशन्तु मूत्रेण सकृष्णमध्यं सरक्तपर्य्यन्तमवेहि दीर्णम् ।
दंष्ट्राभिरुग्रं कठिनं विवर्णं जानीहि दंशं स्थिरमण्डलञ्च"।

लालाविषाद्योऽप्यत्र । [शुभाद्योऽप्यत्र

**दंष्ट्रास्त्र** पुंस्त्री दंष्ट्रास्त्रमिवास्य । वराहे शब्दार्थचि॰ । दंष्ट्रा-

**दंष्ट्रिका** स्त्री दंष्ट्रा स्वार्थे क कापि ह्रस्वे अत इत्त्वम् । दाढिकायां दंष्ट्रायामस्त्यर्थे । दंष्ट्रा+व्रीह्या॰ वा ठन् । दंष्ट्रायुक्ते त्रि॰ ।

**दंष्ट्रिन्** पु॰ दंष्ट्रा अस्त्यर्थे व्रीह्या॰ इनि । शूकरे अमरः २सर्पे शब्दर॰ । ३दंष्ट्रायुक्ते त्रि॰। "दंष्ट्रिभिः शृङ्गिभिर्वापि हताश्चैव तस्करैः" शु॰ त॰ अग्निपु॰ ।

**दंसना** स्त्री चु॰दन्स–भावे युच् । १कर्म्मणि निघण्टुः दंसय इति शब्दस्य कर्मपर्य्यायतोक्तेस्तथार्थत्वम् । "तव क्रत्वा तव तद्दंसनाभिः" ऋ॰ ६।१७।६ । "दंसनाभिः कर्मभिः" भा॰ ।"शची वसव दंसना" ऋ॰ १।२९।२।

**दंसस्** न॰ दन्स–असुन् । कर्म्मणि निघण्टुः "यावतमशिव दंसः" ऋ॰ १।६२।६ । "अवर्द्धयो वव्रिणो अस्य दंससा" १०।१२८ । "दंससा कर्म्मणा" भा॰ ।"शचीभावक्षिणा दंसोभिः" यजु॰ १२।७४ ।

**दंसि** पु॰ दन्स–इन् । कर्म्मणि । "कृत्वाय मस्मदाय दंसयः" ऋ॰ १०।१३८।१ । "दंसयः कर्माणि" भा॰ "दंसयः कर्माणि दंसयन्ते नानि" निरुक्ते ४।२५ ।

**दंसिष्ठ** त्रि॰ दन्स–तृच् दंसिता अतिशयेन वा इष्ठन् तृचो लुकि चिलोपः । १अतिशयकर्मकर्त्तरि । "दस्रा दंसिष्ठा रथ्या रथीतमा" ऋ॰ १।१८२।२। "दंसिष्ठा अतिशयितकर्माणौ" भा॰ । अश्विनोरुक्तौ चास्य । २दर्शनीयतमे ३अतिशयेन शत्रुहिंसके च । "येना दंसिष्ठ ! क्रत्वे" ऋ॰८।२४।२५।"हे दंसिष्ठ ! दर्शनीयतम ! शत्रूणां क्षपयितः !" भा॰ । अत्र द्वयोः दंसेर्वा धातोरूपं प्रयो॰।

**दक** न॰ उदक+पृषो॰ दैप्–शोधे क ततः संज्ञायां कन् वा । जले त्रिका॰ दकोदरम् । दकार्गलम् ।

**दकोदर** न॰ दकं जलस्फीतमुदरं यत्र । सुश्रुतोक्ते जलोदराख्यनामके उदररोगभेदे यथा "यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथ वा निरूढः । पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि । स्नेहोपलिप्तेष्वथ वापि तेषु दकोदरं पूर्ववदभ्युपैति । स्निग्धं महत्तत्परिवृत्तनाभि भृशोन्नतं पूर्णमिवाम्बुना च । यथा दृतिः क्षुभ्यति,कम्पते च शब्दायते चापि दकोदरं तत् । "नाभेरधश्चतुरङ्गुले वेधव्या वामपार्श्वे दकोदरे" "वेध्याः शिरा बहुविधा मूलवृद्धिदकोदरम्" सुश्रु॰ ।

**दक्ष** वृद्धौ शीघ्रार्थे च भ्वा॰ आत्म॰ अक॰ सेट् । दक्षते अदक्षिष्ट । ददक्षे । दक्षः । "त्वमिन्द्रो मर्त्तादिमाक्षि दक्ष" ऋ॰ २।१।११।

**दक्ष** हन्त्यर्थे (गतौ वधे च) भ्वा॰ आत्म॰ सक॰ सेट् । दक्षते अदक्षिष्ट ददक्षे । मित् तत्करणसामर्थ्यात् अनुपधाया अपि दीर्घे णिचि अदाक्षि अदक्षि णमुलि दक्ष दक्षम् दाक्षं दाक्षमिति रूपं मित् भावे च । दक्षा ।

**दक्ष** पु॰ दक्ष–कर्त्तरि अच् । १ताम्रचूडे दक्षसंहिताकर्त्तरि २मुनिभेदे ३शिववृषभे ४हरभेदे ५अग्नौ च विश्वः । ६महेश्वरे शब्दरत्ना॰ । ब्रह्मणो दक्षिणाङ्गुष्ठजाते ७प्रजापतिभेदे । दक्षतरे अन्येषु कार्य्येषु चोपस्थितेषु सद्य एव कार्य्यकर्त्तरि च समर्थे पटौ त्रि॰ मेदि॰ ।

"दक्षस्त्वजायताङ्गुष्ठाद्दक्षिणाद्भगवान् ऋषिः । ब्रह्मणः पृथिवीपाल ! शान्तात्मा सुमहातपाः । वामादजायताङ्गुष्ठाद्भार्य्या तस्य महात्मनः । तस्यां पञ्चाशतं कन्याः स एवाजनयत् मुनिः । ताः सर्वास्त्वनवद्याङ्ग्यः कन्याः कमललोचनाः । पुत्रिकाः स्थापयामास नष्टपुत्रः प्रजा-

पतिः" भा० आ० ६६ अ० तस्य पुत्रनामकथा दक्षशब्दे वक्ष्यम् हरिवंशे २अ० तु तस्य प्राचेतसत्वमुक्तं यथा

"उपगम्याब्रवीदेतानथ सोमः प्रजापतीन्। कोपं यच्छत राजानः! सर्वे प्राचीनबर्हिषः!। वृक्षशून्या कृता पृथ्वी शाम्येतामग्निमारुतौ। रत्नभूता च कन्येयं वृक्षाणां वरवर्णिनी। भविष्यं जानता तत्त्वं धृता गर्भेण वै मया। मारिषा नाम कन्येयं वृक्षाणामिति निर्मिता। भार्या वोऽस्तु महाभागा सोमवंशविवर्द्धिनी। युष्माकं तेजसोऽर्द्धेन मम चार्द्धेन तेजसः। अस्यामुत्पत्स्यते पुत्रो दक्षो नाम प्रजापतिः। स इमां दग्धभूयिष्ठां युष्मत्तेजोमयेन वै। अग्निनाऽग्निसमो भूत्वा प्रजाः संवर्द्धयिष्यति। ततः सोमस्य वचनाज्जगृहुस्ते प्रचेतसः। संहृत्य कोपं वृक्षेभ्यः पत्नीं धर्मेण मारिषाम्। मारिषायां ततस्ते तु मनसा गर्भमादधुः। दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः। दक्षो जज्ञे महातेजाः सोमस्यांशेन भारत!। पुत्रानुत्पादयामास सोमवंशविवर्द्धनान्। अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदः। स सृष्ट्वा मनसा दक्षः पश्चादसृजत स्त्रियः। ददौ स दश धर्माय कश्यपाय त्रयोदश। शिष्टाः सोमाय राज्ञेऽथ नक्षत्राख्या ददौ प्रभुः। तासु देवाः खगा गावो नागा दितिजदानवाः। गन्धर्वाप्सरसश्चैव जज्ञिरेऽन्याश्च जातयः। ततः प्रभृति राजेन्द्र! प्रजा मैथुनसम्भवाः। सङ्कल्पाद्दर्शनात् स्पर्शात् पूर्वेषां प्रोच्यते प्रजा"।

अनयोर्विरोधमाशङ्क्य कल्पभेदादविरोधः भङ्ग्या तत्रैव समाहितो यथा

"जनमेजय उवाच। देवानां दानवानाञ्च गन्धर्वोरगरक्षसाम्। सम्भवः कथितः पूर्वं दक्षस्य च महात्मनः। अङ्गुष्ठाद्ब्रह्मणो जातो दक्षः प्रोक्तस्त्वयाऽनघ!। वामाङ्गुष्ठात्तथा चैव तस्य पत्नी व्यजायत। कथं प्राचेतसत्वं स पुनर्लेभे महातपाः। एतन्मे संशयं विप्र! व्याख्यातुमर्हसि। दौहित्रश्चैव सोमस्य कथं श्वशुरताङ्गतः"। वैशम्पायन उवाच। "उत्पत्तिश्च निरोधश्च नित्यौ भूतेषु पार्थिव!। ऋषयोऽत्र न मुह्यन्ति विद्वांसश्चैव ये जनाः। युगे युगे भवन्त्येते सर्वे दक्षादयो नृपाः। पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति। ज्यैष्ठ्यं कानिष्ठ्यमप्येषां पूर्वं नासीज्जनाधिप!। तप एव गरीयोऽभूत् प्रभावश्चैव कारणम्" हरिवं० २अ०। ८औशीनरपुत्रभेदे "शिविर्वरः कृमिर्दक्षश्चत्वारौशीनरात्मजाः" भाग० ६। २३।४। ९दाक्षायण्यां "जानतो जानकी यस्य दक्षभागे च लक्ष्मणः। भारतिः पुरतो यस्य" रामकवचम्। १०विष्णौ "उग्रः संवत्सरो दक्षः" विष्णुस०। "जगद्व्यापारवर्त्तमानत्वात् सर्वकर्माणि क्षिप्रं करोतीति वा दक्षः" भा०। तत्र कुशले "दक्षमिह मधुपावरवारम्" "उपवनपवनास्त्रपातदक्षैः" माघः "रत्नान्येवचदक्षाणां हिमाभिमुखतां ययौ" रघुः। "मेरौ स्थिते दोग्धरि दोहदक्षे" कुमा०। दक्ष हिंसे करणे अच्। ११वृषे निघण्टुः।

"स दक्षाणां दक्षपतिर्बभूव" ऋ० १।९५।६। "दक्षाणां बलानाम् मध्ये यदतिशयितं बलं तस्याधिपतिः" भा०। १२वीर्ये न० "स दक्षैर्दक्षपितेह सीद देवानाम्" यजु० १४।२। "स दक्षैः वीर्यैः सामर्थ्यैः सह, दक्षशब्दोऽत्र वीर्यार्थः। दक्षपिता दक्षं वीर्यं पातीति पालयिता" वेददी०।

दक्षकन्या स्त्री ६त०। दक्षस्य सुतासु तासु षष्टिः। यथाह मत्स्यपु० ५ अ०।

"ततस्तेषु विनष्टेषु षष्टिं कन्याः प्रजापतिः। वैरिण्यां जनयामास दक्षः प्राचेतसस्तथा। प्रादात् स दश धर्माय कश्यपाय त्रयोदश। सप्तविंशतिं सोमाय चतस्रोऽरिष्टनेमये। द्वे चैव भृगुपुत्राय द्वे कृशाश्वाय धीमते। द्वे चैवाङ्गिरसे तद्वत्तासां नामानि विस्तरात्"। "तांश्चैव नष्टान् विज्ञाय पुत्रान् दक्षः प्रजापतिः। षष्टिं ततोऽसृजत् कन्या वैरिण्यामिति नः श्रुतम्। तास्तदा प्रतिजग्राह भार्यार्थं कश्यपः प्रभुः। सोमो धर्मश्च कौरव्य! तथैवान्ये महर्षयः। ददौ स दश धर्माय कश्यपाय त्रयोदश। सप्तविंशतिं सोमाय चतस्रोऽरिष्टनेमिने। द्वे चैव बहुपुत्राय द्वे चैवाङ्गिरसे तथा। द्वे कृशाश्वाय विदुषे तासां नामानि मे शृणु" हरिवं० २ अ०। २सतीनाम्न्यां भवपत्न्यां दुर्गायाञ्च तत्कथा "प्रसूतिं मानवीं दक्ष उपयेमे ह्यजात्मजः। तस्यां ससर्ज दुहितॄः षोडशामललोचनाः। त्रयोदशादाद्धर्माय तथैकामग्नये विभुः। पितृभ्य एकां युक्तेभ्यो भवायैकां भवच्छिदे" भाग० ४।१। "कथापमानेन पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी। सती सती योगविसृष्टदेहा" कुमा०। दक्षसुतादयोऽप्यत्र।

दक्षक्रतु पु० ६त०। दक्षप्रजापतिकृते निरीश्वरभागे यज्ञभेदे। तद्यज्ञकथा काशी० ८७ अ० यथा

"अहं यियक्षुर्यूयं मे यज्ञसाहाय्यकारिणः। भवन्तु यज्ञसम्भारानानयन्तु त्वरान्विताः। श्वेतद्वीपगतो गत्वा

यज्ञे चाग्निचयनच्युतम् । सहाकल्पपरीहारं यज्ञपूरुषमेव च । तत्रर्त्विजोऽभवन् सर्वे ऋषयो ब्रह्मवादिनः । प्रावर्त्तत ततस्तस्य दक्षस्य च महाध्वरः । दूरादेव निकायाश्च तस्मिन् दक्षमहाध्वरे । अनीश्वरास्ततो वेधा भागं कृत्वा स्वकं ययौ । दधीचिस्तु संवीक्ष्य सर्वांस्तांल्लोकवासिनः । दक्षयज्ञे समेयातान् सतीश्वरविवर्जितान् । प्राप्तसम्मानसम्भारान् वाचोऽवद्दुतिपूर्वकम्” इत्युपक्रमे तत्र दधीचिना सह दक्षस्य उक्तिप्रत्युक्ती यथा

“तं विदन्ति वशिष्ठाद्यास्तथार्त्विज्यं भजन्ति ये । एको रुद्रो न द्वितीयः संविदानाश्चपीति हि । प्रावर्त्तन्तर्षयोऽन्येऽपि गौरवात्तस्य च क्रतौ । यदि मे ब्राह्मणस्यैकं शृणोषि वचनं हितम् । तदा क्रतुफलाधीशं विश्वेशं तं समाहूय । विना तेन क्रतुरसौ कृतोऽप्यकृत एव हि । सति तस्मिन् महादेवे विश्वकर्मैकसाक्षिणि । तथापि चैषां सर्वेषां फलिष्यति मनोरथः । यथा जडानि बीजानि न फलन्ति स्वयं तथा । जडानि सर्वकर्माणि न फलन्तीश्वरं विना । अर्थहीना यथा वाणी धर्महीना यथा तनुः । पतिहीना यथा नारी शिवहीना तथा क्रिया । गङ्गाहीना यथा देशाः पुत्रहीना यथा स्पृहाः दानहीना यथा सम्पत् शिवहीना तथा क्रिया । मन्त्रहीनं यथा राज्यं श्रुतिहीना यथा द्विजाः । योषाहीनं यथा सौख्यं शिवहीना तथा क्रिया । दर्भहीना यथा सन्ध्या तिलहीनं तु तर्पणम् । हविर्हीनो यथा होमः शिवहीना तथा क्रिया । इत्थं दधीचिनाख्यातं जग्राह वचनं न तत् । दक्षो दक्षोऽपि तत्रैव शम्भोर्मायाविमोहितः । प्रोवाच च स्वयं क्रुद्धः का चिन्ता तव मे क्रतोः । क्रतुतन्त्राणि सर्वाणि यानि कर्माणि सर्वशः । तानि सिध्यन्ति नियतं यथार्थकरणादिह । असद्यथार्थविधानेन सिद्ध्येत् कर्मापि नेशितुः । स्वकर्मसिद्धये वाद्य सर्व एव हि चेश्वरः । ईश्वरः कर्मणां साक्षी यत् त्वयापीति भाषितम् । तत्तथास्तु परं साक्षी नार्थं दद्याच्च कुत्रचित् । जडानि सर्वकर्माणि न फलन्तीश्वरं विना । यदुक्तं भवता तत्राप्यहो दृष्टान्तयान्तरम् । जडान्यपि च बीजानि कालं संप्राप्य चात्मना । अङ्कुरयन्ति कालाच्च पुष्यन्ति च फलन्ति च । विनाऽपीशं यथा कर्म स्वयं काले फलप्रदम् । शिवेश्वरेण तेनात्र महाऽमङ्गलमूर्त्तिना । दधीचिवचनाच्च । यथार्थकरणात् सिद्धमपि कार्यं सदा चन । ईश्वरप्रातिकूल्याच्च सिद्धमेवाशु नश्यति । ईश्वरेच्छावशात् कर्म कृतमप्यविधानतः । संसिध्येत् तदधीनाश्च कर्म सर्वे हरीश्वराः । साक्षान्नसाक्षिवत्कर्मः सर्वेषां सर्वकर्मणाम् । साक्षी भवेदसन्दिग्धं फलस्य प्रतिभूरपि । भूतकादिस्वरूपेण विदध्यादङ्कुरोदयम् । यत् त्वयोक्तं विनापीशं काले कर्म फलेत् स्वयम् । स एव कालो भगवान् सर्वकर्त्ता महेशिता । अन्यच्च भवता प्रोक्तं यदेकं तथ्यमेव तत् । शिवेश्वरेण तेनात्र महाऽमङ्गलमूर्त्तिना । ये महान्तो भवन्त्यत्र ये च मङ्गलमूर्त्तयः । ईश्वराख्याश्च ये सन्ति किमैरत्र तथान्तिके । उत्तरादुत्तरस्त्वेति प्रत्युत्तरयति द्विजे । दधीचौ कुपितेऽत्यन्तं दक्षो गर्वी हृताश्रयः । आदिदेश समीपस्थानालोक्य परितिष्ठति । ब्राह्मणापसदं चामुं परिदूरयताशु वै । अस्मादध्वरसद्मादनादिष्टात्मनाऽऽगतम् । इत्थं दधीचिराकर्ण्य प्रोवाच प्रहसन्निव । किं मां दूरयसे मूढ ! दूरीभूतो भवानपि । सर्वेभ्यो मङ्गलेभ्यश्च सर्वैरेभिः समं ध्रुवम् । अकाण्डे क्रोधजो दण्डस्तव मूर्ध्नि पतिष्यति । महेशितुस्त्रिजगतीपुरीशास्तुः प्रजापते ! । इत्युक्त्वा निर्जगामाशु यज्ञवाटात् ततो द्विजः । तच्छिष्यीति निर्यातो दुर्वासाश्च्यवनो महान् । उत्तङ्क उपमन्युश्च ऋचीकोद्दालकावपि । माण्डव्यो वामदेवश्च गालवो गर्गगौतमौ । शिवतत्त्वविदोऽन्येऽपि दक्षयज्ञाद्विनिर्ययुः” । दक्षयज्ञादयोऽप्यत्र । दक्षाः कुशलाः क्रतवः संकल्पा येषाम् । २ चक्षुरादीन्द्रियरूपेषु प्राणेषु “ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु” यजु० ४ ११। “ये देवा देवाः दीव्यन्ति द्योतन्ते इति देवाश्चक्षुरादीन्द्रियरूपाः प्राणाः । ‘इमे वै प्राणाः वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवा इति” शत० ब्रा० ३।२।२।१२ श्रुत्युक्ताः । किम्भूताः मनोजाताः दर्शनश्रवणादीच्छारूपान्मनस उत्पन्नाः इच्छोत्पत्तौ तेषां प्रवर्त्तमानत्वात् । तथा मनोयुजः रूपादिदर्शनकालेऽपि मनसा युक्ता एव वर्त्तन्ते अन्यमनस्कस्य रूपादिप्रतिभासाभावात् । यद्वा स्वप्नावस्थायां मनसा युज्यन्ते ते मनोयुजः । तथा दक्षक्रतवः दक्षाः कुशलाः क्रतवः संकल्पाः येषां ते सद्वाञ्छितार्थकारिण इत्यर्थः । ते देवा नोऽस्मानवन्तु यज्ञानुष्ठानविघ्नपरिहारेण पालयन्तु तेभ्यः प्राणरूपेभ्यः स्वाहा इदं ‘क्षीरं, हुतमस्तु” वेददी० ।

दक्षक्रतुध्वंसिन् पु० दक्षक्रतुं ध्वंसयति ध्वन्स-णिच्-

च्चिणि । १महादेवे तद्रूपाविर्भूते २वीरभद्रे च तत्कथा क्रतुध्वंसिन् शब्दे २२८४ पृ० दृश्यम् ।

**दक्षजा** स्त्री दक्षात् जायते जन–ड । सतीरूपायां १दक्षकन्यायां महेशकलत्रे दुर्गायाम् २अश्विन्यादौ च । दक्षजातादयोऽप्यत्र ।

**दक्षजापति** पु० ६त० । १शिवे २चन्द्रे च हेमच० ।

**दक्षतनया** स्त्री ६त० । दक्षप्रजापतेर्दुहितरि १अश्विन्यादौ २दुर्गायाम् । ३वेदिरूपायां भूमौ च । "अदितिर्ह्यजनिष्ट दक्ष ! या दुहिता तव" ऋ० १०।७२।५ । दक्षस्य भूमिजत्वेऽपि तज्जनकत्वासम्भवमाशङ्क्य निरु० ११।२३ । समाहितं यथा "अदितेर्दक्षो अजायत" "दक्षाददितिं परीति"च तत्कथमुपपद्येत ? समानजन्मानौ स्यातामिति अपि वा देवधर्मेणेतरेतरजन्मानौ वेतरेतरप्रकृती" । पुत्रो० दक्षतनाप्यत्र "दक्षस्य पितरं तना" ऋ०३।२७।९ "दक्षस्य दक्षप्रजापतेस्तना तनया"भा० ।

**दक्षपितृ** पु० दक्षः दक्षप्रजापतिः पिता उत्पादकोऽस्य समासान्तविधेरनित्यत्वात् न कप् । दक्षप्रजापतिजातप्राणाभिमानिदेवे "ये देवा मनोजाता मनोयुजः सुदक्षाः दक्षपितारस्ते नः पान्तु"तैत्ति०१।२।३।१। दक्षपितार इत्यत्र गौणत्वात् इति । चक्षुरादिप्राणाभिमानिनो ये देवाः सन्ति तेऽस्मान् पयःपानरूपव्रतानुष्ठायिनोऽन्तर्बहिश्च शुद्धिरक्षार्थमनेन पालयन्तु । कीदृशा देवाः । उत्पत्तिकाले मनसा सहोत्पन्नाः । व्यवहारकालेऽपि मनसा युज्यन्ते । अन्यमनस्कस्य चक्षुरादिभिः सन्निहितविषयाणामप्यनवगमात् । सति तु मनःसाहाय्ये स्वस्वविषयेषु सुदक्षाः कुशलाः। दक्षः प्रजापतिरुत्पादको येषां ते दक्षपितारः" भा० । लोके तु कप् । दक्षपितृका अश्विन्यादिषु स्त्री । दक्षस्य वीर्यस्य पिता पालक ! । १वीर्योत्पादके दक्षशब्दभेदे उदा० दृश्यम् ।

**दक्षविहिता** स्त्री १गीतिकाभेदे । "ऋग्गाथा पाणिका दक्षविहिता ब्रह्मगीतिका । गेयमेतत्तदभ्यासकरणान्मोक्षसंज्ञितम्"याज्ञ० । "ऋग्गाथाद्यास्ततो गीतिकाः" मिता० । २दक्षकृते त्रि० ।

**दक्षस्** न० दक्ष–करणे असुन् । बले । "दमया दक्षसे महः" ऋ० २।२५।८।२ । "दक्षसे बलाय" भा० ।

**दक्षसावर्णि** पु० मनुभेदे नवमे मनौ । "नवमो दक्षसावर्णि मनुर्वरुणसम्भवः । धृष्टकेतुर्दीप्तिकेतुरित्याद्यास्तत्सुता नृप । परे मरीचिगर्भाद्या देवा इन्द्रः अद्भुतः स्मृतः । द्युतिमत्प्रमुखाः सप्त भविष्यन्त्यृषयस्ततः । आयुष्मतोऽम्बुधारायामृषभो भगवान् किल । भविता येन संराद्धां त्रिलोकीं भोक्ष्यतेऽद्भुतः" भाग० ८।१३।१९ । "८सावर्णिः ९दक्षसावर्णिः १०ब्रह्मसावर्णिस्ततः । ११धर्मसावर्णिको१२रुद्रपुत्रो१३रौच्यश्च१४भौत्यकः" पुराणान्तरम् । हरिवंशे तु नवमस्य रोहितत्वमुक्तं यथा। "नवमस्यैव दाक्षिण आत्रेयो हव्यवाहनः । पौलहः सत्य इत्येते मुनयो रौहितेऽन्तरे । देवतानां गणास्तत्र त्रय एव नराधिप ! । दक्षपुत्रस्य पुत्रास्ते रोहितस्य प्रजापतेः । मनोः पुत्रो धृष्टकेतुः पञ्चहोत्रो निराकृतिः । पृथुश्रवा भूरिधामा ऋचीकोऽथ बृहतो गयः । प्रथमस्य तु सावर्णेर्नव पुत्रा महोजसः" ७ अ० । कल्पभेदादविरोधः ।

**दक्षसुत** पु० ६त० । १देवे शब्दार्थचि० ।
देवस्य दक्षसुतत्वात् नष्टपुत्रेण दक्षेण पुत्रिकाधर्मेण दत्तायामदितावुत्पन्नत्वेन तस्य पुत्रिकापुत्रत्वात् तत्सुतत्वम् यथाह हरिवं० ३ अ० ।
"प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयम्भुवा । यथा ससर्ज भूतानि तथा शृणु महीपते ! । मनसा चैव भूतानि पूर्वमेवासृजत् प्रभुः । ऋषीन् देवान् सगन्धर्वानसुरानथ राक्षसान्" । २हर्यश्वादिषु तत्कथा "दक्षस्य पुत्रा हर्यश्वा विवर्द्धयिषवः प्रजाः । समागता महावीर्या नारदस्तानुवाच ह । बालिशा बत यूयं वै नास्या जानीथ वै भुवः । प्रमाणं स्रष्टुकामा वै प्रजाः प्राचेतसात्मजाः । अन्तमूर्द्ध्वमधश्चैव कथं स्रक्ष्यथ वै प्रजाः । ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतोदिशः । अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः । हर्यश्वेष्वथ नष्टेषु दक्षः प्राचेतसः पुनः । वैरण्यामेव पुत्राणां सहस्रमसृजत् प्रभुः । विवर्द्धयिषवस्ते तु शबलाश्वाः प्रजास्तदा । पूर्वोक्तं वचनं तात ! नारदेनैव चोदिताः । अन्योन्यमूचुस्ते सर्वे सम्यगाह महामुनिः । भ्रातॄणां पदवीं ज्ञातुं गन्तव्यं नात्र संशयः । ज्ञात्वा प्रमाणं पृथ्व्याश्च सुखं स्रक्ष्यामहे प्रजाः । एकाग्राः स्वस्थमनसो यथावदनुपूर्वशः । तेऽपि तेनैव मार्गेण प्रयाताः सर्वतो दिशम् । अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः । नष्टेषु शबलाश्वेषु दक्षः क्रुद्धोऽब्रवीद्वचः । नारदं नाशमेहीति गर्भवासं वसेति च । तदा प्रभृति वै भ्राता भ्रातरन्वेषणे नृप ! । प्रयातो नश्यति क्षिप्रं तन्न कार्यं विपश्चिता । तांश्चैव नष्टान् विज्ञाय पुनर्दक्षः

प्रजापतिः। यदि ततोऽसृजत् कन्यां वैरण्यामिति न श्रुतम्”।

२अग्न्यादीच स्त्री “ततोऽपर्ह दक्षसुता दक्षाहभुः” रघुः।

**दक्षाध्वरध्वंसक** दक्षस्याध्वरं ध्वंसयति ध्वन्स–णिच्–ण्वुल्। १शिवे २वीरभद्रे च दक्षाध्वरनाशकादयोऽप्यत्र।

**दक्षाय्य** पु० दक्ष–आय्य। १गरुडे २गृध्रपक्षिणे च उणादिकोषो सि०कौ०। दक्ष–वृद्धौ कर्मणि तद्योगे ण्वुल्। ३वर्द्धके त्रि०। “मित्रो दक्षाय्यो अर्य्यमेवाशि चोम !” ऋ०२।८२।१। “दक्षाय्यः सर्वेषां वर्द्धकः” भा०।

**दक्षिण** त्रि० दक्ष–इनन्। १परच्छन्दानुवर्त्तिनि पराभिप्रायानुवर्त्तिनि २सरले। ३दक्षभागस्थे च मेदि०। ४अवामे अपसव्ये देहभागभेदे (डाहिन) ख्याते भागे हेमच०। “एषु त्वनेककर्मस्वपि समरागो दक्षिणः कथितः” सा० द० उक्ते ५नायकभेदे यथा “स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसुर्द्यूते रात्रिरियं जिता कमलया, देवी प्रसाद्याद्य च। इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते देवेनाऽप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः”। स्वापेक्षया मेरुगिरितो विप्रकृष्टायां ६दिशि स्त्री ७वहर्त्तिनि त्रि०। ८यज्ञदानान्ते दाने ९प्रतिष्ठायां स्त्री यज्ञाद्यन्तदक्षिणानामनिरुक्तिः” शत० ब्रा० २।२।२।२। “स एष यज्ञो हतो न दद्रे। तं देवा दक्षिणाभिरदक्षयंस्तद्येनं दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नाम तद्यदेवात्र यज्ञस्य हतस्य व्यथते तदस्यैतद्दक्षिणाभिर्दक्षयत्यथ समृद्ध एव यज्ञो भवति तस्माद्दक्षिणा ददाति’। दक्षिणाविशेषनिर्णयः हेमा० दा० यथा

भविष्यपुराणे “अदत्तदक्षिणं दानं व्रतस्यैव नृपोत्तम!। विफलं तद्धि जानीयाद्भस्मनीव हुतं हविः”। षट्त्रिंशन्मतात् “श्रद्धायुक्तः शुचिर्दान्तो दानं दद्यात् सदक्षिणम्। अदक्षिणन्तु यद्दानं तत् सर्वं निष्फलं भवेत्”। मैत्रायणीयपरिशिष्टम् “दक्षिणाकाले कृतानां भस्मायां ददाति न त्वेवं यजेत्”। तथा शतपथश्रुतिः “तस्मान्नादक्षिण हविः स्यादिति”। भविष्योत्तरे “अल्पं यद्दीयते किञ्चित्तत्सम्यं सुखावहम्। असम्यग्नु दोषाय भवतीह परत्र च। तस्मात् दक्षिणाहीनं विधानविकलं कृथ च। देयं दानं महाराज! सम्यक्फलकाङ्क्षया। अन्यथा दीयमानं तदपकाराय केवलम्। प्रत्यवायकरं चाहानिं च तत् फलदं भवेत्”।

आह भगवान् व्यासः “सुवर्णं परमं दानं सुवर्णं दक्षिणा परा। सर्वेषामेव दानानां सुवर्णं दक्षिणेष्यते।” एतच्च, विशेषविहितगोवस्त्रादिदक्षिणकदानवर्जं सामान्यविहितदक्षिणेषु दानेषु अवतिष्ठते तत्रापि परा श्रेष्ठमेति प्राशस्त्यं दर्शयति न त्वन्यां दक्षिणां निराचष्टे आनन्त्यार्थत्वाद्दक्षिणायाः सुवर्णस्य प्रकृष्टत्वात् सर्वदानेषु सुवर्णं दक्षिणेतिवचनार्थः, अन्यदपि पुरुषशास्त्रीयिकं तण्डुलादिकं दक्षिणार्थेन योज्यं यत्तु श्रूयते “अन्येषामेव दानानां सुवर्णं दक्षिणा स्मृता। सुवर्णे दीयमाने तु रजतं दक्षिणेष्यते” इति तदेतच्छ्रौतस्त्वन्यं परिज्ञाय ज्ञातव्यम्। “सुवर्णं रजतं ताम्रं तण्डुला धान्यमेव च। नित्यश्राद्धं देवपूजा सर्वमेव सदक्षिणम्”। स्कन्दपुराणे। “देयद्रव्यतृतीयांशं दक्षिणां परिकल्पयेत्। अनुक्तदक्षिणे दाने दशांशं वापि शक्तितः”। तुलापुरुषादिदानानि अधिकृत्य विष्णुपुराणे “दक्षिणा च शतस्यार्द्धं तदर्द्धं वा प्रदापयेत्। ऋत्विजाञ्चैव सर्वेषां दश निष्कान् प्रदापयेत्”। भविष्योत्तरे “शेषं निष्कशतं पार्थ! दानेषु विधिरुत्तमः। मध्यमस्तु तदर्द्धेन तदर्द्धेनाधमः स्मृतः। विप्राश्च कालपुरुषे तथान्येषु महत्स्वपि। एवं हस्ते तथा हे च धेनोः कृष्णाजिनस्य च। अशक्तस्यापि कृष्णोऽयं पञ्चसौवर्णिको विधिः। अतोऽप्यल्पेन यो दद्यान्महादानं नराधमः। प्रतिष्ठाप्नोति वा तस्य दुःखशोकावह भवेत्”, अथाभिषेकमुद्दाहृत्य विष्णुपुराणे “अष्टषष्टिपलोन्मानं दद्याद्वै दक्षिणां गुरोः। होतृणाञ्चैव सर्वेषां त्रिंशत्पलसदाहृतम्। अध्येतृणां तदर्द्धेन द्वारपानां तदर्द्धतः”। एतेनान्यत्रापि, गुरोरर्द्धम्, ऋत्विजां तदर्द्धं, जापकानां तदर्द्धं द्वारपालानां तदर्द्धमिति दक्षिणाविभागोऽवगन्तव्यः।” अन्या अपि दक्षिणाः तत्र तत्रोक्ता वेदितव्याः। यज्ञभेदे दक्षिणाभेदः कात्या० श्रौ०सू० उक्तः कातीयशब्दे दर्शितप्रायः विशेषतोऽवसेयः। सर्वत्र दक्षिणाया अदाने कालविलम्बभेदे च दोषा दक्षिणानामनिरुक्तिर्विहिता उक्ता यथा।

‘कार्त्तिक्यां पूर्णिमायान्तु रासे राधामहोत्सवे। आविर्भूता दक्षिणांशात् कृष्णस्य तेन दक्षिणा”। यज्ञो दक्षिणया सार्द्धं पुत्रेण च फलेन च। कर्मिणां फलदाता चेत्येवं वेदविदो विदुः। कृत्वा,कर्म च तत्रैव तूर्णं दद्याच्च दक्षिणाम्। तत्कर्मफलमाप्नोति वेदैरुक्तमिदं मुने!।

क्षणो कर्मणि पूर्णे च तत्क्षणं यदि दक्षिणाम्। न दद्याद्ब्राह्मणेभ्यश्च दैवेनाज्ञानतोऽथ वा। मुहूर्ते समतीते तु द्विगुणा सा भवेद्ध्रुवम्। एकरात्रे व्यतीते तु भवेत् शतगुणा च सा। त्रिरात्रे तद्दशगुणा सप्ताहे द्विगुणा ततः। मासे लक्षगुणा प्रोक्ता ब्राह्मणानाञ्च वर्द्धते। संवत्सरे व्यतीते तु सा त्रिकोटीगुणा भवेत्। कर्म तद्यजमानानां सर्वञ्च निष्फलं भवेत्। स च ब्रह्मस्वापहारी न कर्मार्होऽशुचिर्नरः। दरिद्रो व्याधियुक्तश्च तेन पापेन पातकी। तद्गृहाद्याति लक्ष्मीश्च शापं दत्त्वा सुदारुणम्। पितरो नैव गृह्णन्ति तद्दत्तं श्राद्धतर्पणम्। एवं सुराश्च तत्पूजां तद्दत्ताग्निराहुतिम्। दाता न दीयते दानं ग्रहीता च न याचते। उभौ तौ नरकं यातश्छिन्नरज्जुर्यथा घटः। नार्पयेद्यजमानश्चेद्याचितश्च दक्षिणाम्। भवेद्ब्रह्मस्वापहारी कुम्भीपाकं व्रजेद्ध्रुवम्। वर्षलक्षं वसेत्तत्र यमदूतेन ताडितः। ततो भवेत् स चाण्डालो व्याधियुक्तो दरिद्रकः। पातयेत् पुरुषान् सप्त पूर्वांश्च सप्त जन्मतः" ब्रह्मवैवर्त्ते प्रकृतिखण्डे। प्राप्तिरूपदक्षिणाद्रव्यग्रहणे मन्त्रभेदेनाभिमन्त्रणम् अप्राप्तिद्रव्यग्रहणे तु अभिमर्शनमात्रम् यथाह आश्व० श्रौ० सू० ५।१३।१५। "क इदं कस्मा अदात् कामायादात् कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते इष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णात्वित्यतीतान्समनुमन्त्रयेत् प्राणि"। सू० 'विकारदेशमतीत्य नीतेषु दक्षिणाद्रव्येषु तन्मध्ये यत् प्राणिद्रव्यं तदेतेनानुमन्त्रयते" नारा०। "अभिमृशेदप्राणि" सू०"तन्मध्ये यदप्राणि तदभिमृशेत् नारा०। सा च यज्ञपत्नी तथाह "दक्षिणा यज्ञपत्नी च दीक्षा सर्वत्र पूजिता। यया विनापि विश्वस्य सर्वं ,कर्म तु निष्फलम्" भाग० २६।१।१।२८। १० नायिकाभेदे स्त्री यथा "या गौरवं भयं प्रेम सद्भावं पूर्वनायके। न मुञ्चत्यन्यसक्तापि सा ज्ञेया दक्षिणा बुधैः" इति विष्णुपु० टीकायां स्वामी" ११विष्णौपु०। "अक्रूरः पेशलो दक्षो दक्षिणः दक्षिणाम्बरः" विष्णुस०। अस्य दिग्देशादिव्यवस्थायामेव सर्वनामता तेन दक्षिणे गायकाः अन्यत्र दक्षिणाः(कुशलाः)इत्येव। "दिवः सपत्नी भव दक्षिणस्याः" रघुः "दक्षिणीयमवगम्य पङ्क्तिशः पङ्क्तिपावनमथ द्विजव्रजम्। दक्षिणः क्षितिपतिर्व्यभिमतदक्षिणाः सदसि राजसूयकीः" माघः। अन्तादौ दक्षिणकर्णस्पर्शनं परायरो विधत्ते। "क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथाऽनृते। पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत्। ब्रह्मा विष्णुश्च रुद्रश्च सोमः सूर्योऽनलस्तथा। ते सर्वे चापि तिष्ठन्ति कर्णे विप्रस्य दक्षिणे"। १२आचारभेदे दक्षिणाचारशब्दे दृश्यम्। १३दक्षिणाग्नौ पु० "दक्षिणपश्चिमे दक्षिणम्" आश्व० गृ० ४।२।३।

**दक्षिणकालिका** स्त्री दक्षिणा कालिका। १शिवहृदये न्यस्तदक्षिणपादायां कालिकायाम्।

**दक्षिणगोल** पु० कर्म०। विषुवरेखातो दक्षिणस्थिते तुलादिराशिषट्के यथाह सि० शि० "सौम्योऽथ गोलो भदलं यदाद्यं याम्योऽपरं सायनभागभानोः" दक्षिणायनशब्दे रङ्गनाथ व्याख्या दृश्या।

**दक्षिणतस्** अव्य० दक्षिणा—तसिल् सर्वनाम्नोवृत्तिमात्रे पुंवद्भावः।१दक्षिणस्यां दिशि। २दक्षिणभागे च"पितृभ्यो बलिशेषन्तु सर्वं दक्षिणतो हरेत्" मनुः।

**दक्षिणतस्कपर्द्द** त्रि० दक्षिणतः शिरसो दक्षिणभागे कपर्दश्चूडा यस्य। दक्षिणभागचूडायुक्ते "श्वित्यञ्चो मा दक्षिणतस्कपर्दाः" ऋ० ७।३३।१। चूडाकर्मणि दक्षिणतो वशिष्ठानामिति स्मर्यते" भा०। [दक्षिणस्यतीरे।

**दक्षिणतीर** न० कर्म० तीरस्य तारभावः। नद्यादे

**दक्षिणता** स्त्री दक्षिण+वेदे नि० ता। दक्षिणभागादौ। "भिन्ध वज्रं हस्त आ दक्षिणत्राभिः" ऋ० ६।२८।६।

**दक्षिणदिक्** स्त्री दक्षिणा दिक्। सुमेरुतया मेरुतो विप्रकृष्टदिशि। तदधिपः भौमः यथाह "सूर्य्यः शोमः क्षमापुत्रः सैंहिकेयः शनिः शशी। सौम्यस्त्रिदशमन्त्री च प्राच्यादिदिगधीश्वराः" ज्यो०त०। तत्र बलिनो यथौ भास्करभूमिजौ यथाह तत्रैव "प्राच्यां सौम्यसुराचार्य्यौ याम्यां भास्करभूमिजौ। प्रत्यक् सौरिरुदीच्यां तु सितेन्दू दिग्बलान्वितौ" तद्दिक्पतिः यमः "इन्द्रो वह्निः पितृपतिर्नैरृतो वरुणो मरुत्। कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात्" इत्युक्तेः। तद्दिग्बलिनो राशयश्च अजवृषमकरसिंहाः। "ऐन्द्र्यां नृयुग्मराशयस्तु पशवो याम्ये सरीसृपावलिचौरिण्यां नृयुग्म तथैव बलिनः पानीयजाश्चोत्तरे"ज्यो० त० उक्तेः। तद्दिक्पतिराशयः इत्यस्यामवत्रराशयः यथाह ज्यो० त० "प्रागादिचक्रमा नाथा यथासंख्यं

प्रदक्षिणम् । सेनाद्यारोपणो मेषादिकराहणा परिभ्रमात्" ।। तद्दिक्स्थसवत्सरादौ च मघादिसप्तकम् । "कृत्तिकाद्यास्तु पूर्वादौ सप्त सप्तोदिताः क्रमात्" ज्यो० त० उक्तेः । दक्षिणदिग्भागस्था देशाव कूर्मविभागमध्ये बृ०सं० १४अ० उक्ताः "अथ दक्षिणेन लङ्का" इत्युपक्रमे दर्शिताः ।

**दक्षिणपश्चात्** अव्य० दक्षिणस्याः परस्याश्च दिशः अन्तराला दिक् बहु० आति परस्य पश्चादेशः । प्रथमापञ्चमी सप्तम्यर्थवृत्तौ दक्षिणपश्चिमाशब्दार्थे नैरृतकोणे ।

**दक्षिणपश्चिमा** स्त्री दक्षिणस्याः पश्चिमाया दिशोऽन्तरालादिक । "दिङ्नामान्यन्तराले" पा० बहु० पुंवत् । १नैरृते कोणे । "जम्बूमेरवणाद्रुल । दिशं दक्षिणपश्चिमाम्" भा० मङ्गाप्र० १अ० । २तद्देशवर्त्तिनि त्रि० "दक्षिणपश्चिमे दक्षिणम्" आश्व० गृ० १।२।१२ ।

**दक्षिणपूर्व्वा** स्त्री दक्षिणस्याः पूर्वस्या दिशोऽन्तराला दिक् बहु० पुंवत् । १अग्निकोणे २तद्दिग्भागस्थे त्रि० "दक्षिणपूर्वे उद्धृताम्न आहवनीयं निदधाति" आश्व०गृ०४।२।१

**दक्षिणमानस** न० गयास्थिते तीर्थभेदे "तस्य दक्षिणभागे तु तीर्थं दक्षिणमानसम् । दक्षिणे मानसे चैव तीर्थत्रय सदाहृतम्" वायुपु० गयामा० ।

**दक्षिणमार्ग** पु० १तन्त्रोक्ते आचारभेदे २पितृयाणे मार्गभेदे "निर्विण्णोऽहं दक्षिणमार्गेण गतागतलक्षणेन" ईशोपनिषद् भाष्यम् । [ लवणाम्बुधौ ।

**दक्षिणसमुद्र** पु० कर्म० । दक्षिणदिक्स्थे समुद्रे

**दक्षिणस्थ** त्रि० दक्षिणे भागे तिष्ठति स्था—क ७त० । १दक्षिणभागस्थिते २सारथौ पु० अमरः ।

**दक्षिणा** अ० दक्षिणा+प्रथमापञ्चमीसप्तम्यर्थे आच् । प्रथमार्थसत्त्वे दक्षिणाशब्दार्थे दक्षिणा वसति आगच्छति रमणीयं वा "अयं दक्षिणा विश्वकर्मा" यजु० २२।५५

**दक्षिणांसत्रयिन्** पु० दक्षिणांशे दक्षस्कन्धे त्रयोऽत्रास्य इनि । दक्षिणस्कन्धस्थत्रययुक्ते "पितृस्वभिगमनात् दक्षिणांसत्रयी भवेत् । तेनापि निष्कृतिः कार्य्या प्रत्यादानेन पश्चितः" पराशरः ।

**दक्षिणाग्नि** पु०दक्षिणोऽग्निः । अन्वाहार्य्यपचनाख्ये यज्ञाग्निमध्येऽग्निभेदे ।"अन्वाहार्य्यं दक्षिणाग्नावधिश्रयति" कात्या० श्रौ० २।५।२७ "होमे यजमानान्वाहरतीत्यन्वाहार्य्यः अध्वर्युरन्वाहार्य्यपचनं दक्षिणाग्निं तत्र स्थ-स्थपनीदनं दक्षिणाग्नावधिश्रयति चतुर्णामृत्विजां तृप्तिर्यावता अन्नाद्यते तत्परिमाणं ततोऽधिकं वान्वाहार्य्यमोदनं कुर्यात्" कर्कः ।

"उदूवर्गेऽपराह्णे गार्हपत्यं प्रज्वाल्य दक्षिणाग्निमानीय पिटकादिस्थितो वैश्यो गत्ये वै भ्रियमाणं वा प्रज्वाल्यारण्यमन्तं वा मथित्वा गार्हपत्याद्वाहवनीयं व्यवसन्तमुद्धरेत्" आश्व० श्रौ० २।२।१ "उदूवर्गे अजस्रोऽग्निर्वे अग्निहोत्रहोमार्थं विहरेत् नाकल्पेषु । होमसमकालेष्वपि भवतीत्युक्तम्, एवं स्थिते विहरणरहितमग्निहोत्रहोमप्रयोगं वक्ष्यामः उत्सर्गं इत्युक्तत्वात् । अत्रापराह्णग्रहणेन अहश्चतुर्थभागो लक्ष्यते । विहरणकाले गार्हपत्यं प्रादुष्कृत्य प्रज्वाल्य च दक्षिणाग्निं वैश्यगृहकुलादानयेत् । चतुर्णां वर्णानामन्यतमस्य बहुपशोर्वा गृहात्, गार्हपत्याद्वा । भाष्ट्रे चेत् प्रज्वलयेत् । काले काले यदि निर्मन्थ्यः तदा मन्थेत् । एवां प्रकाराणां तदुपत्तिव्याहृत्यवस्था । तेषामन्यतमप्रकारेण दक्षिणाग्निं साधयित्वा ततो गार्हपत्यात् व्यवसन्तमग्निमाहवनीयार्थमुद्धरेत् पात्रान्तरेण पृथक् कुर्य्यादित्यर्थः" नारा० । तस्य स्थापनञ्च नैरृतकोणे "दक्षिणपश्चिमे दक्षिणम्" आश्व० गृ० ४।११ । उक्तेः ।

**दक्षिणाग्र** पु० दक्षिणस्यामग्रमस्य । दक्षिणदिग्भागस्थाग्रे कुशादौ "अथ याम्यमुन्दीचीनाग्राणि हव्यानि भवन्ति दक्षिणाग्राणि तानि करोति पितृदेवत्यमेवैनत्करोति" शत० ब्रा० १२।५।१।१२ । "उदगग्रान् दक्षिणाग्रान् करोतीति श्रुतेः" कात्या० श्रौ० ४।१०।१५ ।

**दक्षिणाचल** पु० दक्षिणस्थितोऽचलः । मलयपर्वते हेम० दक्षिणपर्वतादयोऽप्यत्र ।

**दक्षिणाचार** पु० कर्म० १तन्त्रोक्ते आचारभेदे । "स्वधर्मनिरतो भूत्वा पञ्चतत्त्वेन पूजयेत् । स एव दक्षिणाचारः शिवो भूत्वा शिवां यजेत्" आचारभेदतन्त्रम् । इयास्तु तत्र भेदः षष्ठस्थाने विजयारसः । "चतुर्थकाराः सन्त्येव पञ्चमो विजयारसः" इत्युक्तेः । दक्षिणा दक्षिणस्या चारो गतिरस्य । २दक्षिणदिग्गतिशालिनि त्रि० । "दक्षिणां दक्षिणाचारो दिशं येनाश्रयत् प्रभुः" भा० वि० ५अ० ।

**दक्षिणाज्योतिस्** पु० दक्षिणा दक्षिणस्यां ज्योतिरस्य । पञ्चौदने यागभेदे । "ओऽमं पञ्चौदनं दक्षिणाज्योतिषं ददाति" अथ० ९।५।२२।२३।२४।२५।६ । तद्यागकर्त्तृकम् ।

**दक्षिणात्** अव्य० दक्षिण+प्रथमापञ्चमीसप्तम्यर्थे आति। प्रथमाद्यर्थकत्वे दक्षिणशब्दार्थे दक्षिणात् रमणीयम् आगच्छति वसति वा।

**दक्षिणान्तिका** स्त्री "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः। न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः" इत्युपक्रमे "तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः" वृ० र० उक्तलक्षणे वैतालीयभेदे मात्रावृत्तभेदे। "समस्तपादेषु द्वितीयलः यदि तृतीययुक् द्वितीयमात्रातृतीयमात्राभ्यामेको गुरुश्चेत् शेषं वैतालीयवत् तदा दक्षिणान्तिका नाम छन्द इत्यर्थः।

**दक्षिणापथ** पु० दक्षिणा (आजन्तः) पन्थाः अच् समा०। देशभेदे तद्देशवर्णनं भा० व० ६१ अ० यथा "एते गच्छन्ति बहवः पन्थानो दक्षिणापथम्। अवन्तीमृक्षवन्तञ्च समतिक्रम्य पर्वतम्। एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा। आश्रमाश्च महर्षीणां बहुमूलफलान्विताः। एष पन्था विदर्भाणामसौ गच्छति कोशलान्। अतः परञ्च देशोऽयं दक्षिणे दक्षिणापथः"। "दक्षिणापथजन्मानः सर्वे नरवरान्धकाः। गुहाः पुलिन्दाः शबराश्चुचुका मद्रकैः सह" भा० शा० २०७ अ०। "युयुधे पाण्ड्यराजेन दिवसं नकुलानुजः। तं जित्वा स महाबाहुः प्रययौ दक्षिणापथम्" भा० स० ३० अ०। "तथापरे जनपदा दक्षिणापथवासिनः। पाण्ड्याश्च केरलाश्चैव चोलाः कुल्यास्तथैव च। सेतुका मूषिकाश्चैव कुपथा वारवासिकाः। नवराष्ट्रा माहिषकाः कलिङ्गाश्चैव सर्वशः। कारूषाश्च सहैषीकेराटव्याः शबरास्तथा। पुलिन्दा विन्ध्यमूषिका वैदर्भा दण्डकैः सह। कुलीयाश्च सिरालाश्च रूपसास्तापसैः सह। तथा तैत्तिरिकाश्चैव सर्वे कारस्करास्तथा। नासिक्याश्च ये चान्ये ये चैवान्तरनर्मदाः। भानुकच्छाः समाहेयाः सह सारस्वतैस्तथा। कच्छीयाश्च सुराष्ट्राश्च आनर्त्ताश्चार्बुदैः सह" मत्स्यपु०। २दक्षिणास्थितमार्गमात्रे पु०। "कृष्णाजिनानि धुन्वन्तः स्वयमेव दक्षिणापथं यान्ति" आश्व० श्रौ० ५।१३।१२। दक्षिणापथोऽस्त्यस्य स्वामित्वेन आवासत्वेन सम्बन्धित्वेन वा ठन्। दक्षिणापथिक तद्देशपे तत्र वासिनि तत्सम्बन्धे च। "एते चान्ये च बहवो दक्षिणापथिकान् पथः" हरिवं० ११० अ०।

**दक्षिणापरा** स्त्री दक्षिणस्या अपरस्या दिशोरन्तराला दिक्। १नैर्ऋतकोणे "दक्षिणपूर्वस्यां दिशि दक्षिणापरस्यां वा" आश्व० गृ० ४।१।६। २तदूर्द्ध्वस्थिते त्रि० "पुनर्दक्षिणापरेऽध्वर्युः पूर्वोत्तरे यजमानः" कात्या० श्रौ० ८।५।१८। दक्षिणायाः परः। ३यज्ञपूर्वकद्रव्यदानरूपदक्षिणातत्परे त्रि०।

**दक्षिणाप्रवण** त्रि० दक्षिणा (आजन्तः) दक्षिणस्यां प्रवणं निम्नम्। उत्तरापेक्षया दक्षिणतो निम्ने भूभागादिदेशे "दक्षिणाप्रवणम्" कात्या० श्रौ० २२।३।६। "दक्षिणाप्रवणं देवयजनं भवति" कर्कः "शुचिदेशं विविक्तं च गोमयेनोपलेपयेत्। दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत्" मनुः। "दक्षिणाप्रवणमथवा परिस्रुते शुचौ देशे दक्षिणाप्लवने तथा" याज्ञ० श्राद्धदेशोक्तौ।

**दक्षिणाप्रष्टि** पु० धुर्य्यापेक्षया प्रकृष्टं देशमश्नोति प्र+अश—क्तिच् पृषो० दक्षिणा दक्षिणभागे प्रष्टिः वाह्यः। धुर्य्यमध्ये दक्षिणस्थे पुरोङ्गे प्रकृष्टदेशस्थे वा अश्वभेदे 'दक्षिणाप्रष्टिं जनो यत इति' कात्या० श्रौ० १४।३।८। "रथे तृतीयमश्वं युनक्ति धुर्य्यापेक्षया प्रकृष्टं देशमश्नोतीति प्रष्टिर्वाह्यो युग्य" सं० व्या०। दक्षिणस्यां स इव इति विग्रहे २दक्षिणस्थे प्रष्टिवहेऽश्वे च। "अथ दक्षिणा प्रष्टिं युनक्ति सव्यप्रष्टिं वा" शत० ब्रा० ५।१।४।९। "प्रष्टिर्नाम पादत्रयोपेतो भोजनपात्रादिकाधारः' (तेपाइ) भा०।

**दक्षिणाबन्ध** पु० दक्षिणायां बन्धः अनुबन्धः। गृहस्थादीनां दक्षिणानुबन्धभेदे यथा "दक्षिणाबन्धो नाम गृहस्थब्रह्मचारिभिक्षुवैखानसानां काममोहोपहतचेतसामभिमानपूर्विकां दक्षिणां प्रयच्छतां दक्षिणाबन्ध इत्युच्यते" तत्त्वसारः।

**दक्षिणाभिमुख** त्रि० दक्षिणा दक्षिणस्यामभिमुखमस्य। दक्षिणदिङ्मुखे। "दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा" आह्नि० त०। दक्षिणामुखादयोऽप्यत्र। "आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः"। "उदकेनैव विधिना निर्वपेत् दक्षिणामुखः" मनुः। "यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः" मनुना आशौचविप्रस्य तथा भोजनं निषिद्धम्। दक्षिणा दक्षिणस्यां मुखम्। दक्षिणदिक्स्थे मुखे न०। "श्वानाश्च गयाश्राद्धं दक्षिणामुखभोजनम्। न जीवत्पितृकः कुर्य्यात् कृते च पितृहा भवेत्" ति० त०।

**दक्षिणामूर्त्ति(र्त्ती)** पु० दक्षिणा अनुकूला मूर्त्तिरस्य वा ङीप् संज्ञात्वात् न पुंवत्। शिवमूर्त्तिभेदे तन्त्रशास्त्रादिके

यथा"प्रोद्यत्प्राज्यप्रकाशहृदुमतये योगायनस्थं प्रभुं प्रसन्न-मस्मद्भुभृद्भिः प्रतिदिशं प्रोद्दीक्षमाणाननम्। सुप्तां सर्वमयीं दधानममलं कर्पूरगौरं शिवं कुर्म्मः कलये स्फुरन्तमनिशं श्रीदक्षिणामूर्त्तिकम्"। "निम्नगो दक्षिणामूर्त्तिं ध्यायेत् साधकसत्तमः। शाक्तव्याख्यानसामर्थ्यं सर्वार्थे वटवृक्षान्तरे" तन्त्रान्तादिकं तत्र दृश्यम्। ध्यानान्तरं ध्यानशब्दे दृश्यम्।

**दक्षिणायन** न० दक्षिणा दक्षिणस्यां दक्षिणे गोले वा अयनं रवेः। रवेः स्वाधिष्ठितस्थानापेक्षया १दक्षिणदिग्गमने २दक्षिणगोलरूपतुलादिराशिषट्के गमने तदुपलक्षिते षण्मासात्मके ३कालभेदे च तत्राद्यार्थे "कालमयनाख्यमयनं द्वे अयने वर्षसंमिते। कर्कटादिस्थिते भानौ दक्षिणायनमुच्यते" मत्स्य० त० विष्णु पु०। द्वितीयार्थे "दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः। अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम्" मनुः। अयनशब्दे ३५२ पृ० उत्तरायणशब्दे ११०४ पृ० भगोलशब्दे च दक्षिणायनशब्दार्थस्योक्तप्रायत्वेऽपि दक्षिणायनव्यवस्थार्थमधिकमत्रोच्यते यद्यपि चन्द्रस्यापि स्वाधिष्ठितस्थानापेक्षया दक्षिणस्यां दक्षिणगोले च गतिः सम्भवति तथापि सूर्य्यस्यैव गतिभेदे तदुपलक्षितकाले च दक्षिणायनशब्दव्यवहारः। "सौरेण द्युनिशोर्मानं षडशीतिमुखानि च। अयनं विषुवं चैव संक्रान्तेः पुण्यकालता" सू० सि० अयनस्य सौरत्वोक्तेः "यान् षाण्मासान् दक्षिणा आदित्य एति यान् मासानुत्तरादित्य एति" वाजसनेयिनां पञ्चाग्निविद्यायां दक्षिणोत्तरमार्गयोः पाठात् "तस्मादादित्यः षण्मासान् दक्षिणेनैति षण्मासानुत्तरेणैतीति तैत्तिरीयश्रुतेश्चादित्यगतिमुपजीव्यैवायनशब्दप्रवृत्तेश्च। तेनादित्यगतिनिमित्तत्वात्तस्य सौरत्वम्। उभयविधदक्षिणायनस्य किमवधिकत्वं मनूक्तं राशित्वं तदभिधीयते। तत्र "मेषादौ देवभागस्थो देवानां याति दर्शनम्। असुराणां तुलादौ तु सूर्य्यस्तद्भागसञ्चरः" सू० सि०।

"जम्बुद्वीपवलयबहुतदृश्यो परिधिरूपं भूगोलमध्ये तत्र-मध्यरेखाकाशे वृत्तं विषुवद्वृत्तं तत्र क्रान्तिवृत्तं चक्रभान्तरेण स्थानद्वये लग्नं तयोर्मध्यस्थानं प्रवहवायुना विषुवद्वृत्तमार्गे भ्रमति मेषस्थानात् कन्यादिस्थानं विषुवद्वृत्तावधि सव्यं भान्तरं उत्तरतः। मकरादिस्थानं विषुवद्वृत्तावधि सव्यं भान्तरे दक्षिणतः। तत् क्रमस्थाने प्रवहवायुना भ्रमति। एवं क्रान्तिवृत्तप्रदेशाः स्वस्वस्थाने प्रवहवायुना भ्रमन्ति। तत्र मेषादौ देवभागस्थः "जम्बुद्वीपं च तत्रापि देवासुरविभागकृदिति" पूर्वोक्तेः। तदवच्छिन्ना मेषादिकन्यान्ता राशय उत्तरगोलः। तत्रस्थः सूर्य्यो मेषादौ मेषादिप्रदेशे देवानां मेरोरुत्तराग्रवर्त्तिनां दर्शनं षण्मासान्तरं प्रथमदर्शनं याति गच्छति प्राप्नोतीत्यर्थः विषुवद्वृत्तस्य तत्क्षितिजत्वात्। एवं दैत्यानां मेरोर्दक्षिणाग्रवर्त्तिनामित्यसुराणामित्युक्तमेवोक्तम्। तद्भागसञ्चरो दैत्यभागे वसुन्धरादिदक्षिणविभागस्यासुरादिमीनान्ता राशयो दक्षिणगोलस्तत्र सञ्चरो गमनं यस्य सोऽतादृशः सूर्य्यस्तुलादिप्रदेशे तुलाराददर्शनान्तरं प्रथमदर्शनं प्राप्नोतीत्यर्थः तेषामपि विषुवद्वृत्तक्षितिजत्वात्" रङ्गना०।

"देवासुरा विषुवति क्षितिजस्थं दिवाकरम्। पश्यन्त्यन्योन्यमेतेषां वामसव्ये दिनक्षपे" सू० सि०।

"विषुवति काले देवदैत्याः सूर्य्यं क्षितिजस्थं पश्यन्ति विषुवद्वृत्तस्य तयोः स्वस्थानाद्भूगोलमध्यस्थत्वेन क्षितिजत्वात्। एतेषां देवदैत्यानामन्योन्यं परस्परं ये वामसव्ये अपसव्यसव्ये ते क्रमेण दिनक्षपे दिवसरात्री भवतः। अयं भावः देवानां भूमेरुत्तरभागः स्वकीयत्वात् सव्यमतो दैत्यानामपसव्यं स्वकीयत्वाभावात्। एवं दैत्यानां भूमेर्दक्षिणभागः स्वकीयत्वात् सव्यं देवानां स्वकीयत्वाभावादपसव्यमतो दैत्यानां वामसव्यमावुत्तरदक्षिणगोलौ देवानां क्रमेण दिनरात्री। देवानां वामसव्यभागौ दक्षिणोत्तरगोलौ दैत्यानां दिनरात्री। अन्यथाऽन्योन्यं वामसव्ये इत्यनयोः सङ्गतार्थानुपपत्तेः। अतएव पूर्वं मेषादावित्याद्युक्तमिति' रङ्गना०। अथ पूर्वश्लोकोत्तरार्द्धस्य सन्दिग्धत्वशङ्कया दिनपूर्वापरार्धकथनच्छलेन तदर्थं श्लोकाभ्यां विशदयति।

"मेषादावुदितः सूर्य्यस्त्रीन् राशीनुदगुत्तरम्। सञ्चरन् प्रागहर्मध्यं पूरयेन्मेरुवासिनाम्। कर्क्यादीन् सञ्चरंस्तद्वत् पश्चार्धमेव सः। तुलादींस्त्रीन्मृगादींश्च तद्वदेव सुरद्विषाम्" सू० सि०।

"मेषादौ विषुवद्वृत्तस्थक्रान्तिवृत्तभागे देवभागस्थ उदितो दर्शनतां प्राप्तः सूर्य उत्तरं यथोत्तरं क्रमेणेति यावत् त्रीन् राशीनुदगुत्तरभागस्थान् मेषवृषमिथुनान् सञ्चरन् अतिक्रामन् सन् मेरुस्थानां देवानां प्रागहर्मध्यं प्रथमं दिनखण्डं पूरयेत् पूर्णं करोतीत्यर्थः। मिथुनान्ते सूर्य्ये मेरुस्थानां मध्याह्नं भवतीति फलितार्थः। कर्क्यादीन् त्रीन्

आनामकेऽर्व्वपि समानत्वात्" इत्यश्वमीमांसाकृत् ।

आत्मीयद्रव्यप्रदाननिषेधे विशेषस्तत्रोक्तो यथा "एवं प्रतिग्रहीतृकुलआत्मीयद्रव्यं दत्तकाय प्रतिग्रहीतृजनककुलआत्मीयद्रव्यञ्च द्व्यामुष्यायणाय न दातव्यं "सपिण्डाय सगोत्राय आत्मीयं नैव दापयेत् । न भोजयेत पितृश्राद्धे समानप्रवरं तथेति" हेमाद्रिपारिजातधृतवचनात् । आत्मीयं श्राद्धे दत्तद्रव्यम् ।

दत्तदुहिताऽपि ग्रहीतुं शक्यते यथोक्तं तत्रैव "औरसपुत्रस्येव औरसपुत्र्या अप्यपचारे क्षेत्रजाद्याः पुत्र्यः प्रतिनिधयो भवन्ति । "मुख्यापचारे प्रतिनिधिरिति" न्यायात् । मुख्यत्वञ्चास्या दानादिविधौ साधनत्वेन साधनत्वञ्च ऋतुगमनविधिना साधितायाः द्रव्यार्ज्जनविधिना अर्ज्जितस्य व्रीह्यादेः क्रतुसाधनत्ववत् । तथा हि रात्रिसत्रन्यायेन "ऋत्वियात् प्रजां विन्दामहे ऋत्वियात् प्रजां विन्दते" इत्याद्यर्थवादोन्नीते "ऋतावुपेयात् तस्मिन् संविशेत्" इत्यादौ नित्ये ऋतुगमनविधौ स्त्रीपुंससाधारण्याः श्रुतिसिद्धायाः प्रजाया एव भाव्यत्वमवगम्यते । प्रजनयतीति प्रजेतिव्युत्पत्त्या प्रजननशक्तिमतः स्त्रीपुंसयोरेव प्रजाशब्दवाच्यत्वात् न नपुंसकस्य तस्य शुक्रशोणितसाम्यजन्यत्वेन नान्तरीयकत्वात् । अतएव "अनधीत्य द्विजो वेदमनुत्पाद्य च सन्ततिम् । अनिष्ट्वा विविधैर्यज्ञैर्मोक्षमिच्छन् पतत्यधः" इति तादृश्या एव सन्ततेरनुत्पादे अधःपातः स्मर्य्यते । संतनोत्यन्वयमिति सन्ततिः प्रजापर्य्याय एव । "प्रजा स्यात् सन्ततौ जने" इति कोषात् । एवम् "अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः । क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति" इत्यत्र अपत्यशब्दो व्याख्यातः "अपत्यं कस्मादपततं भवति नानेन पततीति" यास्कस्मरणात् । "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी । आहुर्दुहितरं सर्व्वेऽपत्यं तोकं तयोः समे" इति कोषाच्च । यच्च "पुमान् पुरुमना भवति पुंसतेर्व्वेति" यास्कोक्त्या पुंपदं वक्तृपरं तदा पुंसतेर्व्वेति" तदुक्त्यैव प्रसवकर्त्तृमिथुनपरमेव व्याख्यायताम् । अतएव यास्कः "मिथुनाः पितृदायादा" इति । इदेतादृक्, श्लोकाभ्यामप्युक्तम् । "अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतमिति" । "अविशेषेण पुत्राणां दायो भवति धर्म्मतः । मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत्" इत्यत्र पुत्रपदं मिथुनपरं दर्शितवान् । तस्मात् मिथुनपदं पुत्रद्युपा-परमिति वाच्यम् । अङ्गादङ्गात् सम्भवसि इत्यस्यासङ्गतेः । "न दुहितर इत्येके पुमान् दायादोऽदायादा स्त्रीति विज्ञायत" इत्येकीयमते दुहितृनिराकरणासङ्गतेश्च । यच्च "नापुत्रस्य लोकोऽस्तीत्यादौ पुत्रपदं तदप्युभयपरमेव । "भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति" पाणिनिना पुत्रदुहितृपदयोरेकशेषकरणात् । एतेन "अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा" इत्यादावपि पुत्रपदं व्याख्यातम् । तत्साधनञ्च पुत्रिकाकरणलिङ्गमप्युच्यते । अतएवोक्तम् "तत्समः पुत्रिकासुत" इति । "अङ्गादङ्गात् सम्भवति पुत्रवद्दुहिता नृणामिति" च । यदि च अदृष्टैकलक्ष्येण कन्योत्पादः तदा कन्याप्रतिपत्त्याद्यादिना तत्सम्पादनं कार्य्यं कन्याचतुर्थीश्राद्धादिना पुत्रादृष्टस्येव" । यत्तु गर्भकरणिकायामेव भावनायाम् "एवं गच्छन् पुत्रं जनयेदिति" पुत्रस्यैव भाव्यत्वं प्रतीयते तत्प्रजापदोपात्तयोः स्त्रीपुंसयोर्म्मध्ये पुत्रस्य तद्वाक्यविहितगुणफलतया अवष्टत्यानुवादः पुत्रार्थिप्रशस्त्यर्थः । गुणाश्च युग्मनिशायुक्ताधिक्यस्त्रीणामतेन्दुसौम्यग्रपुंसवनापूपादयो योगिमन्त्रादिभिरेव एवमित्यादिना स्पष्टीकृताः । आश्वलायनेनापि पाणिग्रहणे पुत्रपुत्रीगुणफलत्वं प्रकटितम् । "गृह्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयात् यदि कामयेत पुमांस एव मे पुत्रा जायेरन्नित्यङ्गुलीरेव, स्त्रीकामो रोमान्ते हस्तं साङ्गुष्ठमुभयकाम इति" । एतेन "स्त्रियोऽयुग्मासु रात्रिषु" इत्यपि व्याख्यातम् । तस्मात् पुत्रस्येव श्राद्धकर्त्तृत्वेन परलोकसाधनतया च पुत्र्या अपि दानश्राद्धादिविधिसाधनत्वेन सिद्धे मुख्यत्वे तदपचारे प्रतिनिधिर्युक्त एव । "दुहिता दुर्हिता दूरे हिता दोग्धा" इति निरुक्त्या दुहितृदौहित्रद्वाराऽपि पितृपकारकत्वं दर्शयति यास्कः । मनुरपि "पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते । दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवदिति" । महाभारते गान्धार्य्युक्तिश्च "एका शताधिका बाला भविष्यति यवीयसी । तेन दौहित्रजाल्लोकान् प्राप्स्यामिति मे मतिः" । अन्यत्रापि "दुहितर एव मातापित्रोः किशोरत्वाः पुत्राः । निपतन् दिवो सका-

तिर्दौहित्रेण बह्वृचः पूर्वमिति"। दौहित्रैरष्टकादिभिः कानीनैर्व्यासगर्भोपुत्रैः। एतस्मादौरसदुहित्रभावे दौहित्रजनकोक्तप्राप्त्यर्थं क्षेत्रजादिदुहितृणामपि प्रतिनिधित्वेनोपादानं सिद्धमेव। न च स्त्रीप्रतिनिधित्व इव वचनमस्ति। यद्येवं तर्हि भर्तृपचारे देवरस्येव भार्य्योपचारे श्यालिकायाः प्रतिनिधित्वं स्यात् श्वशुरशरीरावयवान्वयेन सौसादृश्यादिति चेन्नैवम् नहि श्वशुरशरीरावयवान्वयेन भार्य्योपादानं किन्तु तस्याः संस्कृतस्त्रीत्वेन, न च तत् श्यालिकायामस्ति। यत्र च कनिष्ठादौ तदस्ति तत्र भवत्येव तस्याः ज्येष्ठाप्रतिनिधित्वम्। यथाह व्यतिरेकमुखेन योगीश्वरः। "सत्यामन्यां सवर्णायां धर्म्मकार्य्यं न कारयेत्। सवर्णासु विधौ धर्म्मे ज्येष्ठया न विनेतरेति"। तस्मात् सिद्धमासां न्यायत एव प्रतिनिधित्वम्"।

"दुहितृप्रतिनिधौ पुराणेषु लिङ्गदर्शनानि उपलभ्यन्ते। तत्र दत्तकाया रामायणे बालकाण्डे दशरथं प्रति सुमन्त्रस्य सनत्कुमारोक्तभविष्यानुवादो लिङ्गम्। "इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः। नाम्ना दशरथो वीरः श्रीमान् सत्यपराक्रमः। सख्यं तस्याङ्गराजेन भविष्यति महात्मना। कन्या चास्य महाभागा शान्ता नाम भविष्यति। अपुत्रस्त्वङ्गराजो वै लोमपाद इति श्रुतः। स राजानं दशरथं प्रार्थयिष्यति भूमिपः। अनपत्योऽस्मि धर्मज्ञ! कन्येयं मम दीयताम्। शान्ता शान्तेन मनसा पुत्रार्थं वरवर्णिनी। ततो राजा दशरथो मनसाभिविचिन्त्य च। दास्यते तां तदा कन्यां शान्तामङ्गाधिपाय सः। प्रतिगृह्य तु तां कन्यां स राजा विगतज्वरः। नगरं यास्यति क्षिप्रं प्रहृष्टेनान्तरात्मना। कन्यां तामृष्यशृङ्गाय प्रदास्यति स वीर्य्यवान्" इत्यादि"।

"तत्रैव ऋष्यशृङ्गं प्रति लोमपादवाक्यम्। "अयं राजा दशरथः सखा मे दयितः सुहृत्। अपत्यार्थं मयानेन दत्तेयं वरवर्णिनी। याचमानस्य मे ब्रह्मन्! शान्ता प्रियतमा मम। सोऽयं ते श्वशुरो धीर! यथैवाहं तथा नृपः" इत्यादि। अत्र दीयतां दास्यते प्रतिगृह्य दत्तादिशब्दैर्दानविधिः स्पष्ट एव। तथा पुत्र इत्युपक्रम्य पुत्रार्थं इत्युपसंहारात् औरसपुत्रीवत् दत्तपुत्र्यपि पुत्रप्रतिनिधिर्भवतीति गम्यते"।

एवं कृत्रिमादिपुत्रीकरणमपि शकुन्तलादीतिहासादौ दृष्टम्।

"दत्तकाशौचनिर्णयः। तत्र जनककुले परस्परं नास्त्येव। "गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा" इति मनुवचनात्। अत्र च स्वधापिण्डशब्दौ अशौचादिसकलपितृकर्म्मोपलक्षणं पिण्डदानादिनिमित्तीभूतगोत्ररिक्थयोर्निवृत्तिश्रवणात् प्रेतपिण्डदानादेश्चाशौचपूर्वकालत्वनियमात् ततश्च पिण्डनिवृत्त्या अशौचनिवृत्तिरर्थसिद्धैव। "असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्। प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत्। अप्राह्णिकान्तु नैव स्यात् कर्त्तुः स्वस्ति तथापि च। यावदशौचमदकं पिण्डमेकञ्च दद्युः" इत्यादिवाक्यपर्य्यालोचनया पिण्डाशौचयोः समव्याप्तिसिद्धेः तस्मात् दत्तकतज्जनकादीनाञ्च परस्परं नाशौचादि। यत्तु "वैजिकादपि सम्बन्धादनुरुन्ध्यादघं त्र्यहमिति" तदपि "व्यपैति ददतः स्वधा" इत्यनेनापोदितम् दत्तकातिरिक्तस्थले तस्य सावकाशत्वात्। किञ्च अशौचोदकदानादौ गोत्रसापिण्ड्ययोर्मिलितयोर्निमित्तत्वावगमात् अन्यतरापाये न तन्निमित्तमशौचादि। तथा च शङ्खलिखितौ "सपिण्डता तु विज्ञेया गोत्रतः साप्तपौरुषी। पिण्डश्चोदकदानञ्च शौचाशौचं तदानुगमिति"।

प्रतिग्रहीतृपित्रादीनान्तु दत्तकादिमरणे त्रिरात्रमशौचम्। तदाह बृहस्पतिः "अन्याश्रितेषु दारेषु परपत्नीसुतेषु च। कृतेष्वात्मसुतेषु शुद्ध्यन्ति त्रिरात्रेण द्विजोत्तमाः"। इदञ्च त्रिरात्राशौचविधानं यत्प्रतियोगिकं भार्य्यात्वं पुत्रत्वञ्च तस्यैव। विप्रकर्षा मन्तरवर्त्तिनां पितृसपिण्डानान्तु पृथगाह मरीचिः "सूतके मृतके चैव त्रिरात्रं परपूर्वयोः। एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः" इति। यद्यपि दत्तकादीनामुत्पत्त्युत्तरमेव स्वीकारात् परिग्रहीतुस्तदुत्पत्त्याशौचं न घटते तथापि तदपत्योत्पत्त्याशौचं घटत एवेति सूतकनिर्द्देशः। इदमपि समानजातीयानामेव पुत्राणाम्। तथा च ब्रह्मपुराणम्। "औरसं वर्ज्जयित्वा तु सर्व्ववर्णेषु सर्व्वदा। क्षेत्रजादिषु पुत्रेषु जातेषु च मृतेषु च। अशौचन्तु त्रिरात्रं स्यात् समान इति निश्चयः" इति। सर्व्वदा सर्व्वकाले उपनयनान्तरमपि। "अन्याश्रितेषु दारेषु परपत्नीसुतेषु च। गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता" इति। यद्यपि प्रतिग्रहीतृमरणे दत्तकस्य दशाहाशौचं न घटते

सपिण्डसगोत्रत्वयोर्मिलितयोरभावात् अशौचविशेषस्था-श्रय नोपलभ्यते तथापि “गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्। प्रेतहारैः समं तत्र दशरात्रेण शुध्यतीति” मरीचिवचनेन शिष्यस्य गुरुप्रेतकार्य्यकरणनिमित्तदशाहाशौचवदुक्तमवगति। अत्र गुरुशब्द आचार्य्यादिरूपः। गुरुत्वमत्राप्यस्ति उपनयनादिकर्तृत्वात्। ततश्च दत्तकस्य प्रतिग्रहीतृक्रियाकरणे एव दशरात्राशौचं सिध्यति अन्यथा त्रिरात्रमेव पर्वोक्तवचनात्। एवं दत्तकस्य प्रतिग्रहीतुस्त्रिपुरुषानन्तरवर्तिसपिण्डमरणे एकाहः “एकाहस्तु सपिण्डानाम” इति पूर्वोक्तमरीचिवाक्यात्। सोदकसगोत्रयोर्मरणे स्नानमात्रम्। “अन्याश्रितेषु दारेषु परपत्नीसुतेषु च” इति पूर्वोक्तप्रजापतिवाक्यात्”।

अन्येऽपि मीमांसादौ विशेषाः सन्ति ते च तत एवावगन्तव्या विस्तरभयात् न लिखिताः।

दत्तकचन्द्रिकानुसारिव्यवस्था वङ्गदेशे प्रचलिता मीमांसानुसारिव्यवस्था तु पाश्चात्त्यदेशप्रचलितेति भेदः।

वीरमित्रोदये अकृतानुज्ञे भर्त्तरि मृते स्त्रिया दत्तको ग्रहीतुं शक्यते इति व्याख्यापितम् यथा

‘न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञाना भर्त्तुरिति’। अत्र भर्त्रनुज्ञां विना स्त्रियाः पुत्रप्रतिग्रहनिषेधाददत्तानुज्ञे भर्त्तरि मृते विधवया कृतः पुत्रो दत्तको न भवतीत्याहुस्तन्न अपुत्रस्य गत्यभावात् पुत्रकरणस्यावश्यकत्वप्रमाणाच्छास्त्रमूलकतदनुज्ञायास्तत्राप्यसत्त्वेः। न चैवमनुज्ञानादन्यत्रेति व्यर्थम् व्यावर्त्त्याभावाच्छास्त्रीयानुमतेः सर्वत्रावश्यकत्वादिति वाच्यम्। कुण्डगोः, पत्यन्तरे पुत्रवतो वानुज्ञाया असम्भवात्तद्भार्य्या यदि स्वपुत्रार्थिनी तां प्रति निषेधात्। तथा हि “सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत्। सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुरिति’। पुत्रकार्य्यश्राद्धादेः सपत्नीपुत्रेण सिद्धेर्भर्त्त्रनुज्ञां विना तादृश्याः पुत्रो न कार्य्यः। उभयोरपि तत्र कार्य्यस्य तेन निष्पत्तेः। भर्त्तुर्हि स औरस एव मुख्यः तस्या अपि दत्तकेणेति तादृश्या भर्त्त्रनुमतिमन्तरेणेतरो न प्रतिग्राह्य इति तात्पर्य्यार्थः। वस्तुतस्तु “भ्रातृणामेकजातानामेकश्चेत् पुत्रवान् भवेत्। सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीदिति” वचनवदेतस्यापि भ्रातृपुत्रस्य गौणदत्तकपुत्रत्वादिवत्सवैगुण्यपुत्रप्रतिनिधिर्न कार्य्य इत्यर्थकतया मिताक्षरास्मृतिचन्द्रिकादौ व्याख्यातत्वाद्भर्त्तरि जीवति भार्य्यया स्वातन्त्र्येण तदननुमत्या न पुत्रीकरणीय इति भर्त्त्रनुज्ञानादन्यत्रेत्यस्यार्थः। मृते तु तस्मिन् न पारतन्त्र्यम् तस्या यत्पारतन्त्र्यं तदनुमतिरेवापेक्षिता। एवं सति दृष्टार्थता भवति प्रतिषेधस्य। तस्माद्दत्तानुज्ञे मृतेऽपि भर्त्तरि भार्य्याया दत्तकादिकरणमविरुद्धम्। अनुवचनद्वयस्य पूर्वोक्तार्थकत्वे उपपत्तिरपि मिताक्षरादावेवोक्ता’।

इयमपि व्यवस्था पाश्चात्त्यकदेशे प्रचलिता।

दत्तैश्वर्य्योपाधिभेदे ‘शर्म्मा देवश्च विप्रस्य वर्म्मा त्राता च भूभुजः। भतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्” उद्वा० त०। [हरिवं० १९अ० दत्तशब्दे दृश्यम्।

**दत्तपुत्र** पु० अभिहेन्द्रपुत्रभेदे दत्तशब्देऽपि तत्पुत्रभेदे

**दत्तात्मन्** पु० द्वादशपुत्रान्तर्गते पुत्रभेदे “दत्तात्मा तु स्वयंदत्त’ याज्ञ०। ‘मातापितृविहीनस्ताभ्यां त्यक्तो वा तवाहं पुत्रो भवामीति स्वयंदत्त उपगत” मिता०। “स्वयमेव स्वात्मानमन्यस्मै दत्तवानाह पुत्रो भवामीति स्वयमुपगतो मातापितृविहीनस्ताभ्यां त्यक्तो वा स्वयमेऽर्पितः स उच्यते तथा च मनुः “मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्। आत्मानं स्पर्शयेद्यस्तु स्वयन्दत्तस्तु स स्मृत” इति। अकारणात् पातित्यादिकारणमन्तरेणैव दुर्भिक्षादौ पोषणाद्यसामर्थ्यादिना मातापितृभ्यां त्यक्तः स्वतन्त्र इत्यर्थः” वी० मि०।

**दत्तात्रेय** पु० दत्तसंज्ञक आत्रेयः। योगाचार्य्ये अनुसूयागर्भजे अत्रिपुत्रे षष्ठे भगवदवतारभेदे। आत्रेयशब्दे तदुत्पत्तिकथा दृश्या “षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनुसूयया। आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान भाग० १।३।११। तेन च स्वसंस्कृताया योगोऽनुशिष्टः कार्त्तवीर्य्याय च तेन वरो दत्तः कार्त्तवीर्य्यशब्दे दृश्यः।

**दत्तात्रेयेश्वर** पु० काशीस्थे शिवलिङ्गभेदे “श्रीगणेशवनामासौ दत्तात्रेयेश्वराह्वयम्। दत्तात्रेयेश्वरात् पूर्वमेव आदिगदाधर” काशीख० ३३ अ०।

**दत्तानपकर्म्मन्** न० दत्तस्य न अपकर्म्म यत्र। दत्ताप्रदानिकाख्ये व्यवहारविषयभेदे।

**दत्ताप्रदानिक** न० दत्तस्य असम्यक्तया दत्तत्वात् पुनरादानं प्रकृतमस्त्यत्र ठन्। अष्टादशविवादान्तर्गते व्यवहारविषयभेदे तत्स्वरूपादिकं वी०मि० उक्तं यथा नारदः ‘दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति।

दत्ताप्रदानिकं नाम व्यवहारपदं हि तदिति"। अव-
ध्यक्त अशास्त्रीयमार्गाश्रयणेनेत्यर्थः। दानप्रकारस्या-
देयादिभेदैश्चतुर्विधत्वमाह स एव। "अदेयमथ देयञ्च
दत्तं वाऽदत्तमेव च। व्यवहारेषु विज्ञेयो दानमार्ग-
श्चतुर्विधः" इति। तत्र तावददेयस्य स्वरूपभेदानाह
बृहस्पतिः "सामान्यं पुत्रदाराधिसर्वस्वन्यासयाचि-
तम। प्रतिश्रुतमथान्यस्य न देयं त्वष्टधा स्मृतमिति"।
सामान्यं साधारणं प्रतिश्रुतं वाचादत्तम्। नारदोऽपि
"अन्वाहितं याचितकमाधिः साधारणञ्च यत्। निक्षेपः
पुत्रदाराश्च सर्वस्वञ्चान्वये सति। आपत्स्वपि हि
कष्टासु वर्त्तमानेन देहिना। अदेयान्याहुराचार्य्या
यच्चान्यस्मै प्रतिश्रुतमिति"। साधारणं बहुस्वामिकं
रिक्थादिकं न त्वविभक्तस्वामिकं सुवर्णादिकं तस्य
स्वमतो देयत्वेन वक्ष्यमाणत्वात्। अत्र पुत्रदानमेक
पुत्रविषयं तद्दाने सन्ततिविच्छेदप्रसङ्गात्। अतएव
विष्णुः "शुक्रशोणितसम्भवः पुरुषो मातापितृनिमि-
त्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतो
नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि सन्तानाय
पूर्वेषामिति"। अतश्च "सुतस्य सुतदाराणां वशित्वन्त्वनु
शासने। विक्रये चैव दाने च वशित्वं न सुते पितुः"
इत्यादीनि स्मृत्यन्तरोक्तवचनानि सुतस्यादेयत्वप्रतिपा-
दकानि एकपुत्रविषयाणीति ज्ञेयानि। अनेकपुत्रेष्वपि
मातापितृवियोगसहनक्षम एव देयः। अतएव कात्या
यन "विक्रयश्चैव दानञ्च न नेयाः स्युरनिच्छवः।
दाराः पुत्राश्चेति" यथा दारा विक्रयं दानं वा भर्त्रा
न नेयास्तथा मातापितृभ्यां पुत्रा अपि पितृवियोगा-
निच्छवो न नेया इत्यर्थ उक्तः स्मृतिचन्द्रिकायाम्।
न नेयाः स्युरनिच्छव इत्येतदनापद्विषयम्। 'आपत्काले
तु कर्त्तव्यं दानं विक्रयमेव वा। अन्यथा न प्रवर्त्तेत
इति शास्त्रविनिश्चयः" इति तानेवाधिकृत्य तेनैवाभि
धानात्। मात्रापि पत्यनुज्ञया देयमित्याह विष्णु
"न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तु
रिति। अन्वाहितादिवत् स्त्रीधनमप्यदेयम्। अतएव
दक्षः 'सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम्।
अन्वाहितञ्च निःक्षेपः सर्वस्वं चान्वये सति। आपत्स्वपि
न देयानि नव वस्तूनि पण्डितैः। यो ददाति स
मूढात्मा प्रायश्चित्तीयते नरः" इति। अदेयदाने प्रतिपत्ते
च दण्डमाह भृगुः। "अदेयं यश्च गृह्णाति यश्चादेयं
प्रयच्छति। तावुभौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहस
मिति"। अदेयग्रहणमदत्तस्याप्युपलक्षणार्थम्। अतएव
नारदः। "गृह्णात्यदत्तं यो लोभाद्यश्चादेयं प्रयच्छति।
दण्डनीयावुभावेतौ धर्मज्ञेन महीक्षितेति"। अदत्तादेय
ग्रहणाद्गृहीतस्य परावर्त्तनमपि कार्यमिति गम्यते।
अदत्तग्रहणे दाने च दानसिद्ध्यभावात्परस्वत्वानुत्पत्ते-
रित्युक्तं स्मृतिचन्द्रिकायाम्। देयस्वरूपमाह स एव।
"कुटुम्बभरणाद्द्रव्यं यत्किञ्चिदतिरिच्यते। तद्देयमुप-
हत्यान्यत्त तद्दोषमवाप्नुयादिति"। अन्यदुपहत्य भर्त्तव्य
कुटुम्बमनवरुध्येत्यर्थः। उपरोधश्च भोजनाच्छादनादि-
राहित्यनिबन्धनतोऽत्राभिमतो न ताम्बूलादिभोगसाधन-
वैकल्यनिबन्धनः। अतएव बृहस्पतिः। 'कुटुम्ब भक्त-
वसनाद्देयं यदतिरिच्यत इति"। भक्तं भोजनं वसनम्
आच्छादनम्। भक्तवसनाद्यदतिरिच्यत इत्यन्वयः।
याज्ञवल्क्योऽपि" स्वं कुटुम्बाविरोधेन देयं दारसुता-
दृते" इति। कुटुम्बाविरोधेन कुटुम्बानुपरोधेन कुटुम्बभ-
रणावशिष्टं स्वन्देयमित्यर्थः। स्थावरविषये देयमाहतुः
प्रजापतिबृहस्पती "सप्रागमाद्गृहक्षेत्राद्यद्यनच्चेत
प्रदीयते। पित्र्यं वाथ स्वयंप्राप्तं तद्दातव्यं विव-
क्षितमिति"। सप्रागमात्पूर्वोक्तसप्रविभागसयुक्तात्।
क्षेत्रग्रहणमुपलक्षणम्। पित्र्यं वंशपरम्परायातम्।
स्वयंप्राप्तं स्वयमर्जितम्। पित्र्यस्वयंप्राप्तयोरुपादानं
क्रीतादीनामुपलक्षणार्थम्। पित्र्यं वा स्वयंप्राप्तं वा
यद्गृहक्षेत्रादिकं प्रदीयते तत्सप्रागमान्विताद्गृहक्षेत्रा-
दुद्धृत्य दातव्यमिति विवक्षितमित्यर्थः। अत्र सप्रा-
गमाद्गृहक्षेत्रादित्यभिधानं गृहक्षेत्रादिदानं कुटुम्ब-
पर्य्याप्ते सागमके गृहे क्षेत्राद्यन्तरे सत्येव नान्य-
थेत्येतदर्थम्। यत्तु कात्यायनेनोक्तम "सर्वस्वं गृह-
वर्जं तु कुटुम्बभरणाधिकम्। यद्द्रव्यं तत् स्वकन्देय-
मदेय स्यात्ततोऽन्यथेति"। तद्गृहाद्यन्तराभावविषयम्।
स्वकं स्वकीयम् यथेष्टविनियोगार्हद्रव्यमिति यावत्।
स्वयंप्राप्तं त्वविभक्तधनैर्भ्रातृभिरननुज्ञातमपि देयम्।
"स्वेच्छादेयं स्वयंप्राप्तं बन्धाचारेण बन्धकम्" इति
बृहस्पतिस्मरणात्। स्वेच्छादेयं भ्रात्राद्यनुज्ञामन्तरेणापि
देयम्। बन्धकं बन्धाचारेणाधिरूपेण देयमित्यर्थः।
यत्तु तेनैवोक्तम् "विभक्ता अविभक्ता वा दायादाः स्थावरे
समाः। एकोऽप्यनीशः सर्वत्र दानाधमनविक्रये" इति।
तत् समानाधिकाविभक्तस्थावरविषयम्। आधुनिका-

पौत्रश्च विभक्ता अपि स्थावरे समाः स्थिता अविभक्ता इति दण्डापूपन्यायेन व्याख्येयम्। अन्यथा विभागो निरर्थकः स्यात्। अतश्च यदुक्तं स्मृत्यन्तरे "एकोऽपि स्थावरे कुर्य्याद्दानाधमनविक्रयम्। आपत्काले कुटुम्बार्थे धर्म्मार्थे च विशेषतः" इति। तत्क्रमायातविभक्तस्थावरविषयं स्वार्जिताविभक्तस्थावरविषयं चेति मन्तव्यम्। स्वार्जितमपि किञ्चित्प्राग्व्यवहारेषु पुत्रेषु सत्सु तदनुमत्यैव दातव्यमित्यभिप्रेत्याह भगवान् व्यासः। "स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्ज्जितम्। असम्भूय सुतान् सर्व्वान्न दानञ्च च विक्रयः। ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः। वृत्तिञ्च तेऽभिकाङ्क्षन्ति न दानञ्च न विक्रयः" इति। अस्योत्तरपद्यं पूर्व्वपद्यदर्शितदृष्टान्तवचनार्थस्य दण्डापूपन्यायप्रदर्शनेन दृढीकरणार्थम्। किञ्चित्कृत्वा पत्न्यनुज्ञातमेव देयम्। किञ्चिन्मुख्येनापि भ्रात्राद्यनुज्ञातमेव देयम्। तथा च वृहस्पतिः "सौदायिकं क्रमायातं शौर्य्यप्राप्तञ्च यद्भवेत्। ज्ञातिस्वाम्यनुज्ञात दत्तं सिद्धिमवाप्नुयादिति"। सौदायिकं वैवाहिकं यस्याः परिणयने लब्धं तस्याः अनुज्ञयैव दातव्यम्। क्रमायातम्पितृपितामहादिक्रमायातम्। ज्ञात्यनुमतं न सकलस्वेयम्। "वैवाहिके क्रमायाते सर्व्वदानञ्च विद्यते" इति तेनैवोक्तत्वात्। देयोक्तिप्रसङ्गेन प्रतिग्रहे प्रकारविशेषं दर्शयति याज्ञवल्क्यः "प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषतः" इति। प्रकाशः प्रकटः ससाक्षिक इति यावत्। पुत्रप्रतिग्रहे प्रकारविशेष उक्तो वशिष्ठेन। "पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवमसन्निकृष्टमेव प्रतिगृह्णीयादिति"। अदूरबान्धवं सन्निहितमातुलादिबान्धवम् असन्निकृष्टं सन्निकृष्टभ्रातृभगिनीपुत्रादिव्यतिरिक्तमेव प्रतिगृह्णीयादित्यर्थः। प्रासङ्गिकमुक्त्वा प्रकृतमप्याह याज्ञवल्क्यः "देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत् पुनः" इति। इदन्ते दास्यामीति यत् प्रतिश्रुतन्तदवश्यं तस्मै दातव्यं यदि धर्म्मप्रच्युतो न भवति। प्रच्युते पुनर्न दातव्यं "प्रतिश्रुत्याप्यधर्म्मसंयुक्ताय न दद्यादिति" गौतमस्मरणात्। "दत्त्वा नापहरेत् पुनः"। न्यायमार्गेण यत् दत्तं सप्तविधमपि पुनर्नापहर्त्तव्यम् किन्तु तथैवानुमन्तव्यमित्यर्थः। यत् पुनः प्रतिश्रुतञ्च ददाति दत्तं वाऽपहरति तस्य दोषमाह हारीतः "प्रतिश्रुतार्थादानेन दत्तस्य छेदनेन च। विविधान्नरकान् याति तिर्य्यग्योनौ च जायते। वाचैव यत्प्रतिज्ञातं कर्म्मणा नोपपादितम्। ऋणं तद्धर्म्मसंयुक्तमिह लोके परत्र च" इति। यद्दत्तं धर्म्मसंयुक्तं प्रतिगृहीतुः प्रकृतधर्म्मसम्पत्त्यर्थं वाचा प्रतिज्ञातञ्च पश्चादर्पितं तदिह परत्र च ऋणवत्तापैतीत्यर्थः। प्रतिश्रुतमदत्त्वा तद्दाप्यो दण्ड्यश्चेत्याह कात्यायनः "स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम्। न दद्याद्दापवद्दाप्यः प्राप्नुयात् पूर्व्वसाहसम्" इति। मत्स्यपुराणेऽपि "प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृप" इति। अनयोर्दण्डयोरपराधानुसारेण व्यवस्था।

दत्तं सप्तविधमदत्तं षोडशप्रकारमित्याह नारदः

"दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकम्" इति। तत्र दत्तभेदानाह स एव। "पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात् प्रत्युपकारतः। स्त्रीशुल्कानुग्रहार्थञ्च दत्तं दानविदो विदुः" इति। पण्यमूल्यं क्रीतद्रव्यस्य मूल्यम्। भृतिस्वरूपं कात्यायनेन दर्शितम्। "अभीप्सितोपलब्ध्यर्थं दानं यत्र निरूपितम्। उपलब्धिक्रियालब्धं सा भृतिः परिकीर्त्तिता" इति। प्रयोजनक्रियासम्पादनार्थं भृतिरिष्यत इत्यर्थः। तुष्ट्या परितोषेण वन्दिभ्यो भृतिभ्यो दत्तमिति शेषः। स्नेहात् प्रीत्या दुहित्रादिभ्यो दत्तम्। प्रत्युपकारतः कृतोपकाराय प्रत्युपकारिणा दत्तम्। तत्प्रदर्शनार्थमाह। कात्यायनः "भयत्राणोपरक्षार्थं तथाकार्य्यप्रसाधनात्। अनेन विधिना लब्धं भयत्राणादिकं धनम्"। उपकारकरणेन लब्धमिति यावत्। स्त्रीशुल्कं विवाहार्थं कन्याबन्धुभ्यो दत्तम्। अनुग्रहार्थं परोपकारः कर्त्तव्य इति विधिवशात् कृताप्यनुग्रहार्थं दत्तमेतत् सकलं सफलं भवतीति दर्शयितुं नारद आह "मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि। दीनानाथविशिष्टेभ्यो दत्तं तु सफलं भवेदिति"। उपकारिणि परोपकारे सफलं फलातिशययोगितमित्यर्थः। तदेतत्पण्यादि सप्तविधं दत्तमेव दानविदो विदुः अपरावर्त्तनीयं विदुरित्यर्थः। वृहस्पतिरपि "भृतिस्तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे। श्रद्धानुग्रहसम्प्रीत्या दत्तं सप्तविधं विदुरिति" अदत्तानि दर्शयति नारदः "अदत्तन्तु भयक्रोधशोकवेगरुगन्वितैः। तथोत्कोचपरीहासव्यत्यासच्छलयोगतः। बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्ज्जितम्। कर्त्ता ममायं कर्म्मेति प्रतिलाभेच्छया च यत्। अपात्रे पात्रमित्युक्ते कार्य्ये वा धर्म्मसंहिते। यद्दत्तं स्यादविज्ञानाददत्तमिति

तत्पुनर्हरेदिति"। तत्र उपताप· भयादिजनीय उपताप- स्तदभिर्तैरित्यन्वयः। अपवर्ज्जितं दत्तं बालादिभिरप- वर्ज्जितमित्यन्वयः। एतदुक्तं भवति भयोपतप्तेन वन्दि- ग्राहादिभ्यो दत्तं क्रोधोपतप्तेन क्रोधविषयीभूतानां पुत्त्रभ्रात्रादीनां भयं कर्त्तुमितरेभ्यो दत्तम्। पुत्रादि- वियोगजनितशोकवेगादुपतप्तेन किं स्थितेन धनेनेति तात्कालिक्या बुद्ध्या दत्तम्। उत्कोचेन राजकीया- दिभ्यो दत्तम्। उपहासेन दत्तम्। व्यत्यासेन एकः स्वद्रव्यमन्यस्मै ददाति अन्योऽपि स्वीयमन्यस्मै ददातीति दानव्यत्यासेन दत्तम्। छलयोगतः शतदानमभिसन्धाय सहस्रमिति परिभाष्य दत्तम्। बालेनाप्राप्तव्यवहारेण दत्तं मूढ़ेन लोकवेदानभिज्ञेन दत्तम्। अस्वतन्त्रेण दासादिना दत्तम्। आर्त्तेन रोगोपहतेन दत्तम्। मत्तेन धुस्तूरादिभक्षणादिना मत्तेन दत्तम् उन्मत्तेन वातपित्ताद्युद्रेकादिना चलितधिया दत्तम्। अयं मदीयं कर्म्म करिष्यतीति प्रतिलाभेच्छया प्रतिलाभमकुर्व्वाणाय दत्तम्। अपात्रायायोग्याय योग्योऽहमिति उक्तिमात्रेण दत्तम्। यज्ञादिं करिष्यामीत्युक्त्वा धनं गृहीत्वा द्यूता- दिकर्म्मणि विनियुञ्जानाय दत्तं इत्येवं षोड़शप्रकार- मपि दत्तं पुनः प्रत्याहरणीयत्वाददत्तमुच्यत इत्यर्थः। पुनःप्रत्याहरणीयत्वमेवंविधानामाह कात्यायनः "काम- क्रोधास्वतन्त्रार्त्तक्लीबोन्मत्तप्रमोहितैः। व्यत्यसपरि- हाराय यद्दत्तन्तत्पुनर्हरेत्। या तु कार्य्यासिद्ध्यर्थ- मुत्कोचा स्यात्प्रतिक्रिया। तत्समस्यापि प्रसिद्धेऽर्थे न देया स्यात्कथञ्चन। अथ प्रागेव दत्ता स्यात्प्रतिदाप्यस्ततो- बलात्। दण्डं चैकादशगुणमाहुर्गार्ग्यमानवाः" उत्कोचकस्वरूपमाह स एव। "स्तेनसाहसिकोद्- वृत्तपारदारिकशंसनात्। दर्शनाद्वृत्तनष्टस्य तथाऽ- सत्यप्रवर्त्तनात्। प्राप्तमेतैस्तु यत्किञ्चिदुत्कोचाख्यं तदुच्यते। न दाता तत्र दण्ड्यः स्यान्मध्यस्थश्चैव दोष- भागिति" एतदुक्तं भवति यदि मह्यं न प्रयच्छसि तदा त्वत्कृतं स्तेयादि कथयामीति भीतिमुत्पाद्य स्तेयादि- कर्त्तुः सकाशाद्धनमादत्ते। तथा त्वं यदि धनं मह्यं च प्रयच्छसि तदा पलायमानं त्वां दर्शयामीति भीतिमुत्पाद्य पलायिनः सकाशाद्यत्किञ्चिदादत्ते तथा तव सत्यमपि स्वामिनिकटेऽसत्यं वदिष्यामीत्युक्त्वा यत्किञ्चिदादत्ते तदु- त्कोचाख्यं तद्दाता दाने दाप्यम् उत्कोचापादकग्राहकौ दण्डनीयाविति पुनः प्रत्याहरणीयमिति बृहस्पति- रप्याह प्रतिलाभेच्छया दत्तमपात्रे पात्रशङ्कया। कार्य्ये वा धर्म्मसंयुक्ते स्वामी तत्पुनराप्नुयादिति"। आर्त्तदत्त- स्यादत्तत्वं धर्म्मकार्य्यव्यतिरिक्तविषयम्। तथा च कात्या- यनः "स्वस्थेनार्त्तेन वा दत्तं श्रावितं धर्म्मकारणात्। अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः" इति। मनुरपि सोपाधिकदानादेर्निवर्त्तनमाह "योगाधमनविक्रीतं योगदानप्रतिग्रहम्। यत्र वाप्युपधिं पश्येत् तत्सर्वं विनि- वर्त्तयेदिति"। योग उपाधिः येनागाधिनोपाधिविशे- षेणाधिविक्रयादानप्रतिग्रहाः कृतास्तदुपाधिविगमे ते सर्वेऽपि निवर्त्तेरन्नित्यर्थः।"

**दत्तामित्र** पु० सौवीरनृपभेदे। "दत्तामित्र इति ख्यातं संग्रामे कृतनिश्चयम्। सुमित्रं नाम सौवीरमर्ज्जुनोऽदमयच्छरैः" भा० आ० १३९ अ०। [दत्तिभिः" रघुः

**दत्ति** स्त्री दा—क्तिन् ददादेशः। दाने "अनुग्रहीतुं निवाप

**दत्तिक** त्रि० अल्पो दत्तः ठन्। अल्पदत्ते। दत्तान्तशब्दात् मनुष्यनाम्नः घन् इलच् ठ क वा। देवदत्त-यज्ञदत्त+ स्थानीयेषु चादौ पूर्व्वपदलोपे दत्तिय, दत्तिल दत्तिक दत्तक देवद। यज्ञदत्त सोमदत्तादौ।

**दत्तेय** पुंस्त्री० दत्ताया अपत्यम् ढक्। १दत्ताया दत्तककन्याया अपत्ये २इन्द्रे पु० हेमच० दत्तेयेति वा तत्र पाठः।

**दत्तोलि** पु० पुलस्त्यसुतौ विष्णुपु०।

**दत्र** न० दा—बा० कत्रन्। १धने "इन्द्र! यत्ते माहिनं दत्रम्" ऋ० ३।३६।९। 'दत्रं धनम्' भा०। "दत्रा विश्वा अभिता इन्द्र! कृष्टीः" ऋ० ४।१७।६। "दत्रे धने" भा०। २हिरण्ये निरु०। "यो दत्रवा उषसो न प्रतीकम्" ऋ० ६।५०।८।

**दत्त्रिम** त्रि० दानेन निर्वृत्तः दा—क्त्रि—म्मप् च। १दान- निर्वृत्ते। "निष्ठा गत दत्त्रिममभ्यतोषे" भट्टिः। "माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः" इत्युक्ते २दत्तक- पुत्त्रे पु०।

**दद** दाने धृतौ च भ्वा० आ० सक० सेट्। ददते अददिष्ट दददे। "विटपविटपमस्य ददस्व तस्मै" माघः। [तत्रार्थे।

**दद** त्रि० दा—बा० श। दातरि। पक्षे आदन्तत्वात् कः दाय

**ददन** न० दद—भावे ल्युट्। दाने शब्दर०।

**ददि** त्रि० दा—कि द्वित्वम्। दानकर्त्तरि। [विदारणशीले।

**ददृत्** त्रि० दीर्य्यति दॄ—क्विप् चङ्कः द्वित्वं तुकम्। दीर्य्यति।

**ददृशान** त्रि० दृश—शानच्। दृष्टे "अस्य शुष्मासो ददृशानपवे-

र्वै ह्वयमानस्य” ऋ० १०।१।६। “दद्वानमपरो ह्वयमानायुधस्य” भा० अत्र ह्वयमानेति विवरणं छान्दसत्वेति बोध्यम्
दद्वि(धि) अव्य० धाम्न्यायाम् निघण्टुः। अयं धातुरित्यन्ये।
दद्रु पु० ददाति त्वचं दद–रु। रोगभेदे। “सकण्डुरागपिडकं दद्रुमण्डलमुद्गतम्” भावप्र०। तद्गतं उत्पन्नम् कुष्ठशब्दे २१५४ पृ० दृश्यम्। स्वार्थे क। दद्रुक तत्रार्थे शब्दर०। [अमरः २ हाकुचे रत्नमा०।
दद्रुघ्न पु० दद्रुं हन्ति हन–टक्। १चक्रमर्द्दके (दादमर्द्दन)।
दद्रुण त्रि० दद्रु+पामा० अस्त्यर्थे न ह्रस्वश्च। दद्रुरोग-युक्ते अमरः। [भेदे (दाद्)।
दद्रू स्त्री दरिद्रात्यनयाऽङ्गम् दरिद्रा–ऊ नि०। त्वग्रोग-
दध दाने धारणे च भ्वा० आत्म० सक० सेट्। दधते अदधिष्ट।
दधन्वत् त्रि० दधि–मतुप् वेदे नि० दधन्नादेशो मस्य वः। दधिविशिष्टे। “अच्छिद्रस्य दधन्वतः सुपर्णस्य दधन्वतः” ऋ० ६।४८।१८। “दधन्वतः दधिमतः” भा०।
दधि क्ली० धा–कि द्वित्वम्। १धारणकर्त्तरि किप्रत्ययान्तत्वेन तद्योगे न कर्म्मणि षष्ठी “सुदा दधिं वाहकमेतदर्थकान्” मुग्ध०। दध–इन्। २दुग्धविकृतिभेदे, (दइ) ३वस्त्रे च न० हेमच०। दधिगुणभेदादिकं भावप्र० उक्तं यथा
“दध्युष्णं दीपनं स्निग्धं कषायानुरसं गुरु। पाकेऽम्लं श्वासपित्तास्रशोथमेदःकफप्रदम्। मूत्रकृच्छ्रे प्रतिश्याये शीतके विषमज्वरे। अतीसारेऽरुचौ कार्श्ये शस्यते बलशुक्रकृत्। अथ दधिभेदाः। “आदौ मन्दं ततः स्वादु स्वाद्वम्लञ्च ततः परम्। अम्लञ्चतुर्थमत्यम्लं पञ्चमं दधि पञ्चधा। अथ मन्दादीनां लक्षणानि गुणाश्च। मन्दं दुग्धं यदव्यक्तरसं किञ्चिद्घनं भवेत्। मन्दं स्यात् सृष्टविण्मूत्रं दोषत्रयविदाहकृत्। यत्सम्यग् घनतां यातं व्यक्तं स्वादुरसं भवेत्। अव्यक्ताम्लरसं तत्तु स्वादु विद्भिरुदाहृतम्। स्वादु स्यादत्यभिष्यन्दि वृष्यं मेदःकफापहम्। वातघ्नं मधुरं पाके रक्तपित्तप्रसादनम्। स्वाद्वम्लसान्द्रं मधुरं कषायानुरसं भवेत्। स्वाद्वम्लस्य गुणा ज्ञेया सामान्यदधिलक्षणैः। अप्रतीतिमाधुर्य्यं व्यक्ताम्लत्वं तदम्लकम्। अम्लन्तु दीपनं पित्तरक्तश्लेष्मविवर्द्धनम्। तदत्यम्लं दन्तरोमहर्षकण्ठादिदाह[illegible]। अत्यम्लं दीपनं रक्तवातपित्तकरं परम्”। गोदधिगुणाः “गव्यं दधि विशेषेण स्वाद्वम्लञ्च रुचिप्रदम्। पवित्रं दीपनं हृद्यं पुष्टिकृत् पवनापहम्। उक्तं दध्नामशेषाणां मध्ये गव्यं गुणाधिकम्। माहिषदधिगुणाः। माहिषं दधि सुस्निग्धं श्लेष्मलं वातपित्तनुत्। स्वादुपाकमभिष्यन्दि वृष्यं गुर्व्वस्रदूषकम्”। छागीदधि गुणाः “छागं दध्युत्तमं ग्राहि लघु दोषत्रयापहम्। शस्यते श्वासकासार्शःक्षयकार्श्येषु दीपनम्”। पक्वदुग्धदधिगुणाः। पक्वदुग्धभवं हृद्यं दधि स्निग्धं गुणोत्तमम्। पित्तानिलापहं सर्वधात्वग्निबलवर्द्धनम्। निःसारदुग्धदधिगुणाः। असारं दधि संग्राहि शीतलं वातलं लघु। विष्टम्भि दीपनं रुच्यं ग्रहणीरोगनाशनम्। गालितदधिगुणाः “गालितं दधि सुस्निग्धं वातघ्नं कफकृद्गुरु। बलपुष्टिकरं रुच्यं मधुरं नातिपित्तकृत्। शर्करादिसहितदधिगुणाः। सशर्करं दधि श्रेष्ठं तृष्णापित्तास्रदाहजित्। सगुडं वातहृद्वृष्यं बृंहणं तर्पणं गुरु।” अथ रात्रौ दधिभोजननिषेधः। न नक्तं दधि भुञ्जीत नचाप्यघृतशर्करम्। नामुद्गयूषं नाक्षौद्रं नोष्णं नामलकैर्विना। अयमर्थः। रात्रौ दधि न भुञ्जीत भुञ्जीत चेत्तदा अघृतशर्करममुद्गयूषं अक्षौद्रमुष्णं विनामलकैश्च दधि न भुञ्जीत। तेन घृतशर्करादियुक्तं दधि रात्रावपि भुञ्जीतेत्यर्थः। तथा च। शस्यते दधि नो रात्रौ शस्तञ्चाम्बुघृतान्वितम्। रक्तपित्तकफोत्थेषु विकारेषु तु नैव तत्। तदम्बुघृतान्वितमपि। अथर्त्तुविशेषेण विधिनिषेधौ। हेमन्ते शिशिरे चापि वर्षासु दधि शस्यते। शरद्ग्रीष्मवसन्तेषु प्रायशस्तद्विगर्हितम्। अयथाविधिना दधिसेवने दोषमाह ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयभ्रमान्। प्राप्नुयात् कामलाञ्चोग्रां विधिं हित्वा दधिप्रियः। अथ सरस्य मस्तुनश्च लक्षणं गुणाश्च। दध्नस्तूपरि यो भागो घनः स्नेहसमन्वितः। स लोके सर इत्युक्तो दध्नोमण्डस्तु मस्त्विति। सरः स्वादुर्गुरुर्वृष्यो वातवह्निप्रणाशनः। साम्लोवस्तिप्रशमनः पित्तश्लेष्मविवर्द्धनः। मस्तु क्लमहरं बल्यं लघु भक्ताभिलाषकृत्। स्रोतोविशोधनं ह्लादि कफतृष्णानिलापहम्। अवृष्यं प्रीणनं शीघ्रं भिनत्ति मलसञ्चयम्”।
“दधि सक्तुषु भोक्तव्यम् वर्जयेद्दधिसक्तवम्” मनुः। “विना लवणतोयाभ्यां दधि नाश्नीत कीर्त्तितः” “कफपित्तकरं दधि” इति वैद्य०।
दधिशब्दस्य दुग्धविकाररूपार्थत्वे क्लीवत्वेन [illegible] उभ-पुंस्त्वाभावात् टादावचि [illegible] इत्यादि” वाहकम[illegible]-

स्वार्थपरत्वे तु प्रवृत्तिनिमित्तसाम्यात् उक्तपुंस्कत्वात् क्लीबत्वेऽपि वा पुंवद्रूपं दधये दधिने कुमाय इत्यादि अस्य उरःप्रभृतिषु पाठात् बहुव्रीहौ नित्यं कप् बहु दधिको यत्र इत्यादि।

**दधिकूर्चिका** स्त्री "दध्ना सह पयः पक्वं यत् स्यात् स दधिकूर्चिका" इत्युक्तायामामिक्षायाम्।

**दधिक्रा** पु० दधि दधद्द्रव्यं धारयन् सन् क्रामति क्रम-विट् अन्तस्यात्। १अश्वरूपे अग्न्यात्मके देवभेदे "दधिक्राश इश्रद्युर्विश्वकृष्टिम्" ऋ० ४।३८।२। उक्ता व्युत्पत्तिर्भाष्ये दर्शिता। "आ दधिक्राः शवसा पञ्च कृष्टीः" १०।३।२ अग्निश्च०। तन्नामनिरुक्तिः २।२७। तत्र दर्शिता यथा "तत्र दधिक्रा इत्येतद् दधत् क्रामतीति वा दधत् क्रन्दतीति वा दधदाकारी भवतीति वा। तस्याश्ववद् देवतावच्च निगमा भवन्ति"। अतो देवार्थतापीति गम्यते स चाग्निरूपः दधिक्रावन् शब्दे माधववाक्ये दृश्यम्।

**दधिक्रावन्** पु० दधिः दधत् क्रामति क्रम-वनिप् अन्तस्यात्। अश्वरूपे अग्न्यात्मके देवभेदे। "दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत्" ताण्ड्य०ब्रा० १६।१७। "दधिः दधत् धारयन् क्रामतीति दधिक्रावा क्रमेर्वनिपि विड्वनोरनुनासिकस्यादिति" मकारस्याकारः, तस्य दधिक्राव्णः एतत् सप्तकस्याश्वरूपस्य देवस्य" भा०। अत्र द्राह्यायण० 'आग्नीध्रीय गत्वा दधिभक्षं भक्षयेयुरुपहूय दधिक्राव्ण इति। अत्र यद्यप्यस्मिन् मन्त्रे दधिक्रावन् इति अश्वरूपोऽग्निविशेष एव देवतात्वेनाभिधीयते, तथापि दधिशब्दयोगात् सामान्येन दधिभक्षणे विनियोग इति द्रष्टव्यम्" भा०। एतदनुसारेण पञ्चगव्यादिशोधनेऽपि दधिशोधनेऽयं मन्त्रो विनियुक्तः इति बोध्यम्।

**दधिघर्म्म** पु० दधिसंस्कारके वैदिके कर्म्मभेदे। "दधिघर्म्मेण चरन्ति प्रवर्ग्यवच्चेत्" आश्व० श्रौ० ५।१३।१। दधिघर्म्मो नाम कर्म्मविशेषः" नारा०। स च कात्या० श्रौ० उक्तो यथा १०।३।२०। "उपवत्य दधिघर्म्मः" सू० दध्या हरति प्रेषितो दक्षिणमार्गे दध्याहरति तत्र यागार्थत्वात् साक्षाद्धर्म्मेण चतुष्पापाकरणादिना सङ्कार्यं तत्र दध्नो द्रवद्रव्यत्वात् पूर्वमिवसकृदपि प्रातःसवनिकदध्यर्थदोहानन्तरं दधिघर्म्मः दध्यर्थमपि रात्रौ दोह आतञ्चनमिति कर्त्तव्यः। तदुपक्षिप्तो चतुष्पापाकरणादयोऽप्यनेनैव क्रमेण कर्त्तव्याः प्रवर्ग्यवच्चेत्याहुः दधिघर्म"। कर्कः। तत्प्रकारप्रकारश्चापि तदुत्तरसूत्रे राह यथा "उपविश्य ब्रह्मः पुरस्तात् उपविष्टायामग्निहोत्रहवण्यां प्रहरणं यथोक्तम्" २१ सू०। तत् प्रतिप्रस्थाताहृतदधि उत्तरवेदेः पश्चादासाद्याथ ततः ब्रह्मः पश्चादुपविश्य उपविष्टायामग्निहोत्रहवण्यां स्रुक्तात्परिष्टादग्निहोत्रहवण्याम् यथोक्तं यथा प्रवर्ग्याध्यायोक्तं तथा प्रहरणं करोति अतो यावतीति मन्त्रान्तं स्वाहोसहनेनैवाग्निहोत्रहवण्यां निनयनं कर्त्तव्यम्। आनयनञ्च निनयनमेव" कर्कः विस्तरः तदुत्तरसूत्रेषु दर्शितः। तादृशकर्म्मसमुदायश्च दधिघर्म्मशब्दार्थः।

**दधिचार** पु० दधि चारयति चालयति चर-णिच्-अण् उप० स०। मन्थानदण्डे हारा०। [२दधिजातमात्रे त्रि०।

**दधिज** न० दध्नो जायते जन-ड। १नवनीते राजनि०

**दधित्थ** पु० दधीव तद्वर्णवत् द्रुमे तिष्ठति स्था-क पृषो०। कपित्थे अमरः तद्द्रवस्य दधिवर्णत्वात् तथात्वम्। "दधित्थरससंयुक्तां पिप्पलीं माक्षिकान्विताम्" सुश्रु०।

**दधित्थाख्य** पु० दधित्थमाख्याति आ+ख्या-क। वरद्रवे (लोवान) रत्नमाला।

**दधिधेनु** स्त्री दानार्थं कल्पितदधिकुम्भनिर्मिते धेनुभेदे तद्विधानं हेमा० दा० स्कन्दपु० उक्तो यथा

"दधिधेनोर्महाराज! विधानं शृणु साम्प्रतम्। अनुलिप्ते महीभागे गोमयेन नराधिप!। गोचर्म्ममात्रन्तु पुनः पुष्पप्रकरसंयुतम्। कुशैरास्तीर्य वसुधां कृष्णाजिनकृतास्तराम्। दधिकुम्भञ्च संस्थाप्य सप्तधान्यस्य चोपरि। चतुर्थांशेन वत्सन्तु सौवर्णमुखसंयुतम्। प्रशस्तपत्रश्रवणां मुक्ताफलमयेक्षणाम्। चन्दनागुरुश्रृङ्गीं च मुखं वै गन्धमाल्यकम्। जिह्वा शर्करया राजन्! घ्राणं क्षौद्रमुखकं तथा। फलसन्नया दन्ताः सितसूत्रस्य कम्बलाः। ताम्रपृष्ठा दर्भरोमा पुच्छं सूत्रमयं तथा। स्वर्णशृङ्गीं रौप्यखुरीं नवनीतमयस्तनीम्। इक्षुपादां सुसंस्थाप्य वस्त्रैराभरणभूषिताम्। आच्छाद्य वस्त्रयुग्मेन पुष्पगन्धैश्च पूजिताम्। ब्राह्मणाय कुलीनाय श्रुतवृत्ताय धीमते। समाधियमयुक्ताय तादृशाय प्रदापयेत्। पुण्यदेशोपविष्टाय कुण्डिकाकर्णमालकैः। पादुकोपानहौ छत्रं दत्त्वा मन्त्रमनुस्मरेत्। दधिक्राव्णेति मन्त्रेण दधिधेनुं प्रदापयेत्। एवं दधिमयीं धेनुं दत्त्वा राजन्विचक्षण!। एकाहारो दिनं तिष्ठेद्दधा च नृपनन्दन!। ब्रह्मलोके महीराजन्! त्रिदिवं च

द्विजोत्तम ! दीयमाना प्रपश्यन्ति तेऽपि यान्ति परां गतिम् । दश पूर्वान् दश परानात्मानञ्चैकविंशकम् । विष्णुलोकमवाप्नोति यावदाभूतसंप्लवम् । दाता च दापकाश्चैव तेऽपि यान्ति परां गतिम् । यत्र मधुवहा नद्यो यत्र पायसकर्द्दमाः । ऋषयो मुनयं सिद्धास्तत्र गच्छन्ति धेनुदाः । य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः । सोऽश्वमेधफलं प्राप्य विष्णुलोकं स गच्छति" । इतरधेनुविधिवत् सर्वमत्र कार्य्यं ।

**दधिपयस्** न० द्वि०व०। दधि च पयश्च । "जातिरप्राणिनाम्" पा० अप्राणिजातित्वात् समाहारद्वन्द्वे प्राप्ते "न दधिपय आदीनि" पा० तन्निषेधः दधिपयसी ।

**दधिपयआदि** न० समाहारद्वन्द्वनिषेधनिमित्ते शब्दद्वयगणभेदे । स च गणः पा०ग०सूत्रे उक्तो यथा "दधिपयसी सर्पिर्मधुनी मधुसर्पिषी ब्रह्मप्रजापती शिववैश्रवणौ स्कन्दविशाखौ परिव्राट्कौशिकौ प्रवर्ग्योपसदौ शुक्लकृष्णौ इध्माबर्हिषी दीक्षातपसी श्रद्धातपसी मेधातपसी अध्ययनतपसी उलूखलमुसले आद्यवसाने श्रद्धामेधे ऋक्सामे वाङ्मनसे" ।

**दधिपुष्पिका** स्त्री दधीव शुभ्रं पुष्पमस्याः कप् अत इत्वम् । श्वेतापराजितायाम् राजनि० ।

**दधिपुष्पी** स्त्री दधीव शुभ्रं पुष्पमस्याः जातित्वात् ङीष । कोलशिम्ब्यां राजनि० ।

**दधिपूप** पु० दधिपक्वः पूपः । अपूपभेदे । "शालिपिष्टं युतं दध्ना मर्दयित्वा घृते पचेत् । वेष्टयेत पक्वखण्डेन ख्यातं दधिपूपकम् । दधिपूपो गुरुर्वृष्यो वृंहणोऽनिलपित्तहा । रुच्योऽग्निजननश्चैव विशेषाद् रुचिकारकः" पाकशास्त्रम् ।

**दधिफल** पु० दधीव द्रवः फलेऽस्य । कपित्थे अमरः तद्द्रवस्य दधितुल्याम्लरसत्वात् तथात्वम् । [रत्नमाला ।

**दधिमण्ड** पु० ६त० । दध्नः मस्तुनि (मात) ख्याते पदार्थे ।

**दधिमण्डोद(क)** पु० दधिमण्ड इवोदकमत्र उदकस्य वा उदादेशः । दधिमण्डतुल्यजले समुद्रभेदे । "दधिमण्डोदप्रवाल विश्लेषो वारिशायनः" हेमा० व्र० मध्ये । "उत्तरेषु च कौरव्य । द्वीपेषु श्रूयते कथा । एवं तत्र महाराज ! शृणुतश्च निबोध मे । घृततोयः समुद्रोऽत्र दधिमण्डोदकः परः । सुरोदः सागरश्चैव तथान्यो क्षीर-सागरः" भा० भी० १२ अ० ।

**दधिमुख** पु० १रामसेनापतिवानरभेदे "श्रीमान् दधिमुखो नाम हरिवृद्धोऽतिवीर्य्यवान्" भा०व०२८२अ० । २नागभेदे "सुरामुखो दधिमुखस्तथा विमलपिण्डकः" भा०आ०३५ अ० सर्पनामोक्तौ दधिमुखादयोऽप्यत्र ।

**दधिमत्** त्रि० दधि अस्त्यत्र मतुप् वेदे मस्य वः । दधियुक्ते "अपूपवान् दधिवांश्चरुरेह सीदतु" अथ० १८।४।१७। लोके तु न मस्य वः दधिमत् इत्येव स्त्रियां ङीप् ।

**दधिवामन** न० १शालग्रामशिलायां वामनमूर्त्तिभेदे ब्रह्मवै० प्रकृतिख० तल्लक्षणमुक्तं यथा । "अतिक्षुद्रं श्यामलञ्च । नवीननीरदोपमम् । दधिवामनकं ज्ञेयं गृहिणाञ्च सुखप्रदम् । दध्योदने होतव्यः वामनः । २दध्योदनेन हवनीये वामनभेदे पु० । "दध्योदनेन गुडेन हुत्वा मुच्येत दुर्गतः । ध्यात्वा त्रैविक्रमं रूपं जपेन्मन्त्रमनन्यधीः" तन्त्रसारे दधिवामनप्रयोगः ।

**दधिवारि** न०६त०। दधिमस्तुपदार्थे (दधिर मात) हेमच० ।

**दधिवाहन** पु० अङ्गनामकनृपपुत्रे "अङ्गपुत्रो महानासीत् राजेन्द्रो दधिवाहनः । दधिवाहनपुत्रस्तु राजा दिविरथोऽभवत्" हरिवं० ३१ अ० । दधिवाहनपुत्रस्तु पुत्रो दिविरथस्य तु" भा० शा० ४६ अ० ।

**दधिशोण** पु० वानरे त्रिका० ।

**दधिषाय्य** पु०दधि सनोति सो–आय्य सत्वम् ।१घृते उज्ज्वल० । "दधिषाय्य" उणा० सू०वि० कौ० इत्तौ "दधातेराय्यः ह्रस्वमित्त्वं सुक् च इत्युक्त्वा "निलायस्यो दधिषाय्य इत्युदाजहार" ।

**दधिसक्तु** पु० ब० व० । दध्युपसिक्ताः सक्तवः "अन्नेन व्यञ्जनम्" पा०समासः । दध्युपसिक्तेषु सक्तुषु । "कन्दुपक्वानि तैलेन पायसं दधिसक्तव " ति० त०स्मृ० पु० ।

**दधिसार** पु० ६त० । नवनीते हेमच० ।

**दधिस्कन्द** पु० तीर्थभेदे ।

**दधिस्नेह** पु० ६त० । दधिसारे त्रिका० ।

**दधिस्य(ध्यस्य)** अतिगार्द्ध्येन दधीच्छति क्यच् असुक् वा । अतिगार्द्ध्येन दधीच्छायायां प० अक० सेट् । दधिस्यति दध्यस्यति ।

**दधिस्वेद** पु० दध्नः स्वेद इव । तक्रे (घोल) जटाधरः ।

**दधी(ध)चि** पु० अथर्वमुनेरौरसे कर्द्दमप्रजापतिकन्यायां शान्तिनाम्न्यां जाते मुनिभेदे । इन्द्रयाचितेन तेन च प्राणांस्त्यक्त्वा स्वदेहास्थीनि देवानि इन्द्राय च तैर्वज्रं निर्माय इन्द्रादयो निहताः वृत्राद्याः" ।

"अतोऽस्थिभिर्दधीचस्य न वज्रं निर्म्मितञ्च तदा-

कृत्वा ऋषिश्रेष्ठो याच्यतां सुरसत्तमाः"। दधीचास्थीनि देहीति तैर्वधिष्यामहे रिपून्। स च तैर्याचितोऽस्थीनि यत्नाद्दधिवरस्तदा। प्राणत्यागं कुरुश्रेष्ठ! चकारैवा-विचारयन्। सलोकानक्षयान् प्राप्तो देवप्रियकरस्तदा। तस्यास्थिभिरथो शक्रः संप्रहृष्टमनास्तदा। कारयामास दिव्यानि नानाप्रहरणानि च। वज्राणि चक्राणि गदा गुरूंश्च दण्डांश्च पुष्कलान्" भा० शल्य० ५२ अ०। "गते व्रतधृतौ वत्स! बर्हिमन्त्रेण चोदितः। यथोचितं सुदुश्छिन्नः प्रादात् विश्वसृजां ततः" इत्युपक्रमे "अथ-र्वणेऽददाच्छान्तिं यया यज्ञो वितन्यते" भाग० ३।२४।२४ अ०। "दध्यङ्ङाथर्वणस्त्वष्ट्रे वर्माभेद्यं मदात्मकम्" भाग० ६।८।५१। तस्याथर्वणकर्द्दमदुहितृशान्तिजातत्वा-दाथर्वणत्वविशेषणम्। "ददौ चास्थीनि देवेभ्यो दधीचिः सुमनास्तदा" अग्निपु० दध्यनृच्शब्दे व्युत्पत्तिर्यत्रा।

दधीचास्थि न० ६त०। तज्जातत्वात् १वज्रे २तन्नामनामके हीरके च त्रिका०।

दधृष् त्रि० धृष-क्विन् नि०। १धृष्टे क्विन्नन्तत्वात् झलि पदान्ते च कुत्वम्। २धर्षके च। "वाजेषु दधृषं कवे" ऋ०२।४२।६। "दधृषम् मन्युमभिभावकम्" भा०।

दधृष्वणि त्रि० दधृषमिवाचरति दधृष्+क्विप् ततो वा० वनि। धर्षके। "साषहिमधृष्टं चिद् दधृष्वणिम्" ऋ०८।६१।२। [लाय परमेष्ठिने"यमतर्पणमन्त्रः।

दध्न पु० दध-बा० न। यमभेदे। "औदुम्बराय दध्नाय नी-

दध्यनृच् पु० दधिं धारकमञ्चति अनृच-क्विप्। अथर्वर्षिपुत्रे दधीचौ मुनिभेदे "दध्यङ्ङाथर्वणस्त्वष्ट्रे" भाग०६।६।८।५१ "स वा अधिगतो दध्यङ्ङश्विभ्यां ब्रह्म निष्कलम्" भाग०६।८।५५। "याममथर्वा मनुष्पिता दध्यङ्धियमत्नत" इत्यृचमधिकृत्य निरुक्ते उ १२।३३ अस्या निरुक्तिरुक्ता "दध्यङ् प्रत्यक्तो ध्यानमिति वा प्रत्यक्तमस्मिन् ध्यानमिति वा"। "दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र य-दीमुवाच" ऋ० १।११६।१२। आथर्वणः अथर्वणः पुत्रो दध्यङ् एतत्संज्ञ ऋषिरश्वस्य शीर्ष्णा युष्मत्सामर्थ्येन प्रतिष्ठितेन शिरसा वाँ युवाभ्यामीमिमां मधुविद्यां यद् यदा खलु प्रोवाच प्रोक्तवान्। तदानीमश्वस्य शिरसः सन्धानलक्षणं पुनर्मानुषस्य शिरसः प्रतिसन्धानलक्षणं च यत्त्वदीयं कर्म तदाविष्कृणोमीत्यर्थः। अत्रेयमा-ख्यायिका "इन्द्रो दधीचे प्रवर्ग्यविद्यां मधुविद्यां चोपदिश्य यदीमामन्यस्मै वक्ष्यसि शिरस्ते छेत्स्यामी-त्युवाच। ततोऽश्विनावश्वस्य शिरश्छित्त्वा दधीचः शिरः-प्रच्छिद्यान्यत्र निधाय तत्राश्व्यं शिरः प्रत्यधत्तां तेन च दध्यङ् ऋचः सामानि यजूंषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादकं ब्राह्मणं चाश्विनावध्यापयामास। तदिन्द्रो ज्ञात्वा वज्रेण तच्छिरोऽच्छिनत्। अथाश्विनौ तस्य स्वकीयं मानुषं शिरः प्रत्यधत्तामिति। शाट्यायन-वाजसनेययोः प्रपञ्चेनोक्तम्। तस्य टाद्यचाद्यो दधीचः दधीचा इत्यादि। ततः स्वार्थे अण् इञ् वा पृषो० हस्वाभावे। दधीच दधीचि इति रूपमित्यवधेयम्।

दध्यन्न न० दध्युपसिक्तमन्नम् "अन्नेन व्यञ्जनम्" पा० समास०। दध्युपसिक्ते अन्ने "दध्यन्नं पायसं चैव गुडपिष्टं समो-दकम्" याज्ञ० दध्योदनोऽप्यत्र पु०। "दध्योदनं हविष्यूर्णम्" याज्ञ०ग्रहबल्युक्तौ।

दध्याकर पु० ६त०। दधिसमुद्रे शब्दार्थकल्पतरुः।

दध्यानी स्त्री दधि-दधिरसमानयति आ+नी+क गौरा० ङीष्। (सुदर्शनगुलञ्च) सुदर्शनायाम् रत्नमाला।

दध्युत्तर न० ६त०। दधिस्नेहे मस्तुनि०। "पयसः सर्पिष-श्चैव दध्नोदध्युत्तरस्य च" हरिवं० ७८२ अ०।

दध्युत्तरग न० दध्न उत्तरं गच्छति गम-ड। दधिस्नेहे रत्नमाला। [जटाधरः।

दध्युद(क) पु० दधि उदकमिवास्य वा उदादेशः। दधिसमुद्रे

दनायुस् पु० दक्षकन्याभेदे सा च कश्यपपत्नीभेदः दनुशब्दे दृश्यम्। "दनुश्च दनायुश्च मातेव च पितेव च परिजज्ञे हत्सवाह्नानव इत्याहुः" शत० ब्रा०१।६।३।८ "दनायुषः पुनः पुत्राश्चत्वारोऽसुरपुङ्गवाः। विक्षरो बलवीरौ च वृत्रश्चैव महासुरः" भा० आ० ६५अ०।

दनु स्त्री दक्षकन्याभेदे सा च कश्यपर्षिपत्नी दानवमाता। "प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश। अदिति-र्दितिर्दनुः काला दनायुः सिंहिका तथा। क्रोधा प्रधा च विश्वा च विनता कपिला मुनिः। कद्रूश्च मनुज-व्याघ्र! दक्षकन्यैव भारत। एतासां वीर्यसम्पन्नं पुत्रपौत्रमनन्तकम्। "चत्वारिंशद्दनोः पुत्राः ख्याताः सर्वत्र भारत। तेषां प्रथमजो राजा विप्रचित्ति-र्महायशाः। शम्बरो नमुचिश्चैव पुलोमा चेति विश्रुतः। असिलोमा च केशी च दुर्जयश्चैव दानवः। अयः-शिरा अश्वशिरा अश्वशङ्कुश्च वीर्यवान्। तथा गगनमूर्द्धा च वेगवान् केतुमांश्च यः। स्वर्भानुरश्वो-ऽश्वपतिर्वृषपर्वाजकस्तथा। अश्वग्रीवश्च सूक्ष्मश्च तुहु-

"तवां वदारोहति दन्तवाससा" कुमा० । [राजनि० ।

**दन्तबीज(क)** पु० दन्त इव बीजमस्य वा कप् । दाडिमीवृक्षे

**दन्तवेष्ट** पु० सुश्रुतोक्ते दन्तरोगभेदे दन्तरोगशब्दे दृश्यम् ।

**दन्तवैदर्भ** पु० सुश्रुतोक्ते दन्तरोगभेदे दन्तरोगशब्दे दृश्यम् ।

**दन्तशङ्कु** पु० "वडिशो दन्तशङ्कुश्चानताग्रो तीक्ष्णकण्टकप्रथम-यवपत्रमुखे" सुश्रुतोक्ते अस्त्रभेदे ।

**दन्तशठ** पु० दन्तान् शठति क्लेदयति शठ–अच् । १जम्बीरे २कपित्थे ३कर्मरङ्गे, ४नागरङ्गे च । ५चाङ्गेर्यां ६चुक्राम्लिकायां स्त्री० मेदिनि० ७अम्ले हेमच० ८चुक्रा-म्लिकायाम् स्त्री राजनि० ।

**दन्तशर्करा** स्त्री दन्तस्य शर्करेव । दन्तरोगभेदे दन्तरोगशब्दे दृश्यम् । [ख्याते चूर्णभेदे त्रिका० ।

**दन्तशाण** पु० दन्तस्य शाण इव चिक्कणताहेतुत्वात् (मिशि)

**दन्तशूल** न० दन्तस्य शूलमिव । दन्तवेदनायाम् । "शीर्ष-रोगेऽक्षिरोगे च दन्तशूले गलग्रहे" भा० शा० २०५ अ० ।

**दन्तशोफ** पु० दन्तस्य शोफ इव । दन्तार्बुदे (दाँतेर आव) राजनि० । [भागे मांसपिण्डे शब्दच० ।

**दन्तसिरा** स्त्री दन्तस्य सिरा यत्र । (मेड़े) ख्याते दन्ताधो-

**दन्तहर्ष** पु० सुश्रुतोक्ते दन्तरोगभेदे दन्तरोगशब्दे दृश्यम् ।

**दन्तहर्षक** पु० दन्तान् हर्षयति हृष–णिच्–ण्वुल् । जम्बीरे जटाधरः । [ दन्ताग्रीय तत्कृतादौ त्रि० ।

**दन्ताग्र** न० ६त० । दन्तस्याग्रे ततः गहा० भवादौ छ ।

**दन्ताघात** पु० दन्तानाहन्ति आ+हन–अण् उप० स० । १निम्बूके । भावे घञ् । २दन्तैराहनने राजनि० । "दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरम्" गणेशध्यानम् । रतौ तत्स्थानानि यथा "स्तनयो-र्गण्डयोश्चैव ओष्ठे चैव तथाधरे । दन्ताघातः प्रकर्त्तव्यः कामिनीनां सुखावहः" कामशास्त्रम् ।

**दन्ताद** पु० "केशरोमनखादाश्च दन्तादाः किक्किशा-स्तथा । कुष्ठजाश्च परीसर्पोसंयाः शोणितसम्भवाः" सुश्रुतोक्ते दन्तखादकक्रिमिरोगभेदे । "दन्तादानां समु-द्दिष्टं विधानं मुखरोगिणाम्" सुश्रु० ।

**दन्तादन्ति** त्रि० दन्तैश्च दन्तैश्च प्रहृत्य प्रवृत्तं युद्धम् इच् समा० पूर्वाण्योदीर्घः । परस्परदन्तप्रहारेण प्रवृत्ते युद्धे "कचाकचि युद्धमासीद्दन्तादन्ति नखानखि" भा० कर्ण० ४९ अ० । [ जातित्वात् ङीष् ।

**दन्तायुध** पुं स्त्री० दन्ता युधमिवास्य । शूकरे त्रिका० स्त्रियां

**दन्तार्बुद** पु० दन्तस्यार्बुदमिव । दन्तरोगभेदे राजनि० ।

**दन्तालिका** स्त्री दन्तान् अलति भूषयति, तेभ्यो वा पर्या-प्नोति अल+ण्वुल् । वल्गायाम् । (लागाम) त्रिका० । "दन्तालिकाधरणनिश्चलपाणियुग्मम्" । (अश्वपादम्) माघः । अच् गौ० ङीष् दन्ताली तत्रार्थे वैजय० । [अमर० ।

**दन्तावल** पु० दन्त+अस्त्यर्थे वलच् पूर्वपददीर्घः । हस्तिनि

**दन्तिका** स्त्री दन–तन्+गौरा० ङीष् स्वार्थे क ह्रस्वः । दन्तीवृक्षे अमरः ।

**दन्तिजा** स्त्री दन्तिका+जनी० । दन्त्योषधौ शब्दर० ।

**दन्तिन्** पु० दन्त+अस्त्यर्थे इनि । हस्तिनि अमरः "अनि-वार्यस्य दन्तिनः" रघुः । "पिष्टाद्रिकूटाहसरवा च दन्तिनः" माघः । [ दन्तीवृक्षे राजनि० ।

**दन्तिनी** स्त्री दन्तस्तदाकारोऽस्त्यस्याः मूले इनि ङीप् ।

**दन्तिमद** ६त० । हस्तिमदे गन्धद्रव्यभेदे शब्दार्थचि० ।

**दन्तिमूलिका** स्त्री दन्ति गजदन्तयुक्तमिव मूलमस्याः कप् कापि अत इत्वम् । दन्तीवृक्षे राजनि० ।

**दन्ती** स्त्री दम–तन् गौरा० ङीष् । १उदुम्बरपर्ण्याम्, प्रत्यक्-पर्ण्यामोषधौ अमरः । दन्तः गजदन्त इव मूलमस्त्यस्याः अच् गौरा० ङीष् ।२स्वनामख्याते वृक्षे भावप्र० "लघुदीर्घ-प्रभेदेन प्रोक्तं दन्तीद्वयं बुधैः । दन्तीद्वयं सरं पाके रसे च कटु दीपनम् । गुदाङ्कुराश्मशूलास्रकण्डुकुष्ठविदाहनुत् । तीक्ष्णोष्णं हन्ति पित्तास्रकफशोथोदरक्रमीन्" भावप्र० तद्गुणा उक्ताः ।

**दन्तीबीज** न० दन्त्या इव बीजमस्य । जयपाले राजनि० ।

**दन्तुर** त्रि० उन्नताः दन्ताः सन्त्यस्य दन्त+उरच् । १उन्नत-दन्तयुक्ते, उन्नतानते विषमे स्थाने च शब्दार्थचि० । "शूकरे निहते चैव दन्तुरो जायते नरः" शाता० तथा-भवनसाधनं कर्मविशेष उक्तः । "कदाचिद्दन्तुरो मूर्खः कदाचिल्लोमशः सुखी । कदाचित् तन्दिलो दुःखी कदा-चिन्नमुला सतीति" शातकम् । "अमलमणिशलाका दन्तुराभिः किरीटकोटिभिः" काद० । "करवालकरालदन्तु-रान्तरे" नैष० ।

**दन्तुरक** पु० देशभेदे स च देशः वृ० स० १४ अ० कूर्मवि-भागे अथ पूर्वस्यामित्युपक्रमे "मिथिलसमतटोड्राश्व-वदनदन्तुरकाः" । पूर्वस्यामुक्तः । [ राजनि० ।

**दन्तुरच्छद** पु० दन्तुर उन्नताग्रतः छदो यस्य । बीजपूरे

**दन्तोलूखलिक** पु० दन्ता एव उलूखलः कण्डनसाधनं विद्यतेऽस्य ठन् । तापसभेदे स हि दन्तैरेव व्रीह्यादीन् कण्डयित्वा खादति । "दन्तोलूखलिकः शालपक्वाशी

दमनो विशाखो टिमकल्कदेशः । दुर्गान्तको विश्वहरिः खरश्च सर्वः यमी चेति तिथीषु पूज्याः” इत्युक्ताः आयमोक्तदोषावतो दमनरोपणविधिः रामार्चनचन्द्रिकायाम् । तद्विधिस्तत्रैव द्रष्टव्यः । ४उपशान्ते ५वीरे शब्दर० । ६कुन्दवृक्षे राजनि० । ७ऋषिभेदे दमयन्तीशब्दे दृश्यम् । “यद्वरात् भीमस्य नृपस्य दमयन्तीकन्यावरलाभः । “दमनादन्तमाराम् ब्रह्मर्षिं महातेजसम् । तमभ्यागमत्द्विजपुत्रो नलनैषध० । दमयति–दम–णिच्–ल्यु । दमनकर्त्तरि त्रि० दुष्टदमनः सर्वदमन इत्यादि । ८विदर्भाधिपभीमनृपसुतभेदे च दमयन्तीशब्दे दृश्यम् । स्वाधिकारात् प्रमाद्यन्तीः प्रजाः दमयितुं शीलमस्य युच् । १०परमेश्वरे । “वरीयांर्द्दमनो क्षमः” विष्णुस० । “वैवस्वतादिरूपेण दमयितृत्वात् वा” भाष्योक्तेस्तथात्वम् । भावे ल्युट् । ११दमने न० “व्यस्य दुष्टदमनक्षमं करिम्” माघः ।

**दमनक** पु० स्वार्थे क । १दमनवृक्षे “द्विगुणमगणमिह वितनुहि । दमनकमिति गदति सुधि हि” इत्युक्ते २सप्ताक्षरपादके छन्दोभेदे ३एकादशाक्षरपादके छन्दोभेदे च । “द्विजवर ! युगलममलं तदनु कलय नलयुगलकम् । फणिपतिपरिगदितं दमनकमिदमतिललितम्” वृ०र०टी० ।

**दमनी** स्त्री दम्यतेऽग्निरनया–करणे ल्युट् ङीप् । अग्निदमनीवृक्षे राजनि० ।

**दमन्य** दमन इवाचरति दमन–क्यच् वेदे अन्त्यलोपः दमनकर्त्तृतुल्याचारे पर० अक० सेट् । दमन्यति अदमन्यीत् । “धृष्णुं विमोषीणां दमन्युत्” ऋ० १०।६९ ।

**दमयन्ती** स्त्री विदर्भाधिपभीमनृपस्य कन्याभेदे तत्कथा भा० व० ५३अ० यथा

“तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः । शूरः सर्वगुणैर्युक्तः प्रजाकामः स चाप्रजः । स प्रजार्थे परं यत्नमकरोत् सुसमाहितः । तमभ्यागमद्ब्रह्मर्षिर्दमनो नाम भारत ! । तं स भीमः प्रजाकामस्तोषयामास धर्मवित् । महिष्या सह राजेन्द्र ! सत्कारेण सुवर्चसम् । तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ । कन्यारत्नं कुमारांश्च त्रीनुदारान् महायशाः । दमयन्तीं दमं दान्तं दमनं च सुवर्चसम् । उपपन्नान् गुणैः सर्वैर्भीमान् भीमपराक्रमान् । दमयन्ती तु रूपेण तेजसा यशसा श्रिया । सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा” । भा० व० ५३ अ० । सा च पुण्यश्लोकनलराजपत्नीत्वम् यथोक्तं तत्रैव ५७अ० “सा समीक्ष्य तु तान् देवान् पुण्यश्लोकश्च भारत ! । नैषधं वरयामास भैमी धर्मेण पाण्डव ! । विलज्जमाना वस्त्रान्ते जग्राहायतलोचना । स्कन्धदेशेऽसृजत्तस्य स्रजं परमशोभनाम् । वरयामास चैवैनं पतित्वे वरवर्णिनी” “पार्थिवाश्चानुभूयास्य विवाहं विस्मयान्विताः । दमयन्त्याश्च मुदिताः प्रतिजग्मुर्यथागतम् । गतेषु पार्थिवेन्द्रेषु भीमः प्रीतो महामनाः । विवाहं कारयामास दमयन्त्या नलस्य च । उष्य तत्र यथाकामं नैषधो द्विपदां वरः । भीमेन समनुज्ञातो जगाम नगरं स्वकम्” । “त्वयि वीर ! विराजते परं दमयन्तीकिलकिञ्चितं किल” नैष० । [ “दक्षो दमयिता दमः” विष्णुस० ।

**दमयितृ** त्रि० दम–णिच्–तृच् । १शासनकर्त्तरि २विष्णौ पु० ।

**दमाय** दमं दमनमिच्छति क्यच्–आत्मनोदमनेच्छायां पर० अक० सेट् । दमायति अदमायीत् “त्वं वीर ! उग्रसृण्वं दमायन्नभ्य मतिने शोशुमानः” ऋ० ६।४७। १६ । “दमायन्तु ब्रह्मचारिणः” तै० उ० १।४।२ ।

**दमित** त्रि० दम्यते स्म दम–णिच्–क्त वा दान्तत्वादिट् इट् । कृतदमने इत्यादौ ।

**दमिन्** त्रि० दम–शमा० घिनुण् । दमशीले स्त्रियां ङीप् । २सागरसिन्धुनदीसङ्गमदक्षिणस्थे तीर्थभेदे न० ३तत्प्रवर्त्तकर्षिभेदे पु० “सागरस्य च सिन्धोश्च सङ्गमं प्राप्य भारत !” इत्युपक्रमे “प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ ! । तीर्थं कुरुवरश्रेष्ठ ! त्रिषु लोकेषु विश्रुतम् । दमीति नाम्ना विख्यातं सर्वपापप्रणाशनम् । तत्र ब्रह्मादयो देवा उपासन्ते महेश्वरम् । तत्र स्नात्वाऽर्चयित्वा च रुद्रं देवगणैर्वृतम् । जन्मप्रभृति यत्पापं तत्स्नातस्य प्रणश्यति । दमी चात्र नरश्रेष्ठ ! सर्वदेवैरभिष्टुतः । तत्र स्नात्वा नरव्याघ्र ! हयमेधमवाप्नुयात्” भा०व०८२अ० ।

**दमु(मू)नस्** पु० दम–उनसि पृषो० वा ऊत्वः । १अग्नौ, अमरः २शुक्राचार्ये उणा० । निरुक्ते ४।५ । “जुष्टो दमूना अतिथिर्दुरोणः” इत्यृचमभिलक्ष्य तस्य अन्या निरुक्तिरुक्ता यथा “दमूना दममना वा दानमना वापि वा दम इति गृहनाम तन्मनाः स्यान्मना मनोतेः” । ३दमयितरि त्रि० । ‘दमूना गृहपतिर्दम आ’ ऋ० १।६०।४। “दमयति राक्षसादीनिति दमूनाः” भा० ।

**दमे** अव्य० दम–बा० के । स्वगृहे निघण्टुः ।

**दम्पती** पु० द्वि० व० । जाया च पतिश्च द्वन्द्वे जायाशब्दस्य पक्षे दमादेशः । मिलितयोः जायापत्योः अमरः । “तौ दम्पती वशिष्ठस्य गुरोर्जग्मतुराश्रमम्” रघुः ।

"भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती" मनुः। "दम्पत्योर्मध्यगं धनम्" दायभा०। तयोरिदं पत्यन्तत्वात् यत्। दाम्पत्य तत्सम्बन्धिनि त्रि०।

**दम्भ** पु० दन्भ–घञ्। १कपटे २शाठ्ये ३अधार्मिकेणात्मनो धार्मिकत्वस्य ख्यापने ४लोभवञ्चनाभ्यां विहितकर्मानुष्ठाने ५पूजाप्राप्त्यर्थं स्वधार्मिकत्वख्यापने। "दर्पं दम्भं च मानं च क्रोधं तैक्ष्ण्यं च वर्जयेत्" मनुः। "सत्कारमान-पूजार्थं तपो दम्भेन चैव यत्" गीता। न्यायसूत्रवृत्तौ तु दम्भस्य रागविशेषस्याभेदरूपत्वमुक्तं यथा "तद्वैराश्यं रागद्वेषमोहान्तर्भावात्" गौ०सू०। "तत्र रागपक्षः कामो मत्सरः स्पृहा तृष्णा लोभो माया दम्भः" इत्युक्ता "कामो स्त्रिरंसा रतिश्च विजातीयः संयोगः नारी-गताभिलाष इति तु न युक्तं स्त्रियः कामेऽव्याप्तेः मत्सरः स्वप्रयोजनप्रतिसन्धानं विना पराभिमतनिवारणेच्छा, यथा राजकीयादुदपानाज्जलोदकं पेयम् इत्यादि। एवं परगुण-निवारणेच्छाऽपि। स्पृहा धर्माविरोधेन प्राप्तीच्छा तृष्णा इदं मे न क्षीयतामितीच्छा उचितव्ययाकरणेनापि धन-रक्षणेच्छारूपं कार्पण्यमपि तृष्णाभेद एव। धर्मविरोधेन परद्रव्येच्छा लोभः, परवञ्चनेच्छा माया, कपटेन धार्मि-कत्वादिना स्वोत्कर्षख्यापनेच्छा दम्भः" गौ० वृ० ४।३ कामादिकदम्भान्तानामिच्छाविशेषरूपत्वात् रागरूपे दोषे अन्तर्भाव उक्तः अधिकं दोषशब्दे वक्ष्यते।

**दम्भक** पु० दन्भ–ण्वुल्। प्रतारके। "धर्मध्वजी सदालुब्ध-श्छाद्मिको लोकदम्भकः" मनुः।

**दम्भन** न० दन्भ–भावे ल्युट्। १दम्भे २मोहने च। "प्रतेन पापं प्रच्छाद्य कुर्वन् स्त्रीशूद्रदम्भनम्" मनुः।

**दम्भिन्** त्रि० दन्भ–णिनि। दम्भकर्त्तरि। "दम्भिहैतुक-पाषण्डवकवृत्तींश्च वर्जयेत्" याज्ञ०।

**दम्भोद्भव** पु० १सार्वभौमे नृपभेदे। "राजा दम्भोद्भवो नाम सार्वभौमः पुराऽभवत्" भा० उ० ९१ अ०। इत्युपक्रमे तस्य नरनारायणाभ्यां नरौ निहतत्वकथा तत्रै-वाध्याये दृश्या। "दण्डको नृपतिः कामात्, क्रोधाच्च जन-मेजयः। लोभादैलस्तु राजर्षिर्वातापिर्दर्पतोऽसुरः। पौलस्त्यो रावणो मानात् मदाद्दम्भोद्भवो नृपः। प्रयाता निधनं ह्येते शत्रुषड्वर्गमाश्रिताः" काम०। दम्भ उद्भवो यस्य। २दम्भसहिते कर्मादौ त्रि० [ ३शीरके अमरः।

**दम्भोलि** पु० दम्भोति स्वेदयति दन्भ–ओलि। १वज्रेऽस्त्रे।

**दम्य** त्रि० दम–पवर्गान्तत्वात् यत्। १प्राप्तभारवहबाल्यावस्थे वत्सतरे २अपक्वबुद्धौ च अमरः। ३दमनीये ४दमनार्हे त्रि०। "अप्राप्तदम्यावसरः" प्रा० त०। "धुर्येण दम्यः सदृशं बिभर्त्ति" रघुः।

**दय** गतौ वधे, दाने पालने च भ्वा० आत्म० सक० सेट्। दयते अदयिष्ट अदयिढ्वम् अदयिध्वम् अदयिद्ध्वम्। दयाम् बभूव आस चक्रे। "न वा पलायाञ्चक्रे विदयाञ्चक्रे न राघवः" भट्टिः दया दयितः। "प्रजान्ति तेषां दयसे न कस्मात्"। "स चापि रुधिरैर्मर्त्त्यः लोकानप्यदयिष्ट न" भट्टिः

**दया** स्त्री दय–भिदा० भावे अङ्। १दुःखितेषु भूतेष्वनुक-म्पायाम् २परदुःखाऽसहने करुणाशब्दे दृश्यम्। ३पर-दुःखप्रहरणेच्छायाम्। "यत्नादपि परक्लेशं हर्त्तुं या हृदि जायते। इच्छा भूमिसुरश्रेष्ठ! सा दया परिकीर्त्तितेति'। आत्मवत् सर्वभूतेषु यो हिताय शुभाय च। वर्त्तते सततं हृष्टः क्रिया ह्येषा दया स्मृता। प्राणा यथात्मनोऽभीष्टा भूतानाम-पि ते तथा। आत्मौपम्येन सर्वत्र दयां कुर्वन्ति साधवः"। इयं मोहपत्नी यथा। "मोहपत्नी दया साध्वी पूजिता च जगत्प्रिया। सर्वलोकाश्च सर्वत्र निष्फलाश्च यया विना" देवीभागवते ६स्क० १अ०। यत्र मोहोक्ति तत्र दयायाः सत्त्वाहृया मोहपत्नीति "अहिंसा परमो धर्मो विप्राणां नात्र संशय'। दया सर्वत्र कर्त्तव्या ब्राह्मणेन विजानता। यज्ञादन्यत्र विप्रेन्द्र! न हिंसा या-ज्ञिकी मतेति" देवीभागवतम्। यज्ञादन्यत्र दया कर्त्तव्या यज्ञे तु हिंसैव कर्त्तव्या न सा याज्ञिकी हिंसा हिंसा भवति। "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः" इति श्रुतेः। "या वेदविहिता हिंसा नियतास्मिंश्चराचरे। अहिंसा-मेव तां विद्याद् वेदाद्धर्मो हि निर्बभाविति" मनु-स्मृतेश्च। "पशूनां वाच्यविधानेन छेदयेन्न कदाचनेति" कुलार्णवोक्तेश्च। ४दक्षकन्याजाते धर्मस्य पत्नीभेदे तदपत्यम् अभयम् धर्मशब्दे दृश्यम्। "भर्तुर्नतोऽस्य दयार्द्रभावम्" रघुः। "तव धर्मः सदयोदयोज्ज्वलः" नैष०। सा च शान्तिरसस्य व्यभिचारिभावः यथाह सा० द०। शान्तरसोपक्रमे "रोमाञ्चाद्याः स्तनुभावास्तथा स्युर्व्यभिचारिणः निर्वेदहर्षस्मरणमतिभूतदयादयः"।

**दयाकूट** पु० दयायाः कूट इव। बुद्धे हेम०।

**दयालु** त्रि० दय–आलुच्। कृपायुक्ते। "दयालुरपि स क्षमाः" रघुवृद्धः। "यशःशरीरे भव मे दयालुः" "निदीघमास्य सुतरां दयालुः" रघुः।

"अक्षयाणां तथा चौदुमाषिकं माहिषञ्च यत्। अना-नाचैव माक्षीव करेणूनां तथैव च" इत्युक्तदशविध-क्षीरदूषे क्षीरदशके "पुनः पचेत् दशक्षीरं पिता-मधुकचन्दनौ" सुश्रुतः।

**दशग्रामपति** पु० दशानां ग्रामाणां पतिः उत्तरपदद्विगुः। दशग्रामाध्यक्षे। तन्नियोगादि मनुनोक्तं यथा

"ग्रामस्याधिपतिं कुर्य्यात् दशग्रामपतिं तथा। विंशतीशं शतेशञ्च सहस्रपतिमेव च। ग्रामे दोषान् समुत्पन्नान् ग्रामिकः शनकैः स्वयम्। शंसेद्ग्रामदशेशाय दशेशो विंशतीशिनम्। विंशतीशस्तु तत्सर्वं शतेशाय निवेदयेत्। शंसेद्ग्रामशतेशस्तु सहस्रपतये स्वयम्। यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः। अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात्। दशी कुलन्तु भुञ्जीत विंशी पञ्चकुलानि च। ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम्। तेषां ग्राम्याणि कार्य्याणि पृथक् कार्य्याणि चैव हि। राज्ञोऽन्यः सचिवः स्निग्धस्तानि पश्येदतन्द्रित." ।

**दशग्रामिक** त्रि० दश ग्रामाः अधिकृततत्वेन सन्त्यस्य ठन्। तस्याद्गूरदेशादि कस्य।०चतुरर्थ्यां ठञ् वा। १दशग्रामाधिपे २तस्यादूरदेशादौ। स्त्रियां ङीप् चतुरर्थ्यान् काश्या० ठञ् ञिठो वा। दाशग्रामिक तस्यादूरदेशादौ त्रि० ठञि स्त्रियां ङीप् ञिठे टाप् इति भेदः।

**दशग्रामिन्** पु० दश ग्रामा अधिकृततत्वेन सन्त्यस्य इनि। दशग्रामाधिपतौ। "सर्वोऽस्मि दद्यात् ग्रामस्तु पदं वा यत्र गच्छति। पञ्चग्रामी बहिः कोशात् दशग्राम्यथ वा पुनः" याज्ञ०।

**दशग्रीव** पु० दश ग्रीवा अस्य। १रावणे।

"पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ। कुम्भ-कर्णदशग्रीवौ बलेनाप्रतिमौ भुवि"। "दशग्रीवस्तु सर्वेषां श्रेष्ठो राक्षसपुङ्गवः। महोत्साहो महावीर्य्यो महा सत्त्वपराक्रमः" भा०व० २७४ अ०। २असुरविशेषे 'दश-ग्रीवश्च वाली च मेघवासा दशावरः। टिट्टिभो विट-भूतश्च संह्रादश्चेन्द्रतापनः" भा० स० ६ अ०। ३दमघोषस्य पुत्रभेदे। "शिशुपालो दशग्रीवो रैभ्योऽथोपदिशो बली। दमघोषसुताः पञ्च वीराः सर्वास्त्रकोविदाः" हरिवं०।१७ अ०। ४एकादशमन्वन्तरीयेन्द्रशत्रुभेदे तदुपक्रमे गरु० पु० ८७ अ० "एकैकस्मिं स्त्रयोऽप्येवं दशग्रीवो दिवस्पतिः। दशग्रीवो रिपुस्तस्य सौरूपो घातयिष्यति"।

**दशज्योति(स्)** पु० सुभ्राजः पुत्रभेदे। "सुभ्राजस्तु त्रयः पुत्राः प्रजावन्तो बहुश्रुताः। दशज्योतिः शतज्योतिः सहस्र-ज्योतिरेव च। दशपुत्रसहस्राणि दशज्योतेर्महात्मनः" भा० आ० १ अ०।

**दशत्** स्त्री दश परिमाणमस्य अति। दशानां वर्गे-दशके दश-सङ्ख्यायाम्। "स वै दक्षिणा नयन्। आग्नीध्रा दशतो नयेद्यथा एकां दाक्षन्त आहवनीयात् अभ्यां दशत-मुपावर्त्तयेद्यथा द्वे दाक्षन्त आत् पञ्चभ्यो दशतमु-पावर्त्तयेद्यथा तिस्रो दाक्षन्त आग्नीध्रात् अभ्यो दशतमु-पावर्त्तयेद्यथा पञ्च दाक्षन्त आहाभ्यो तथ्यां दशतमुपावर्त्तये देवमा शतान्तयो हाभ्यैवान्यूना विराडत्तायां लोके काम-दुघा भवति" शतब्रा०४।५।८।१६। "या प्रथमा दशदशं स लोको या द्वितीयान्तरिक्षं तद्या तृतीया द्यौः सैमंमेव लोकं प्रथमया दशतारोहन्तरिक्षं द्वितीयया दिवं तृतीयया तथैवैतद्यजमान इममेव लोकं प्रथमया दशता रोहत्यन्तरिक्षं द्वितीयया दिवं तृतीयया" ८।५।२।१५। "एकादश दशत आलभते। एकादशाक्षरा वै त्रिष्टुप् वीर्य्यं त्रिष्टुबिन्द्रियस्यैव वीर्य्यस्यावरुद्ध्या एकादश दशत आल-भते दश वै पशोः प्राणा आत्मैकादशः प्राणैरेव पशूनृध्नमर्द्धयति" शत० ब्रा० १३।२।५।४।

**दशतय** त्रि० दशावयवा यस्य दशानामवयवा वा संख्यायाः अवयवे तयप्। १दशसङ्ख्यायां २तत्संख्यान्विते त्रि०स्त्रियां ङीप्। "अथास्य संस्तविका देवा इन्द्रः सोमो वरुणः पर्जन्य ऋतव आग्नावैष्णवं हविर्न त्वक्संस्तविकी दश-तयीषु विद्यते" निरु० ७।८। "तदेकमेव जातवेदसं गायत्रं तृचं दशतयीषु विद्यते" २०।

**दशति** स्त्री दशाहता दश नि०। दशाहतदशके शतसंख्यायां "कालेन महता कद्रुरण्डानां दशतीर्दश। जनया-मास विप्रेन्द्र।" भा० आ० १६ अ०। यथा "दशाहता नव नवतिः तथा दशाहता दश दशति शतमित्यर्थः। दश दशतीर्दशशतानीत्यर्थः" नीलक०। तत्संख्यायाञ्च "लोकारक्षाय जायन्ते सुतयो दशतिर्दश" भा०अ०१०७अ०।

**दशदश्मिन्** त्रि० दशाहता दश परिमाणमस्य डिनि। शत-गुणिते स्त्रियां ङीप्। [धर्मभेदे दशकर्मन्ब्दे दृश्यम्।

**दशधर्म्म** पु० दशविधो धर्म्मः। सर्ववर्णसाधारणे मनूक्ते

**दशधा** अव्य० दशानां प्रकारः धाच्। दशप्रकारे "गायत्रीं दशधा जप्त्वा ततः सन्ध्यां समाचरेत्" आ० त०। "इते सर्वे त्रिलोकातं दशधा परिकल्पय च" मनुः।

दशम त्रि० दशन् पूर० डट्—नलोपश्च। संख्याविशेषे ।… दशप्रकारे च। तद्गुणत्वाभावाच्च दशादिभ्य… ठक्। “द्विगो दशोक्ताः पुरुषस्य लोके संवत्सराश्च दशपूर्वसमानि। दशैव मासान् बिभर्त्ति गर्भवत्यो दशैरेका पुनः दशा दशार्ताः” भा० प० १२४ अ०। आपस्तम्बादौ दशाभि उपदिश्यन्ति परस्या उपदेष्टारः दशोपनिषदां प्राधान्येन दशत्वात् तत्प्रतिपाद्योपदेशकत्वेन तेषां दशत्वम्।

दशन न०दश्यतेऽनेन वा दन्श—भावे करणादौ वा ल्युट् नि० नलोपः। १कवचे वर्मणि २शिखरे पु० मेदि०।३दन्ते पुंन० अमरः। “बभौ मदघनच्योत्स्ना सा विभोर्वदनोद्भवा” रघुः। “तद्गोमकेशदशनां स्वदक्षीणद्वदेत् स्त्रियम्” मनुः। “ताम्बूलाक्तं दशनमसकृत् दर्शयन्तीह चेटी” सा० द०।

दशनच्छद पु०दशनान् दन्तान् छादयति छादि—घञ् ह्रस्वः। ओष्ठे “दशन्तो दशनच्छदान्” भा० आ० १०२ अ०।

दशनपद न०दशनस्य दशनक्षतस्य पदम्। दशनक्षतस्थाने तदङ्के “दशनपदं भवदधरगतं मम जनयति चेतसि खेदम्” गीतगो०

दशनवासस् न० दशनस्य वास इवाच्छादकत्वात्। ओष्ठमात्रे अमरः।

दशनबीज पु०दशन इव बीजमस्य। दाडिमीवृक्षे पारस्करनि०

दशनाङ्क पु० ६त०। दशनक्षते। [(चुकापालङ्) शब्दच०।

दशनाढ्या स्त्री दशन आढ्यो यस्याः सेवनात्। चुक्रिकायां

दशनोच्छिष्ट न० दशनेनोच्छिष्टं यत्र। अधरादिचुम्बने “रैवतीदशनोच्छिष्टपरिपूतपुटे दृशौ” माघः। २निश्वासे पु० ६त०। ३दन्तोच्छिष्टे त्रि० मेदि०।

दशप पु० दश ग्रामान् पाति रक्षति पा—क। दशग्रामी रक्षके राजनियुक्ते पुरुषभेदे। तन्नियोगादिकं भा० शा० ८७ अ० उक्तं यथा

“ग्रामस्याधिपतिः कार्य्यो दशग्राम्यास्तथाऽपरः। द्विगुणायाः शतस्यैवं सहस्रस्य च कारयेत्। ग्रामेयान् ग्रामदोषांश्च ग्रामिकः प्रतिभावयेत्। तान् ब्रूयाद्दशपायासौ स तु विंशतिपाय वै। सोऽपि विंशत्यधिपतिर्वृत्तं जानपदे जने। ग्रामाणां शतपालाय सर्वमेव निवेदयेत्। यानि ग्राम्याणि भोज्यानि ग्रामिकस्तान्युपाश्नीयात्। दशपस्तेन भर्त्तव्यस्तेनापि द्विगुणाधिपः। ग्रामं ग्रामशताध्यक्षो भोक्तुमर्हति सत्कृतः। महान्तं भरतश्रेष्ठ। सुस्फीतं जनसङ्कुलम्। तत्र ह्यनेकपायत्तं राज्ञो भवति भारत। शाखानगरमर्हस्तु सहस्रपतिरुत्तमः। धान्य…

…हिरण्यं भोगेन भोक्तुं राष्ट्रियसङ्गतः। तेषां संग्रामकृत्यं स्यात् ग्रामकृत्यं च तेषु यत्। धर्मज्ञः सचिवः कश्चित् तत् प्रपश्येदतन्द्रितः”।

दशपञ्चतपस् पु० दशसु इन्द्रियेषु पञ्चसु प्राणेषु च तपो यस्य। इन्द्रियजयपूर्वकप्राणायामपरे योगिनि। “शुभगो वायुभक्षश्च दन्तोलूखलिकस्तथा। अश्मकुट्टो निरन्नः दशपञ्चतपाश्च यः” हरिवं० ४५ अ०। [शुद्ध। शब्दच०

दशपारमिताध्वर पु० दशभिर्बलैः पारमितोऽध्वरो येन।

दशपुर न०दश दिशः पिपर्त्ति पॄ—क। १कैवर्त्तीमुस्तके अमरः। दश पुरो यत्र अच् समा०। २मालवदेशेकनगरभेदे मेदि० स च देशः ह०सं०१४ अ० अथ दक्षिणेन कक्षोदपकाक्षे “दशपुरगोनर्दकोलकाः” दक्षिणस्यामुक्ताः। “पाणौ कुर्वंश्च दशपुरवधूनेत्रकौतूहलानाम्” माघः।

दशपुरुष पु० दशगुणितः पुरुषः। स्वजनकावधिपुरुषदशके। “यो मातृतः पितृतश्च दशपुरुषं समनुष्ठिता विद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो नाब्राह्मण्यं निनयेयुः” आश्व० श्रौ० ६।६।२०। “येषां मातृतः पितृतश्चोभयतो ये दशपूर्वाः पुरुषाः ते विद्यया तपसा पुण्यैः प्रतिषिद्धवर्जितैश्च युक्ताः सम्यगनुष्ठितवन्तो वैदिकं पन्थानम्, अपि चं अब्राह्मण्यं न निनयेयुः निश्चयेनाब्राह्मण्यं न गमयेयुः। अब्राह्मण्यगमनं नाम शूद्रायामपत्योत्पादनमित्युच्यते। विद्या नाम षडङ्गो वेदः, तदर्थज्ञानञ्च। तपो नाम श्रौतस्मार्त्तकर्मानुष्ठानम्। पुण्यकर्म नाम प्रतिषिद्धवर्जनम्। तानेवंविधान् पुरुषाननुप्रवर्त्तयेयुः, एतदुक्तं भवति मातृतः पितृतश्चोभयतः पूर्वं दश ये पुरुषाः ते षडङ्गवेदाध्ययनेन तदर्थज्ञानेन च श्रौतस्मार्त्तकर्मानुष्ठानेन च प्रतिषिद्धवर्जितेन च युक्ताः शूद्रायामपत्योत्पादनं चाकृतवन्तो ये पुरुषा तानेवंविधान् पुरुषाननुप्रवर्त्तयेयुः। दशपुरुषमिति दशपुरुषा इत्यर्थः। नारा०। “मातापित्रोर्येषु वध्यः श्रोत्रियो दशपूरुषः” भा० अनु० ६० अ० “दशपुरुषविख्यातश्रोत्रियाणां महाकुलम्” स्मृतिः।

दशपूर न० दश दिशः पूरयति पूर—अण्। कैवर्त्तीमुस्तके अमरे पाठान्तरम्।

दशपेय पु०दशभिः पुरुषैश्चमसं पेयमत्र। यागभेदे। “संसृपेऽभिषिच्य दशपेयेन यजेत” कात्या० श्रौ० १५।६।१७। “संसृपेष्टयो नाम यागविशेषाः, ताभिर्याजयित्वा, ताभिः अभिषिच्य दशपेयेन यजेत। दशपेयो नाम यज-

दशमूलीक इति । मतमूर्धन्यस्य कलिकाले वयसः ।

**दशमौलिका** स्त्री॰ दशस्थानमस्यायां' स्थिति [illegible] ।
१अतिवले दशमशब्दे उदा॰ । २कारतानां कालिनां
सथानां मध्ये नायकपा दशां प्राप्ते च दशाशब्दे दृश्यम् ।

**दशमुख** पु॰ दश मुखान्यस्य । १रावणे "गत्वा भोक्तुं दश-
मुखभुजोच्छ्वासितप्रस्थसन्धेः" मेघ॰ । २महाकालीरूपे-
देवीभेदे स्त्री "श्रीवामाकृतिमाश्रपाददशकां सेवे महा-
कालिकाम्" महाकालीध्यानम् । तस्या दशास्यवत्त्वा
तथात्वम् । दशवदनादयोऽप्यत्र ।

**दशमुखरिपु** पु॰ ६त॰ । रामे "सीतां हित्वा दशमुखरिपु-
र्नोपयेमे यदन्याम्" रघुः ।

**दशमूत्रक** न॰ दशानां मूत्राणां समाहारः । दशाना
प्राणिनां गोमहिषाजाविहयगजखरोष्ट्रमानुषमानु
षीणां मूत्रे । प्राणिभेदे तद्गुणाः सुश्रुते उक्ता यथा

"गोमूत्रं कटुतीक्ष्णोष्णं सक्षारत्वान्न वातलम् । लघ्व-
ग्निदीपनं मेध्यं पित्तलं कफवातजित् । शूलगुल्मोदरा-
नाहविरेकास्थापनादिषु । मूत्रप्रयोगसाध्ये च १गव्यं मूत्रं
प्रयोजयेत् । दुर्नामोदरशूलेषु कुष्ठमेहाविशुद्धिषु । आ-
नाहशोफगुल्मेषु पाण्डुरोगे च माहिषम्२ । कासश्वासा-
पहं शोषकामलापाण्डुरोगनुत् । कटुतिक्तान्वित छाग३मो-
षमीषन्मारुतकोपनम् । कासप्लीहोदरश्वासशोषवर्चोग्रहे हि-
तम् । सक्षारतिक्तकटुकमुष्णं वातघ्नमाविकम्४ । दीपनं
कटुतीक्ष्णोष्णं वातचेतोविकारनुत् । आश्वं५ कफहरं
मूत्रं क्रिमिदद्रुषु शस्यते । सतिक्तं लवणं भेदि वातघ्नं
पित्तकोपनम् । तीक्ष्णं क्षारे किलासे च नागं६ मूत्रं
प्रयोजयेत् । गरचेतोविकारघ्नं तीक्ष्णं ग्रहणीरोगनुत् ।
दीपनं गार्दभं७ मूत्रं क्रिमिवातकफापहम् । शोफकुष्ठो-
दरोन्मादमारुतक्रिमिनाशनम् । अर्शोघ्नं कारभं८ मूत्रं
मानुषन्तु९ १०विषापहम्" ।

**दशमूल** न॰ दशसंख्यकानां मूलानां समाहारः पात्रा॰ न वा
ङीप् । चक्रदत्तोक्ते पाचनभेदे "बिल्वश्योनाकगाम्भारी
पाटलागणिकारिकाः । दीपनं कफवातघ्नं पञ्चमूलमिदं
महत् । शालपर्णीपृश्निपर्णीबृहतीद्वयगोक्षुरम् । वात-
पित्तहरं वृष्यं कनीयः पञ्चमूलकम् । उभयं दशमूलन्तु
सन्निपातज्वरापहम् । कासे श्वासे च तन्द्रायां पार्श्व-
शूले च शस्यते । पिप्पलीचूर्णसंयुक्तं कण्ठहृद्ग्रहनाश
नम्" । पात्रा वा ङीप् । दशमूलीरसे सर्पिः" चक्रद॰ ।

**दशमूलघृत** न॰ चक्रदत्तोक्ते ज्वरघ्ने घृतभेदे ।

"दशमूलीरसे सर्पिः सक्षीरे पञ्चकोलकैः । सक्षारै-
र्हन्ति तत्पूर्वं ज्वरकासाग्निमन्दताः । वातपित्तकफ-
व्याधीन् प्लीहानं चापि पाण्डुताम्" । २तन्त्रोक्ते काम-
घ्ने घृतभेदे च । "दशमूलीकषायेण भार्गीकल्कं पचेद्
घृतम् । दधिमस्तुरिमिर्युक्ते तत्परं वातकासनुत्" ।

**दशमूलतैल** न॰ चक्रदत्तोक्ते बाधिर्य्यनाशके तैलभेदे ।

"दशमूलीकषायेण तैलप्रस्थं विपाचयेत् । एतत्कल्कं
प्रदायैव बाधिर्य्ये परमौषधम्" ।

**दशमूलषट्पलघृत** न॰ चक्रदत्तोक्ते कासादिघ्ने घृतभेदे ।

दशमूलीचतुःप्रस्थे रसे प्रस्थोन्मितं हविः । सक्षारैः
पञ्चकोलैस्तु कल्कितं साधु साधितम् । कासहृत्पार्श्वशू-
लघ्नं हिक्काश्वासनिवर्हणम् । कल्कं षट्पलमेतान्न प्राह-
र्न्ति भिषग्वराः' ।

**दशमूलाद्यघृत** न॰ चक्रदत्तोक्ते कासनाशके घृतभेदे

"दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत् । पुष्कराह्व-
शटीबिल्वसुरसव्योषहिङ्गुभिः । पेयानुपानं तत् देयं कासे
वातकफाधिके । श्वासरोगेषु सर्वेषु कफवातात्मकेषु च"

**दशयोग** पु॰ दशानामङ्गानां योग । विवाहादौ वर्ज्ये
दोषभेदे तत्स्वरूपप्रतिप्रसवादिकम् उपयमशब्दे १२६८
पृ॰ दृश्यम् । अयं दशयोगभङ्ग इत्यन्ये ।२दशहराशब्दे
वक्ष्यमाणे ज्यैष्ठमासशुक्लपक्षादिदशके च ।

**दशरथ** पु॰ सूर्य्यवंश्ये अजनृपात्मजे रामचन्द्रपितरि नृपभेदे
भट्टि॰ "अयोध्याया महाराजो रघुरासीन् महाबलः ।
अजस्तु रघुतो जज्ञे अजाद्दशरथोऽभवत्" हरिवं॰१५अ॰।

**दशरथसुत** पु॰ ६त॰ । रामे दशरथात्मजादयोऽप्यत्र ।

**दशरश्मिशत** पु॰ दश रश्मिशतान्यस्य । सहस्रकिरणे सूर्य्ये
"दशरश्मिशतोपमद्युतिम् । यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः" रघुः।

**दशरात्र** पु॰ दशभिः रात्रिभिर्निर्वृत्तः ठञ् तस्य लुकि
तद्धितार्थद्वि॰ अच् समा॰ । १दशरात्रसाध्ये यागभेदे
स च यागः कात्या॰ २५।११।१७ श्रौ॰ उक्तः । दशानां
रात्रीणां समाहारः । २रात्रिदशके न॰ । अत्र रात्रान्त-
त्वेऽपि संख्यावाचकपूर्वकत्वात् क्लीवता । 'प्रतिषेधैः
समं तत्र दशरात्रमशुध्यति । यच्चोक्तं दशरात्रस्य ताव-
देवाशुचिर्भवेत्" मनुः । "अथ चेद्दशरात्रं संनिपतेद्
आद्यं दशरात्रम्" शु॰ त॰ ।

**दशरूपक** न॰ दश रूपकाणि दृश्यकाव्यानि प्रतिपाद्य-
तया स्वस्त्यत्र अच् । नाटकादिदशविधदृश्यकाव्यलक्षणभेदे ।

दशम्यां तु विशेषेण पूजा कार्य्या हितार्थिभिः"। अत्र स्नानाङ्गमन्त्रस्य उक्तः गारुडे २१५ अ० यथा। "अद्य ज्येष्ठे तु मासे दशम्यां शुक्लके सिते। दशपापहरा- स्नानं अदत्तादानकल्मषम्। विधानाचरणं हिंसा पर- दारोपसेवनम्। पारुष्यानृतपैशुन्यमसम्बद्धं प्रभाषणम्। परद्रव्याभिध्यानञ्च मनसानिष्टचिन्तनम्। एतद्दशाघघा- ताय गङ्गास्नानं करोम्यहमिति"।

**दशा** स्त्री दंश—अङ् नि० नलोपः। १अवस्थायां २दीपवर्त्तौ, मेदि० "अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम्। परोपकारनिरता मणिदीपा इवोत्तमाः" इत्युद्भटः। ३चित्ते, अजयपालः। ४कालकृतविशेषरूपायां ५गर्भवास- जन्मादिबाल्ययौवनादिरूपायामवस्थायाञ्च। ताश्च "गर्भ- वासः१जन्म२बाल्यं३ कौमारं४ पौगण्डम्५ यौवनं६ स्था- विरता७ जरा८ प्राणरोधः९ नाशः१०" नीलकण्ठेनोक्ताः दश वेद्याः। ५कामकृते विरहिण्यां नेत्ररागाद्यवस्थादशके, ज्योतिषोक्ते नक्षत्रानुसारेण सूर्य्यादिग्रहाणां स्वामित्वेन ६भोग्यकाले च। तत्र स्मरकृतदशाश्च "नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः। निद्राच्छेदस्तनुता विषयनि- वृत्तिस्त्रपानाशः। उन्मादो मूर्च्छा मृतिरित्येताः स्मरद- शादशैव स्युः"। ग्रहाणां स्वस्वसूचितफलविपाककाल- भेदरूपा दशा च नानाविधा तत्र "कलौ नाक्षत्रिकी दशा" इत्युक्तेः नक्षत्रसूचितैव दशा ग्राह्या साऽपि नानाविधा षट्त्रिंशद्वर्षीया मङ्गलादियोगिनीदशा, अष्टो- त्तरीयवर्षात्मिका रव्याद्यष्टग्रहाणां दशा। विंशोत्तरी- यवर्षात्मिकासूर्य्यादिनवग्रहैर्विपच्यमानफलात्मिका च तत्र योगिनीदशा तु "गुणं संयोज्य जन्मर्क्षे वसुभिर्भागमाह- रेत्। मङ्गलाद्यास्त्रिराद्यन्ता ह्यष्टौ ज्ञेया महादशाः"। "मङ्गला पिङ्गला धन्या भ्रामरी भद्रिका तथा। उल्का सिद्धा सङ्कटा च एकोत्तरमिताः क्रमात्" इत्युक्तानुसारेण ज्ञेया। तदानयनञ्चान्यत्र "आर्द्रा- दिभिस्त्रिराद्यन्ता ह्यष्टौ ज्ञेयाः क्रमाद्बुधैः। मङ्गला पिङ्गला धन्या भ्रामरी भद्रिका तथा। उल्का सिद्धा सङ्कटा च एकैकोत्तरवत्सरा। अश्विन्यादित्रयं तत्र आग्नेय्यादित्रयेऽधिकम्। सिद्धायां रोहिणी शेषे सङ्कटायां मृगः परः। मङ्गलायाः पतिश्चन्द्रः पिङ्ग- लाया रविस्तथा। धन्यायास्तु बुधः स्वामी भ्रामर्य्याः धरणीसुतः। भद्रिकायाः पतिर्जीव उल्काया रवि- नन्दनः। सिद्धायाः भार्गवः स्वामी सङ्कटायास्तु दानवः" इत्येवं क्रमात् दशाभेदाः। तासां चक्रेण ज्ञानाय

योगिनीदशाचक्रम्।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| दशानाम | म | पि | ध | भ्रा | भ | उ | सि | सं० |
| तदीशाः | च | र | बु | कु | जी | श | शु | रा |
| मानवर्षाः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| जन्मनक्ष- | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ |
| त्रानुसारेण | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ |
| तासां प्रवेश- | २२ | २३ | २४ | २५ | २६ | २७ | ४ | ५ |
| नक्षत्राणि। | | | | १ | २ | ३ | | |

त्रैराशिकेन नक्षत्रभुक्तकालमपहाय प्राप्तदशाका- लात् गतभोग्यकालानुसारेण दशाकालाः कल्प्याः एवं सर्व्वत्र।

विंशोत्तरीयदशा तु "रविश्चन्द्रस्तथा भौमो बुधजीवौ शनैश्चरः। बुधः केतुः भृगुश्चेति कृत्तिकादौ त्रिधा भवेत्"। दशावर्षाश्च "षट् सूर्य्यस्य दशा वर्षाः दिङ्मिता रजनीपतेः। कुजस्य सप्त वर्षाः स्युः राहोरष्टा- दशैव तु। गुरोः षोडश विज्ञेयाः शनेरेकोनविंशतिः। विदः सप्तदश ज्ञेया केतूनां सप्त कीर्त्तिताः। भृगोर्विंश- तिरुद्दिष्टा सूर्य्यादीनां महादशाः"।

विंशोत्तरीयदशाचक्रम्।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| दशेशाः | र | च | म | रा | जी | श | बु | के | शु |
| वर्षमानम् | ६ | १० | ७ | १८ | १६ | १९ | १७ | ७ | २० |
| जन्मनक्षत्रा- | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
| नुसारेण | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० |
| प्रवेशनक्षत्राणि | २१ | २२ | २३ | २४ | २५ | २६ | २७ | १ | २ |

त्रैराशिकेन प्राग्वद्भुक्तभोग्यकालानुसारेण दशाकल्पनम्। एतद्दशफलानि सर्वार्थचिन्तामण्यादुक्तानि यथा,

"दशानुरोधेन फलं वदन्ति मुनीश्वरा जातशुभाशुभं तत्। सारं समुद्धृत्य तदेव वक्ष्ये भेदं यथा विस्तरतो दशानाम्। दीप्तः१ स्वस्थ२स्तु मुदितः३ शान्तो४ हीनो५- ऽतिदुःखितः६। विकलश्च७ खलः८ कोपी९ नवधा खेचरो भवेत्। उच्चस्थः खचरो दीप्तः१ स्वस्थः२ स्वक्षेत्रगो मतः। मुदितो३, मित्रभे ४शान्तः समगो हीनको५ऽधरः। शत्रुभे दुःखसंयुक्तो६ विकलः७ पापसंयुतः। खलः८ पराजितो- ऽथ कोपी९ स्यादर्कसंयुतः। पृथक् पृथक् फलं तेषां दशा- काले विशेषतः। तत्र नामानुरोधेन परिपाके वदन्ति हि। याते प्रदीप्तस्य धराधिपत्वमुत्साहशौर्य्यं धनवाह- नञ्च। स्त्रीपुत्रलाभं धनवस्तुपूर्णां क्षितीश्वरत्वाकलयेति

विद्यामृतेः स्वस्य खेटस्य दशाविपाके लक्ष्मी नृपा-
लजधनादिसौख्यम् । विद्यायशःप्रीतिमहत्त्वताच
दारार्थभूत्यात्मजधर्ममेति २ । सुदान्वितस्यापि दशाविपाके
शत्रुग्रहादिभूमल्लसुतार्थधैर्यम् । पुराणधर्मश्रवणादिगान-
दानादियानाम्बरभूषणाग्निम् ३ । दशाविपाके सुखधैर्यमेति
शान्तस्य ४ भूपुत्रकलत्रयानम् । विद्याविनोदान्वितधर्म-
शास्त्रं बह्वर्थदेशाधिपपूज्यताञ्च । स्थानच्युतिर्बन्धुवि-
रोधिता च हीनस्य ५ खेटस्य दशाविपाके । जीवत्यसौ-
कुत्सितहीनवृत्त्या त्यक्तोजनै रोगनिपीडितः स्यात् ।
दुःखान्वितस्यापि ६ दशाविपाके नानाविधं दुःखमुपैति
नित्यम् । विदेशगो बन्धुजनैर्विहीनश्चौरादिभूपैर्भयमाप्र-
वस्तः । वैकल्यखेटस्य ७ दशाविपाके वैकल्यतां याति
मनोविकारम् । पित्रादिकानां मरणं विशेषात् स्त्रीपु-
त्रयानाम्बरचोरपीडाम् । दशाविपाके कलहं वियोगं
खलस्य ८ खेटस्य पितुर्वियोगम् । शत्रुवैमानाम्बनभूमि-
नाशमुपैति नित्यं स्वजनैश्च निन्द्यः । कोपान्वितस्यापि ९
दशाविपाके पापं समायाति बहुप्रकारैः । विद्यायशः
स्त्रीधनभूमिनाशं राज्ञश्च वित्तं हरतेऽत्र रोगी" ।
अथ परमोच्चादिगरविदशाफलानि । भानोर्दशायां परमो
च्चगस्य भूर्य्यर्थदारात्मजकीर्त्तिशौर्यम् । संमाननं भूमिपतेः
सकाशादुपैति सच्चारविनोदगोष्ठीम् । उच्चान्वितस्यापि रवे-
र्दशायां गोहस्तिधान्यार्थपरिश्रमञ्च । संसारयुग्बन्धुजनैर्वि-
रोधं देशाद्विदेशञ्च रतिप्रकोपात् । प्रचण्डवेश्यागमनं क्षि-
तीशादुपैति हर्षं रतिकेलिभानम् । मृदङ्गभेरीरवयुक्तया-
नमन्योन्यवैरं लभते मनुष्यः । आरोहिणो वासरनाय-
कस्य दशा महत्त्वं कुरुतेऽतिसौख्यम् । परोपकारं सुतदा-
रभूमिगोशालिमातङ्गकृषिक्रियादीन् । दशावरोहा दिन-
नायकस्य कृषिक्रियावित्तकलेशनाशम् । चोराग्निपीड़ां
कलहं विरोधं नरेशकोपं कुरुते विदेशम् । नीचस्थित-
स्यापि रवेर्विपाके मानार्थनाशं क्षितिपालकोपात् ।
स्वबन्धुनाशं सुतमित्रदारैः पित्रादिकानामपकीर्त्ति-
मेति । अत्यन्तनीचान्वितसूर्यदाये विपत्तिमाप्नोति स्वदे-
श्युतिञ्च । विदेशयानं मरणं गुरूणां स्त्रीपुत्रगोभूमि-
कृषिविनाशम् । मूलत्रिकोणस्य रवेर्विपाके चेतार्थदारात्मज-
बन्धुसौख्यम् । राजाश्रयं गोधनमित्रलाभं सद्यानया-
नादिकमेति राज्यम् । स्वक्षेत्रगस्यापि रवेर्दशायां
स्वबन्धुसौख्यं कृषिवित्तकीर्त्तिम् । विद्यायशःप्राप्ति
दानपुण्यं प्रभूतिलाभं सुखमेति नित्यम् । दशाविपाके

स्वाधिमित्रगस्य रवेः प्रनष्टार्थकलत्रपुत्रः । गोमित्रपित्रा-
दिशरीरकष्टं मलत्वमायाति जनैः समन्तात् । शत्रु-
राशिस्थितसूर्यदाये दुःखी परिभ्रष्टसुतार्थदारः । नृपाग्नि-
चोरैर्विपदं विवादं पित्रोर्विरोधञ्च दशान्तमेति । स्वमि-
त्रराशिस्थितसूर्यदाये सम्पत्तमित्रात्मजराजपूजाम् । स्वगे-
हवासं स्वजनस्य सङ्गाद् यानादिभूषाम्बरतामलाभम् ।
अत्यन्तमित्रवर्गगस्य भानोर्दशाविपाके सुतिसौख्यमेति ।
स्त्रीपुत्रधान्यार्थमनोविलासनटागयानाम्बरभूषणानि । स-
मवर्गगस्यापि रवेर्दशायां समस्तजनैः स्यात् कृषिभूमिधान्यम् ।
गोवाजियानाम्बरदेहसौख्यं स्त्रीपुत्रदोषं रणपीड़ितः
स्यात् । नीचान्वितस्यापि रवेर्दशायां नीचानुवृत्त्या कुम-
ती कशीलः । स्त्रीपुत्रधान्यार्थपशुक्रियादिमनोविकारं
समुपैति ज्ञेयम् । उच्चान्वितस्यापि रवेर्दशायां मनोविलासं
लभते स्ववृत्त्या । तीर्थाभिषेकं हरिकीर्त्तनञ्च प्राकार-
कूपादिपुराणशास्त्रम् । पापान्वितस्य द्युमणेर्विपाके नित्यं
मनः क्लिश्यति ज्ञेयबुद्ध्या । कुभोजनं कुत्सितवस्त्रपानं
कुशीलवृत्त्या त्वधनं कृशत्वम् । दिनाधिनाथस्य शुभान्वि-
तस्य पाके सुखं भूमिधनादिवस्त्रम् । दृष्टैर्विलासं
स्वजनैः समाजं कल्याणरागआदिविनोदगोष्ठीम् ।
पापेक्षितस्यापि सहस्रभानोर्दशाविपाके परमन्तु
दुःखम् । पित्रोर्विनाशं सुतदारकष्टं चोराग्निभूपालकृतं
कृशत्वम् । करोति भानुः शुभवीक्षितश्चेत् विद्यायशश्री
सुतवाग्विलासम् । कान्तिप्रतापं रतिकेलिसौख्यं
पित्रोः सुखं भूपतिमाननां च । केन्द्रान्वितस्यापि
दिवाकरस्य दशाविपाके स्वपदस्थदुःखम् । स्थानच्यु-
तिर्बन्धुवियोगमेति भङ्गः कृषेर्वित्तपरिश्रमञ्च । त्रिकोण-
संयुक्तरवेर्विपाके बुद्धिभ्रमं राजविमानमञ्च । सौख्या-
दिहानिं निधनं पितुश्च कष्टादिवैकल्यमुपैति काले ।
उच्चांशकस्य च दशा विदधाति हर्षं नित्यं प्रतापजनितां
महतीं श्रियञ्च । नानाविनोदजनितं रतिकेलिसौख्यं
स्त्रीवस्त्रलाभमनिशं पितृवर्मनाशम् । नीचांशयुक्तस्य
रवेर्दशायां भार्यार्थभूपुत्रविदेशयानम् । त्यक्तोजनैर्बन्धु-
विकुत्सितस्तु मनोविकारं ज्वरपित्तरोगम् । आदौ सूर्य-
दशायां दुःखं पितृरोगकृतश्च व्याधिः । मध्ये पशुधन-
हानिश्चान्ते विद्यामहत्त्वञ्च । दशाविपाके धनहानि-
मेति सहस्रभानोरतिदुःखजालम् । गुरुप्रयोगूत-
पवित्ररोगं पुत्रादिकष्टं त्वथवा प्रमेहम् । रन्ध्रस्थभानो-
रपि वा दशायां देहस्य कष्टं सकलाक्रियिष्कम् ।

चातुर्थिकं नेत्रविकारकासं ज्वरातिसारं स्वपदच्युतिञ्च । भानोर्द्वादशगस्य चेद्यदि दशा क्लेशार्थहानिं भयं स्त्रीबन्धुात्मजभूमिनाशमथवा वा पित्रोर्विनाशं कलिम् । स्थानात् स्थानपरिभ्रमं विपक्षतं राज्ञोभयं प्राद्यक् विद्यावादविनोदगोष्ठिकलहं गोवाजिसंपीडनम् । पुत्रोत्पत्तिविपत्तिमत्र कुरुते भानोर्धनस्थस्य वा क्लेशबन्धुवियोगदुःखकलहं वाग्दूषणं क्रोधनम् । स्त्रीणां धननाशनं नृपभयं भूपुत्रयानाम्बरं सर्वं नाशमुपैति तत्र शुभयुक् वाच्यं न चैतत्फलम् । भानोर्विक्रमयुक्तस्य दशा धैर्य्यं महत् सुखम् । नृपमानमवाप्नि भ्रातृवैरं विपत्तथा । सुखस्थितस्यापि रवेर्दशायां भोगार्थभूभृत्यकलत्रहानिम् । क्षेत्रादिनाशं स्वपदच्युतिं वा ग्रामच्युतं चोरशिखाग्निशस्त्रैः । दाराश्रितस्यापि रवेर्दशायां कलत्ररोगस्त्वथ वा मृतिर्वा । कुभोजनं कुत्सितपाकजातं क्षीरादिद्रव्याज्यविहीनमन्नम् । कर्मस्थितस्यापि रवेर्दशायां राज्यार्थलाभं समुपैति धैर्य्यम् । उद्योगसिद्धिं यशसा समेतं जयं विवादे नृपमाननं च । लाभस्थितस्यापि दशाविपाके भानोर्धनाप्तिं शुभकर्मलाभम् । उद्योगसिद्धिं सुतदारसौख्यं यानादिभूषाम्बरदेहसौख्यम् । संज्ञाध्याये यस्य यद्द्रव्यमुक्तं कर्माजीवे यस्य यच्चोपदिष्टम् । भावस्थानालोकयोगोद्भवं च तत्सर्वं तस्य योज्यं दशायाम् । सूर्य्ये स्थानबलाधिके कृषिधनं गोभूमियानाम्बरं सौख्यं राजसुमाननं परधनैः संयुज्यते कान्तिमान् । तत्पाके शयनाम्बरादि लभते सर्वोपकारं महाकीर्त्तिं भूषणमिष्टबन्धुसहितं तीर्थाभिषेकं महत् । रविर्यदा स्थानबलेन हीनस्तत्पाककाले ग्रहमर्थनाशम् । स्थानच्युतिं बन्धुविरोधतापं देशाद्विदेशं समुपैति दुःखम् । दिग्वीर्य्ययुक्ते दिवसेश्वरे तु दिगन्तराक्रान्तिधनादिसौख्यम् । तत्तद्दिशः प्राप्तयशोऽर्थभूमिर्नो चेत्तथा तादृशमत्र नास्ति । तत्कालमानात्तनुते बलिष्ठे रवौ विपाके कृषिभूमिवित्ते । उद्योगसिद्धिं नृपमाननाञ्च हीने रवौ कालबलेन नाशम् । निसर्गतः सर्वमुपैति कालरवौ तु नैसर्गिकवीर्य्ययुक्ते । यानार्थभूषाम्बरदेहसौख्यं हीने रवौ चोरनृपाग्निभीतिम् । रवौ तु चेष्टाधिकवीर्य्ययुक्ते सर्वेप्सितार्थागममेति सौख्यम् । नृपस्य मानं सुतदारसौख्यं कृष्यादियानाम्बरमत्र हीने । रवौ खगानां बलहीनयुक्ते त्वचिन्तयित्वा सकलं च सौख्यम् । तज्जायते तत्परिपाककाले तेनैव हीने सकलं विनाशम् । क्रूरादिषष्ट्यंशरवेर्दशायां स्थानच्युतिं वा नृपचोरभीतिम् । कोपाधिकं तत्र शिरोरुजं च पित्रादिनाशं त्वथवा तदीयम् । मृदुंशषष्ट्यंशरवेर्दशायां मृष्टान्नपानाम्बरभूषणाप्तिम् । नानाद्वयं राजसुपूजितञ्च वेदान्तशास्त्रागमधर्मशास्त्रम् । पारावताद्यंशयुतस्य भानोर्दशाविपाके महतीञ्च कीर्त्तिम् । बन्ध्वर्थदेशाधिपमाननं च पुत्रादिसंमित्रकलत्रलाभम् । स्वोच्चादिजन्यं फलमाङ्कुरादौ पश्चात् फलं खेचरदृष्टिजन्यम् । मध्ये फलं स्थानभवं तथैव पापग्रहाणामिह योजयन्ति । भुजङ्गमत्र्यंशयुतस्य भानोर्दशाविपाकेऽहिभयं विषाद्वा । नृपाग्निपानित्यमनेकदुःखं पाशादिमत्र्यंशयुतस्य चैवम् । स्वोच्चस्थोऽपि दिनेशो नीचांशे चेत्कलत्रधनहानिः । स्वकुलजबन्धुविरोधः पित्रादीनां तथैव मुनिवाक्यम् । उच्चांशकयुतो भानुर्नीचस्थोऽपि महत्सुखम् । करोति राज्यभारं च दशान्ते विपदं क्रमात्" ।

अथोच्चादिगचन्द्रदशाफलानि "अत्युच्चगस्यापि निशाकरस्य दशाविपाके कुसुमाम्बरञ्च । महत्त्वतामेति कलत्रलाभं धनार्यतिं पुत्रमनोविलासम् । उच्चस्थितस्यापि निशाकरस्य प्राप्तौ दशायां सुतदारवित्तम् । मिष्टान्नपानाम्बरभूषणाप्तिं विदेशयानं स्वजनैर्विरोधम् । आरोहिणी चन्द्रदशा प्रपन्ना स्त्रीपुत्रवित्ताम्बरसौख्यकीर्त्तिम् । करोति राज्यं सुखभोजनञ्च देवार्च्चनं भूसुरतर्पणञ्च । निशाकरस्याप्यवरोहकाले स्त्रीपुत्रमित्राम्बरसौख्यहानिम् । मनोविकारं स्वजनैर्विरोधं चोराग्निभूपैः पतनं तटाके । नीचांशगस्यापि निशाकरस्य प्राप्तौ दशायां त्रिविधार्थहानिम् । कुभोजनं कुत्सितराजसेवा मनोविकारं समुपैति निद्राम् । मूलत्रिकोणस्थितचन्द्रदाये नृपाश्रयं भूमिसुतार्थदारान् । प्राप्नोति भूषाम्बरमानलाभं सुखं जनन्या रतिकेलिलोलम् । स्वक्षेत्रगस्यापि निशाकरस्य नृपाश्रयप्राप्तिमुपैति सौख्यम् । प्रचण्डवेशग्रागमनं क्षितीशात् संमाननं स्त्रीसुतबन्धुसौख्यम् । निशाकरस्याप्यतिशत्रुराशिं गतस्य दाये कलहोऽर्थनाशम् । कुवस्त्रतां कुत्सितभोजनञ्च क्षेत्रार्थदारात्मजतापयानम् । यानाम्बराभरणादिहानिं विदेशयानं परिचारकत्वम् । देशान्तरे भ्राम्यति बन्धुहीनो दुःखी परिक्लिश्यति शत्रुगेहे । मित्रर्क्षगस्यापि निशाकरस्य पाकेऽर्थलाभं क्षितिपालमैत्रीम् । उद्योगसिद्धिं जनबन्धुलाभं चित्राम्बराभूषणवाग्विलासम् । सुधाकरस्याप्यतिमित्रराशिं गतस्य

क्रान्वयं प्रतापम्। कालवीर्ययुतभौमदशायां काव्य-वाञ्छितिं सौख्यमुपैति। पट्टवस्त्रमणिमौक्तिकलाभं चित्रवस्त्रशयनोत्तमलाभम्। निसर्गवीर्यान्वितभौमदाये कृपाकटाक्षेण महीपतीनाम्। समस्तभाग्यात्मजमित्र-बन्धुगोभूमिभूषाम्बरदेहसौख्यम्। निसर्गतः स्थान-धनादिनाशं पित्राधिकं कुत्सितभोजनञ्च। कुजस्य दाये कुनखी पितृघ्नः सहोदराणामपि देहपीडा। वक्रान्वितस्य भौमस्य दशाकाले महद्भयम्। चौराग्नि-सर्पपीडां च बन्धनं पदच्युतिम्। दृग्वीर्ययुक्तस्य कुजस्य दाये कृपाकटाक्षेण महीपतीनाम्। समस्त-भाग्यात्मजमित्रबन्धुगोभूमिभूषाम्बरदेहसौख्यम्। क्रूर-षष्ठांशसंयुक्तभौमदायेऽतिपीडनम्। कारागृहप्रवेशञ्च बन्धुविभवक्षयम्। सौम्यषष्ठांशसंयुक्तभौमदाये शुभं भवेत्। विवाहदीक्षायज्ञं च सर्वेषामुपकारकम्। पारावतादिसंयुक्तभौमदाये महत् सुखम्। भूम्यर्थदार-वस्त्रादिधनवाहनभोजनम्। क्रूरद्रेक्काणसंयुक्तकुज-दाये मनोव्यथा। निगडं विषभीतिं च पापबन्धनमेव च। उच्चस्थोऽपि धरासूनुर्नीचांशकसमन्वितः। तत्-पाके भ्रातृमरणं स्वपक्षविग्रहद्वयम्। भूमिपुत्रोऽपि नीचस्थः स्वोच्चभागसमन्वितः। तत्पाके भूमिदारार्थ-पुत्रमित्रविवर्द्धनम्" कुजदशा।

अथ बुधदशा। "स्वतुङ्गसोमात्मजदायकाले धनान्वितः ख्यातिमुपैति सौख्यम्। ज्ञानञ्च कीर्त्तिं जननायकत्वं स्त्रीपुत्रभूम्यर्थमहोत्सवञ्च। उच्चस्थितस्यापि शशाङ्क-सूनोर्दशा महत्त्वं कुरुतेऽर्थसौख्यम्। देहस्य पुष्टिं धनधान्यपुत्र गोवाजिमत्तेभमृदङ्गनादम्। आरोहिणो सौम्यदशा प्रपन्ना यशोऽम्बरं गोवृषवाजिसङ्घम्। मृदङ्ग-भूषाम्बरयानलाभं वाणिज्यभूम्यर्थपरोपकारम्। शशाङ्कसूनोरवरोहिणो या दशा महत्कष्टतरञ्च दुःखम्। विज्ञानहीनं परदारसङ्गं नृपाग्निचौरैर्भय-मत्र कष्टम्। नीचस्थचन्द्रात्मजदायकाले ज्ञानेन हीनं स्वजनैर्वियुक्तम्। पदच्युतिं बन्धुविरोधितां च विदेशयानं वनवासदुःखम्। मूलत्रिकोणान्वितसौम्य-दाये राज्यं महत्सौख्यकरं च कीर्त्तिम्। विद्याविलासं निजधार्म्मिकत्वं पुराणधर्म्मश्रवणादिपूतः। स्वक्षेत्रग-स्यापि शशाङ्कसूनोः प्राप्तौ दशायां धनधान्यसम्पत्। वाणिज्यलाभं निजतातदाररत्नकनकाम्बरभूषणाद्यैः। श-शाङ्कसूनोररिराशिगस्य [illegible] क्षोभं च भूपतिकोप-

जातम्। विद्याविहीनं कुलहीनसेवां कुभोजनं दार-सुतार्थनाशनम्। शशाङ्कसूनोरतिशत्रुराशिं गतस्य पाके विपदं च दुःखम्। उद्योगभङ्गं स्वजनैर्विरोधं यज्ञादिविघ्नं शुभकर्म्मनाशम्। मित्रक्षेत्रदशायां शशाङ्क-सूनोर्धनार्थितः सौख्यम्। नामद्वयसंप्राप्तिः स्वनामा-ङ्कितगद्यपद्यानि। अतिमित्रराशिगस्य दशा प्रपन्ना महत्त्वतां याति। भूपतिदत्तं सौख्यं धनसुतदारांश्च बन्धुसम्मानम्। समक्षेत्रगस्यापि शशाङ्कसूनोर्दशा सुखं धान्यसुताम्बराणि। करोति राज्यच्युतिमल्पविघ्नं विज्ञानहीनं पिटकादिरोगम्। नीचखेचरसंयुक्तसौम्य-दायेऽतिकष्टताम्। पदभ्रंशं बन्धुनाशं कर्म्मनाशं मनो-रुजम्। उच्चखेचरसंयुक्तसौम्यदाये महत् सुखम्। भाग्योत्तरं सुविद्यां च वाणिज्यं सत्कर्म्मक्रियाः। विदः पापान्वितस्यापि दाये पापमुपैति च। चेतोऽर्थ-दारपुत्रादिक्लेशं भूमिविनाशनम्। विदः सौम्ययुत-स्यापि परिपाके महत् सुखम्। राज्ययोगं सुखं कीर्त्तिं दारपुत्रान्वयात् सुखम्। सौम्येक्षितस्यापि शशाङ्कसूनो-र्दशाविपाके महतीं च कीर्त्तिम्। विद्याविलासोद्भव-राजपूजां कान्तिप्रतापं यशसा समेतम्। पापेक्षित-स्यापि शशाङ्कसूनोर्भाग्यक्षयं बन्धुजनैर्वियुक्तम्। विदेश-यानं स्वपदच्युतिं च प्रध्यानुवृत्त्या कलहोऽतिकष्टम्। केन्द्रोपगस्य हि दशा शशिनन्दनस्य भूपालमित्रधन-धान्यकलत्रपुत्रान्। यज्ञादि कर्म्म स्वपमानयशःप्र-लब्धिं मृदङ्गपानशयनाम्बरभूषणानि। कर्म्म गतस्य हि दशा शशिनन्दनस्य भूपालमानं कवित्वप्रभावम्। भेरीरवादि परिघोषितयानमार्गं तीर्थाभिषेकमथवा जनयति प्रसिद्धम्। वित्तगसौम्यदशायां विद्याप्राप्तिं महत्त्वकीर्त्तिञ्च। भूपतिमान्यसमानो राज्यस्थाने प्रधानतां याति। तृतीयराशिस्थितचन्द्रसूनोर्दशाविपाके जडतां समेति। उद्गानमाजीवनगुल्मरोगमकार्त्तियोगे स्वप-मानञ्च। शशाङ्कसूनोर्हिबुकस्थितस्य दशा प्रपन्ना गृहधान्यनाशम्। सौख्यादिहीनं हिबुकेऽबलस्य सद्योगभङ्गं च पदच्युतिं वा। पञ्चमस्थशशिनन्दनस्य या क्रूरबुद्धिरतिकष्टता भवेत्। हीनवृत्तिरपि राज-सेवया लभ्यतेऽधनमेति बन्धनम्। षष्ठस्थानान्वित सौम्यदाये स्वगदोषजातं बहुरोगमेति। विचर्चिका-पैत्तिकपाण्डुरोगं नृपाग्निचौरैर्भयं [illegible]। [illegible] भूपतिदत्तकोपम्। वाक-

भिन्नं महद्भयं प्रमादं रिपुफस्थितस्यापि शशाङ्कसूनोः । दारस्थितस्यापि शशाङ्कसूनोर्दशा विपाके सुतदारवित्तम् । विद्याविनोदं विमलाम्बरं च नामद्वयं भूपतिमित्रताञ्च । भाग्यस्थितस्यापि शशाङ्कसूनोर्भाग्योत्तरं दारसुतार्थलाभम् । तीर्थाभिषेकं जपहोमदानं यज्ञादिकर्म्मापि लभेन्मनुष्यः । कर्म्मस्थितस्यापि शशाङ्कसूनोर्दशाविपाके नृपतौल्यमेति । सौख्यं स्वनामाङ्कितगद्यपद्यं नामद्वयं दारसुतार्थलाभम् । प्रपूजनं देवमहीरुहाणां साम्राज्यलाभं जननायकत्वम् । कवित्वमार्गं समुपैति काले यज्ञादिदीक्षां स्वजनैर्विरोधात् । उपान्त्यराशिस्थितसौम्यदाये त्वनेकधा वित्तमुपैति काले । दानेन वा भूपतिमाननाद्वा कृषेश्च वाणिज्यविचारतो वा । उच्चांशसंयुक्तशशाङ्कसूनोर्दशाविपाके सुतभूषणाप्तिः । मनोविलासं नयनाभिरामकृत्वा सुधैर्य्यं च जलाभिषेकम् । नीचांशकयुतः सौम्यो नीचवृत्त्यानुजीवनम् । प्रेष्यत्वं परिचारं च दशायाञ्च करोति तत् । सौम्यदशायामादौ लभते धनधान्यसम्पदं पुरुषः । अन्ते स्वजनविरोधं मध्ये दाये नरेशसम्मानम् । अर्कगसौम्यदशायां लभते विविधापदं मनोदुःखम् । स्वकुलजनपविरोधं निन्दाभयं वाजिकर्णरोगञ्च । स्थानवीर्य्ययुते सौम्ये तत्पाके कीर्त्तिराज्यदम् । समोधैर्य्यं मनोत्साहं यज्ञदीक्षाशुभप्रदम् । तद्विहीनवपुषे स्यान्दारपुत्रमहद्भयम् । विदेशवासं दुःखं च नानापरिभवक्रियाः । दिग्वीर्य्यसहिते सौम्ये दिगन्ताद्धनिकः सुधीः । सामन्तराजमित्रत्वं गन्धमाल्यस्य लेपनम् । कालवीर्य्ययुतसौम्यदशायां देहसौख्यकलहादिवियोगम् । दारपुत्रनृपमाननमेति गाङ्गतोयपरिपूततनुः स्यात् । निसर्गवीर्य्यान्वितसौम्यदाये निसर्गतश्चापि शुभादि कर्म्म । विद्याविवादं स्वजनैर्विरोधं मातुर्विरोधं त्वथवा तदीयम् । वक्रचेष्टान्विते सौम्ये भाग्यदारसुतार्थभाक् । तथा पुराणदानादिसत्कृत्यानमाचरेत् । दृग्बलेन युते सौम्ये सर्व्वभूतेषु सौम्यताम् । करोति रतिकेलिञ्च राज्यभाग्यसमन्वितम् । क्रूरषष्ठांशसौम्यस्य दशापाके महद्भयम् । चौराग्निभूपैर्भीतिः स्याच्छुभदृग्योगवर्जिते । सदंशादियुते सौम्ये राज्यलाभं महत्सुखम् । मार्द्दवं सर्व्वभूतेषु कृषिपुत्रार्थसम्पदम् । सौम्ये वैशेषिकांशस्थे विशेषाद्राजपूज्यताम् । सुगन्धाम्बरमाल्यं च विद्यामोदैरहृष्टताम् । क्रूरदृक्काणसंयुक्तचन्द्रसुतदशा यदा । चौराग्निभूपतिभयं स्थानभ्रंशं महद्भयम् । उच्चराशिगतः सौम्यो नीचभागगतो यदि । राज्यं सुखं महत्कीर्त्तिं विनाशयति तत्क्षणात् । चन्द्रात्मजोऽपि नीचस्थः स्वोच्चभागसमन्वितः । अशुभफलमादौ तु शुभमन्ते प्रयच्छति" ।

अथ गुरुदशा "गुरोर्द्दशायां परमोच्चगस्य राज्यं महत्सौख्यमुपैति कीर्त्तिम् । मनोविलासं गजवाजिकृत्यं नृपाभिषेकं स्वकुलाधिपत्यम् । कुलीरगस्यापि गुरोर्द्दशायां भाग्यान्तरं भूपतिमाननाद्वा । विदेशयानं कनकाधिपत्यं दुःखैः परिक्लिष्टतनुर्मनुष्यः । आरोहिण्यां देवगुरोर्भवन्त्यां दशा तत्पदां कुरुतेऽर्थभूमिम् । गर्भक्रिया स्त्रीसुतराजपूजां स्वर्णार्थितः प्राप्तयशःप्रतापम् । जीवदशायामारोहिगयाभोगो मण्डलादिनाथो वा । द्विजभूपालरक्षणो मेधावी कान्तिमान् विनीतश्च । देवेन्द्रपूज्यस्य दशावरोहा करोति सौख्यं सकलेषु नाशः । सकलाङ्गकान्तिविशेषजालं नरेश्वरत्वं सकलं च याति । अतिनीचभागभाजो गुरोर्द्दशायां प्रभग्नकष्टबहुपुत्रः । अन्योन्यकृतवैरं कृषिनाशं याति परभृत्यः । मूलत्रिकोणनिलयस्य गुरोर्द्दशायां राज्यार्थभूमिसुतदारविशेषसौख्यम् । यानाधिरोहणमपि स्वबलाप्तवित्तं यज्ञादिकर्म्मजनपूजितपादपीठम् । गुरोर्द्दशायां स्वगृहं गतस्य राज्योऽर्थभूधान्यसुखाम्बरञ्च । मिष्टान्नगोवाजिमनोविलासं काव्यादिपुराणागमवेदशास्त्रम् । गुरोर्द्दशायामतिशत्रुराशिं गतस्य दुःखं समुपैति शोकम् । विषादभूम्यर्थकलत्रनाशं नृपाग्निचौरैर्बहुदुःखपीडाम् । गुरोर्द्दशायामरिराशिगस्य क्षेत्रादिवित्तं शयनाम्बरञ्च । नरेशसम्मानमुपैति नित्यं स्त्रीवश्यतामप्युदरार्त्तिम् । प्राप्तो दशायामतिमित्रराशिं गतस्य जीवस्य नरेन्द्रपूज्यम् । स्वटङ्कभेरीरवयानघोषं दिगन्तराक्रान्तसमस्तभाग्यम् । मित्रर्क्षगस्यापि गुरोर्द्दशायां नरेशमैत्रीं समुपैति कीर्त्तिम् । विद्याविवादे जयसत्सौख्यसुगन्धवस्त्रपरोपकारम् । समर्क्षगस्यापि गुरोर्द्दशायां सामान्यतो भूपतिदत्तभाग्यम् । कृषक्षेत्रगोभूमिमनोविलासं मित्रार्थराजस्तुतिभूषणाप्तिम् । नीचखेचरसंयुक्तजीवदाये मनोरुजम् । परमेष्ठ्याप्रसादञ्च पुत्राणाञ्च विरोधिताम् । उच्चखेचरसंयुक्तगुरुदाये महत्सुखम् । अनेकगोपुरादीनां निर्माणं नृपपूज्यताम् । पापान्वितस्यापि गुरोर्द्दशायां करोति पापं कृद्वान्तरस्थम् । गृहं वहिः पुण्यफलं विशेषात् भूस्वर्णदारात्मजसौख्यमेति । शुभान्वितस्यापि गुरोर्द्दशायां नरेशलाभं

बहुलाम्बरं च । दानेन वित्तं नृपमानमाह्वा यज्ञादिसंमार्गविशेषलाभम् । पापेक्षितस्यापि गुरोर्दशायां प्राप्तं सुखं किञ्चिदुपैति धैर्यम् । क्वचित्तु यशः क्वचिद्राज्यसौख्यं क्वचिद्धनं नाशमुपैति चान्ते । शुभेक्षितस्यापि गुरोर्दशायां देशान्तरे वित्तमुपैति भूपात् । देवार्चनं भूसुरतर्पणञ्च तीर्थाभिषेकं गुरुपूज्यताञ्च । केन्द्रगतजीवदाये राज्यं भूदारराजसम्मानम् । विविधसुखानन्दकरं बहुजनरक्षां प्रधानतां याति । लग्नगतस्य हि दशा पदं करोति जीवस्य सौख्यमन्नाम्बरभूषणाद्यम् । यानाधिरोहणमदद्विपवारवैश्च मत्तेभवाजिभटसङ्घयुतं करोति । चतुर्थकेन्द्रस्थितजीवदाये यानत्रयं भूपतिमित्रभावम् । भूपालयोगः यदि भूपतित्वं नो चेत्तदा तत्सदृशं करोति । कलत्रराशिस्थितजीवदाये दारार्थपुत्रार्थसुखं प्रयाति । विदेशयानं समरे जयञ्च धान्यं परत्रापि च पुण्यकर्म । कर्मस्थितस्यापि गुरोर्विपाके राज्याप्तिमाङ्गल्यनयसदासीम् । भूपालयोगे त्वथ चार्थपुत्रकलत्रसत्कर्मसु राजयोगम् । पञ्चमस्थगुरोर्दाये मन्त्रोपास्तिर्महत्सुखम् । सुताप्तिं राजपूजाञ्च वेदान्तश्रवणादिकम् । त्रिकोणसंस्थस्य गुरोर्दशायां स्त्रीपुत्रधान्यार्थविवेकबुद्धिम् । सद्वस्त्रयानाम्बरपट्टवस्त्रयानादिलाभं नवमे तु सौख्यम् । उच्चांशसंयुक्तगुरोर्दशायां भाग्योत्तरं राजसमानमेति । प्रतापसन्तानचिरत्नलाभं सर्वेषु सख्यं समुपैति सौख्यम् । नीचांशसंयुक्तगुरोर्विपाके भूपाद्भयं गुल्मविचर्चिकादीन् । स्थानच्युतिं बन्धुविरोधिताञ्च नृपाग्निचौरैः सङ्क्षोभकञ्च । अर्कगजीवदशायां सहसा ज्वरपीडितो भवेत् जीवः । जलाङ्कुरोगतप्तो दुःशीलत्वप्रभग्नसंसारः । आदौ गुरुदशाकाले नृपपूजां महत्सुखम् । मध्ये स्त्रीपुत्रलाभादि चान्ते कष्टं विनिर्दिशेत् । धनस्थितस्यापि गुरोर्विपाके धनायतिं भूपतिमानञ्च । विद्याविवादाद्भुतराजगोष्ठीं सर्वोपकारं विजयं सुखञ्च । नृपलब्धबहुमानं भ्रातृभिर्भूमिलाभं परयुवतिजनैर्धीदत्तगोभूमिवित्तम् । कृषिनयसनभूपागन्धमाल्याम्बराणि परकृतमुपकारं शुद्धतामेति शौर्यम् । तृतीयस्थगुरोर्दाये भ्रातृणां च सुखं धनम् । नृपदत्तं धनं सौख्यं गन्धमाल्याम्बरादिकम् । नीरोगतां पुत्रकलत्रलाभं बन्धारिपुस्थस्य गुरोर्दशायाम् । आदौ भवेदेवमथान्त्यपाके दारार्थचौरादिभयं सरोगम् । जीवो मरणस्थः करोति सौख्यं स्वबन्धुजनहानिम् । स्थानच्युतिं विदेशं प्रान्ते स्त्रीराजपुत्रसम्मानम् । लाभगजीवदशायां संप्राप्तौ राज्यलाभमुपयाति । बन्धुदारपुत्राद्भूपविरोधं स्वबन्धुविद्वेषम् । व्ययगतजीवदशायां प्राप्तौ वाहनादि समुपयाति । लभते विदेशयानं नानाक्लेशैश्च परिभूतः । पाके स्थानबलान्वितस्य च गुरोः क्षेत्रार्थदारात्मजान् संप्राप्नोति गजाश्ववस्त्रकनकच्छत्राम्बरं भूषणम् । दिग्वीर्यान्वितदेवनायकगुरौ लोके प्रसिद्धं तथा जीवे कालबलाधिके नृपवधूसम्मानितां याति सः । निसर्गवीर्यान्वितजीवदाये निसर्गतश्चातिसुखं महत्त्वम् । विद्याविलासं रतिकेलिसौख्यं भागीरथीतोयकृताभिषेकम् । वक्रं गतस्यापि गुरोर्दशायां महार्थतां याति सुतार्थदारान् । युद्धे जयं भूपतिमित्रतां च सुगन्धजाताम्बरभोगविलासम् । दिग्वीर्ययुक्तस्य गुरोर्विपाके कृपाकटाक्षेण महीपतीनाम् । समस्तभाग्यं समुपैति नित्यं देशान्तरे भ्राम्यति किञ्चिदेव । क्रूरषष्ट्यंशसंयुक्तगुरोर्दायेऽतिकष्टताम् । राजकोपापमानादीन् लभते नात्र संशयः । सौम्यषष्ट्यंशसंयुक्तगुरोर्दायेऽतिसौख्यभीम् । वाहनं बन्धुसम्मानं यत्नवैवाहिकं शुभम् । पारावतांशयुक्तस्य गुरोः पाके महत् सुखम् । सद्वस्त्रपट्टवस्त्रञ्च हेमविक्रियभूषणम् । पापद्रेक्काणयुक्तस्य गुरोर्दाये च बन्धनम् । कारागृहप्रवेशञ्च निगडं दारविग्रहम् । उच्चस्थोऽपि गुरुर्नीचराश्यंशकसमन्वितः । महाभाग्यं तु संप्राप्तं तत्क्षणादेव नश्यति । नीचस्थो देवपूज्योऽपि स्वोच्चांशकसमन्वितः । भाग्यक्षये तु संप्राप्ते भाग्यं याति तदा नरः”।

अथ शुक्रदशा । “सत्युच्चभृगुदशायां मत्तविलासप्रियार्थभोगी स्यात् । माल्याच्छादनभोजनशयनस्त्रीपुत्रधनयुक्तः । स्वोच्चस्थितस्यापि भृगोर्दशायां स्त्रीसङ्गमश्चार्थविवृद्धधर्मम् । पितुर्विनाशं समुपैति दुःखं शिरोरुजं भूपतिमानञ्च । आरोहिणी शुक्रदशा प्रपन्ना धान्यं वरालङ्कृतिकान्तिपूजाम् । प्रवृत्तिसिद्धिं स्वजनैर्विरोधं मातादिनाशं परदारसङ्गम् । भृगोः सुतस्याप्यवरोहकाले प्रवासवेश्यागमनं धनाप्तिम् । स्त्रीपुत्रबन्धार्त्तिमनोविकारं हृच्छूलरोगं मदनार्त्तिमेति । उद्वेगरोगतप्तः कर्मसु विफलेषु सर्वदाभिरतः । अतिनीचगतस्य दाये शुक्रस्यात्मार्थदारपुत्रार्त्तिम् । मूलत्रिकोणभाजो भृगोर्दशायां महाधिपत्यं स्यात् । क्रयविक्रयकृषधनवान् कीर्त्त्यन्वितो विधिज्ञश्च । स्वर्क्षगशुक्रदशायां

१।१४।११ "दानुं दामनम्" माघः भावे लु । ६दाने ७वर्णभेद न० "अर्थं न हस्तिर्दिव्येन दानुना" ऋ०१०।६१।७ "दानुना दानेन वर्णभेन वा" भा० "आदित्या दानु-नस्पती" ऋ० १।१३६।१ "दानुनः दामस्य" भा०क-र्मणि तु ।८देये धने च । "करत्सिक्षोमघवा दानुचित्राः" ऋ०१।१७४।७ "दानुभिर्देयैर्धनैश्चित्राः" भा०

**दान्त** त्रि० दम—कर्त्तरि क्त । १बहिरिन्द्रियनिग्रहकर्त्तरि "शान्तोदान्त उपरतस्तितिक्षुः श्रद्धावान् समाहितो भूत्वा-त्मन्यात्मानमवलोकयेत्" वेदान्तसारधृता श्रुतिः । दम-णिच्—क्त नि०। २दमिते ३शिक्षिते बलीवर्दादौ त्रि० ४दमनकवृक्षे पु० राजनि० । [न्द्रियनिग्रहे च ।

**दान्ति** स्त्री दम—क्तिन् । १तपःक्लेशादिसहिष्णुतायां २बाह्ये-

**दापित** त्रि० दा—णिच्—कर्म्मणि क्त । १साधिते २दण्डिते तथनके ३प्रतिवाद्यादौ च ।

त्रि०दा—णिच्—कर्म्मणि यत् । १दण्ड्ये २दापनीये च ।

**दाम** न० दो—खण्डने बा०करणे मन् । १पश्वादिबन्धनरज्जौ "स्रगदामैरिव चित्रिता" भा० भी०५७अ० । "सन्तानमा-ल्यदाम च तैरेव कुसुमैः कृतम्" हरिवं०१४५ अ० । भावे मन् २खण्डने । दम्यते अनुशिष्यते दम—कर्म्मणि घञ् बा०दीर्घः । लोके विश्वसंसारे दामोदरशब्दे दृश्यम् ।

**दामकण्ठ** पु० गोत्रप्रवर्त्तकर्षिभेदे तस्य गोत्रापत्यम् इञ् । दामकण्ठि तदीये यून्यपत्ये ततः उपका० द्वन्द्वे अद्वन्द्वे च बहुषु युवप्रत्ययस्य लुक् । कलशीकण्ठदामकण्ठाः दामकण्ठा वा इत्येवम् ।

**दामग्रन्थि** पु० मत्स्यराजविराटस्य सेनापतिभेदे "अथ मत्-स्योऽब्रवीद्राजा शतानीकं जघन्यजम् । कङ्कवल्लभगोपा-लादामग्रन्थिश्च वीर्य्यवान् । युध्येयुरिति मे बुद्धिर्व-र्त्तते नात्र संशयः" भा०वि०३१अ०

**दामचन्द्र** पु० द्रुपदनृपस्य पुत्रभेदे "धृष्टद्युम्नः शिखण्डी च दीर्घश्चिर्जनमेजयः । चन्द्रसेनो रुद्रसेनः कीर्त्तिधर्मा ध्रुवो धरः । वसुचन्द्रो दामचन्द्रः सिंहचन्द्रः सुते-जनः । द्रुपदस्य तथा पुत्रा द्रुपदश्च महास्त्रवित्" भा० द्रो० १५८ अ०

**दामन्** न०स्त्री दो—खण्डने करणभावादौ मनिन् । दोहन-काले पश्चादिपादबन्धनरज्जौ (छाँदनदड़ि) २मालायां ३रज्जुमात्रे अमरः बहुग्रन्थियुक्ते एकस्मिन् यत्र पशवो बध्यन्ते (दोका) ख्याते ४पदार्थे च "भाति स्म दामाग्रपदी-[illegible] [illegible] [illegible] [illegible]ऽपि मनन्तत्वात् न ङीप् । दामानौ दामानः स्त्रियां वा डाप् । दामे दामा इत्यादि

**दामनपर्वन्** न० दमनको दमनः दामनं पर्व यत्र । दमन-भञ्जनतिथौ १चैत्रशुक्लचतुर्दश्याम् २शुक्लाशीयद्वादश्या-दिषु च दमनशब्दे मूलं दृश्यम् । "चतुर्थेऽर्कविधुत्राशे तन्तुदामनपर्वणोः" नरसिंहपु० तन्तुपर्वशब्दे दृश्यम्

**दामनि** पु० दमनस्यापत्यम् इञ् । १दमनस्यापत्ये २आयुध-जीविसंघभेदे च ततः स्वार्थे दामन्यादि० छ । दामनीय तत्रार्थे बहुत्वे तु तद्राजत्वात्तस्य लुक् । दामनय इत्येव

**दामनी** स्त्री दामैव प्रज्ञा० स्वार्थे अण् अणि न नलोपः ङीप् । पशुबन्धनरज्जौ अमरः "दामनीदामभारैश्च केचित् कायावलम्बिभिः । कोलैरारोप्यमाणैश्च दाम-नीपाशपाशितैः" हरिवं०६६अ०

**दामन्यादि** पु० "दामन्यादित्रिगर्त्तषष्ठाद्छः" पा० छप्रत्यय-निमित्ते पा०ग० सूत्रोक्ते शब्दगणे स च गणः "दामनि औलपि वैजवापि औदकि औदङ्कि आच्यु-तन्ति आच्युतदन्ति शाकुन्तकि आकिदन्ति औडवि काक-दन्तकि शात्रुन्तपि सार्वसेनि बिन्दु वैन्दवि तुलभ मौञ्जा-यन काकन्दि सावित्रीपुत्र ।

**दामलिप्त** न० तमोलिप्तनगरे (तमलुक) हेम०

**दामलिह्** पु०दाम—लेढि लिह—क्विप् । १दामलेहके । तमा-त्मन इच्छति क्यच् दामलिह्यति ततः क्विप् । २आत्मनो दामलेहकेच्छौ "दादेर्धातोर्घः" पा०उपदेशे दादेरिति विशेषणात् अस्य उपदेशे दादित्वाभावात् न घः सि०कौ० ।

**दामाञ्जन** न० दाम्नः अञ्जनम् । अश्वादेः पादबन्धन-रज्जौ (पिछाड़ि) हेमच०दामाञ्जनमयन्त्रार्थे हारावली "दामाञ्जनस्खलितलोलपदं तुरङ्गाः" माघः ।

**दामिनी** स्त्री भीमो भीमसेनेभवत् दामा सुदामा नगः स एकदेशत्वेनास्त्यस्य "सञ्ज्ञायां मन्माभ्याम्" पा० इनि ङीप् । सौदामन्यां विद्युति ।

**दामोदर** पु० दाम बन्धनसाधनं उदरे यस्य । यशोदा-नन्दने कृष्णे तत्कथा "ततो यशोदा संक्रुद्धा कृष्णं कमललोचनम् । आनाय्य शकटीमूले भर्त्सयन्ती पुनः-पुनः । दाम्ना चैवोदरे बद्ध्वा प्रत्यबन्धादुलूखले । यदि शक्नोषि गच्छेति तमुक्त्वा कर्म साऽकरोत्" इत्युपक्रमे "स च तेनैव नाम्ना तु कृष्णो वै दामबन्धनात् । गोष्ठे दामोदर इति गोपीभिः परिगीयते" हरिवं० ६४अ० "विदारो रोहितोमार्गो हेतुर्दामोदरः सहः" विष्णु०स० । शाङ्करभाष्ये तु प्रकारान्तरेण व्युत्पत्तिर्दर्शिता यथा

"दमादिगुणधनेनोदरा उत्कृष्टा गतिर्यस्य तथा मन्यत इति दामोदरः। "दमाद्दामोदरं विदुरिति" महाभारते य-शोदया दाम्नोदरे बद्ध इति वा "दामानि लोकनामानि-तानि यस्योदरान्तरे। तेन दामोदरो देवः श्रीधरश्रीसम-न्वितः" इति व्यासवचनात् वा दामोदरः। "दमो ब-हिरिन्द्रियनिग्रहः तज्जन्यो दामः तस्योदमितस्य उन्न-मतावित्ति धातोर्भावे "ऋदोरप्"पा० अपि गुणे दपरत्वे च अरः अवगतिः गत्यर्थानां ज्ञानार्थकत्वात्तस्य विशेषण-मुदिति उत्कृष्ट इत्यर्थः तथा च दामो दमसाधकः उत् उत्कृष्टः अरः अवगतिः साक्षात्कारकरूपास्येति दामोदरः। उत्कृष्टा च गतिः धूमादिगतिमपेक्ष्यार्चिरादिः दमादिसा-धना अस्य अनुगस्येति दामोदरनामनिरुक्तिः। "तर्वोर्म-ध्यगतं बद्ध दाम्ना गाढं तथोदरम्। ततश्च दामोदरतां स ययौ दामबन्धनादिति" ब्रह्मपुराणम् इति आनन्दगिरिः। २अतीते अर्हद्भेदे हेमचन्द्र वर्द्धमानपुरवर्त्तिमहर्षे ३नदभेदे च। ४शालग्राममूर्त्तिभेदे तल्लक्षणं पद्मपुराणे यथा "स्थूलो दामोदरो ज्ञेयः सूक्ष्मचक्रो भवेत्तु यः। चक्रे तु मध्यदेशेऽस्य पूजितः सुखदः सदा"। ब्रह्मवैवर्त्तपुराणे "दामोदरस्तथा स्थूलो मध्यचक्रः प्रतिष्ठितः" प्रतिष्ठित इत्यत्र प्रकीर्त्तित इति क्वचित् पाठः। "दूर्वाभं द्वारसङ्कीर्णं पीतरेखायुतं शुभम्"। "पीतरेखा तथैव चेति" ब्रह्मपुराणे पाठः। ब्रह्मपुराणे"उपर्यधश्च चक्रे द्वे नातिदीर्घं सुखे विलम्। मध्ये च रेखा यस्यैका स च दामोदरः स्मृतः"। अन्यत्र "स्थूलो दामोदरो ज्ञेयः सूक्ष्मरन्ध्रो भवेत्तु यः। चक्रे तन्मध्यदेशस्थे पजितः शुभदः सदा"। ब्रह्मवै०प्रकृतिखण्डे "द्विचक्रं स्फुटमत्यन्तं ज्ञेयं दामोदराभिधम्"। मत्स्यसूक्ते "त्रिचक्रेणैनमतिस्थूलं लघु दामोदरं स्मृतम्"

दामोष्णीष पु० गोत्रप्रवर्त्तकप्रवरर्षिभेदे "दामोष्णीषस्य-बलिस्य पर्यादो वरजानुकः" भा० स० ४ अ०। युधिष्ठिर-सभासभ्योक्तौ। तस्यापत्यं कुर्वा०ण्य। दामोष्णीष्य तदपत्ये पुंस्त्री

दाम्पत्य न० दम्पत्योरिदं पत्यन्तत्वात् यक्। १दम्पति सम्बन्धिनि अग्निहोत्रादौ २दम्पत्योरन्योन्यप्रीतौ च "ब्रह्मार्थसकामस्तु यजेत ब्रह्मवर्चसम्" इत्युपक्रमे "वि-द्यावानस्तु गिरिशं दाम्पत्यार्थमुमां सतीम्" भाग०२।३।८।

दाम्भिक त्रि० दम्भेन चरति धर्मं ठक्। लोकेषु लोभादि ख्यापनार्थं धर्मचारिणि १वैडालव्रतिनि, २दम्भयुक्ते च। "पापरोगामिशस्तश्च दाम्भिको रसविक्रयी" मनुना रसविक्रयकर्मविपाकः दाम्भिकत्वमित्युक्तम्। "दाम्भिको दुष्कृतः प्राज्ञः शूद्रेण सदृशो भवेत्" भा०अ० २१५ अ०। ३बकपक्षिणि पुंस्त्री०राजनि०।

दाय दाने भ्वा०आत्म०सक०सेट्। दायते अदायिष्ट अदा-यिढ्म् अदायिध्वम्। ऋदित् चिङ् अददायत-त।

दाय पु० दा—दाने भावे घञ्। १दाने "विभोदायः क्रतो येन व्यक्रीतो मित्र एव वा। मित्र एव प्रदातव्यो यथा दायस्तथा भवेः। अस्वामिना कृतो यस्तु दायो विक्रय एव वा" मनुः। दीङ्क्षये भावे घञ्। २क्षये ३अवयपालः ४स्थाने मेदि०। दो—खण्डने भावे घञ्। ४खण्डने श्रज्र-रत्ना०५योत्सहनभाषणे मेदि०। तस्य परोक्षस्य खण्ड-नरूपत्वात् तथात्वम्। दा—दाने कर्मणि घञ्। ६देये धनादौ "ते तत्र विविधान् दायान् विजयार्थं नरेश्वराः" भा०आ०१८४ अ०। "संख्याः सुखारसंस्थितो द दायाः शुभायथा" काम०नीति० "दायस्तु विविधं तस्यै स्त्रण्णु मे वदतोऽनघ। यस्मार्थं राजभिर्दत्तं सुश्नातं धन मक्षयम्" भा०स०५१अ०। ७विवाहकाले कन्यायै दीय-माने यौतुकादिधने कन्यादानकाले जामात्रादिभ्यो दत्ते धने ८तातान्नविवादौ समाहृतब्रह्मचारिभ्यो दत्तीयमाने धने च १० विभाज्यपैतृकादिधने च दायभागशब्दे दृश्यम्।

दायक त्रि०दा—दाने ण्वुल्। १दातरि "तावतां गोसहस्राणां फलं प्राप्नोति दायकः" भा०व०१८१अ० "चौराणां भक्त-दायकाः" मनुः। दो—खण्डने ण्वुल्। २खण्डके च। दायेन धनेन कार्यति के-क। ३दायादे "स्वद्या इति समाख्याता यजमानस्य दायकाः" स्वद्याम् दायका दायादा इत्यर्थः।

दायबन्धु पु० दाये बन्धुः। भ्रातरि शब्दरत्ना०

दायभाग पु०दायस्य सम्बन्धिविभागो यत्र। अष्टादशविवादा-न्तर्गते विवादपदभेदे तत्स्वरूपं जीमूतवाहनकृते दायभागे यथा "अथ दायभागो निरूप्यते तत्र नारदः "विभागो-ऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते। दायभाग इति प्रोक्तं तद्विवादपदं बुधैः"। पितृत आगतं पित्र्यं तत्र पितृ द्वारेणोपजातस्वत्वमुच्यते। पित्र्यस्येति पुत्रैरिति च द्वयमपि सम्बन्धिमात्रोपलक्षणं सम्बन्धिमात्रेण सम्ब-न्धिमात्रधनविभागेऽपि दायभागपदप्रयोगात् अतएव दायभागं विवादपदरूपतया नारदोक्तिः आत्मादिधन-

तथा च मिताक्षराकारः "विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिणः" इत्याह । अत्रापि पितृपदं सम्बन्धिमात्रोपलक्षणमन्यत्रापि दायशब्दप्रयोगात् । विभक्तव्यं विभागार्हमित्यर्थः अन्यथैकपुत्रादिस्वामिके विभागाभावाद्दायशब्दवाच्यता न स्यात् । यत्तु जीमूतवाहनेन (दीयत इति व्युत्पत्त्या दायशब्दो ददातिप्रयोगश्च गौणः मृतप्रव्रजितादिस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्तिफलसाम्यात् । न तु मृतादीनां तत्र त्यागोऽस्ति । तस्मात् पूर्वस्वामिसम्बन्धाधीनं तत्स्वाम्योपरमे यत्र द्रव्येऽन्यस्य स्वत्वं तत्र निरूढोदायशब्द) इत्युक्तं, तत्र सुन्दरम् निरूढत्वाङ्गीकारे दायददातिशब्दयोर्गौणत्वोपन्यासानर्थक्यात् । सर्वथाऽवयवार्थराहित्ये हि निरूढत्वम् । न च योगरूढत्वम् अवयवार्थबाधस्य स्वयमेवोपन्यासात् गौणमवयवार्थं परिकल्प्य तदङ्गीकारस्य निष्प्रयोजनत्वमन्योन्याश्रयत्वमनुभवविरोधो व्याघातश्च । तत्स्वाम्योपरम इति च [illegible]नापि स्वत्वस्योपपादयिष्यमाणत्वादव्यापकम् । [illegible] विभागशब्दस्त्वनेकस्वाम्यानां द्रव्यसमुदायविषयाणां तत्तदेकदेशे व्यवस्थापने शक्तः । अतएवैकपुत्रादीनां पित्रादिधनस्वाम्ये विभागशब्दाप्रयोगो दायोऽनेन लब्ध इत्येव च प्रयोगः । यत्रापि चैकं दासीगवादि बहुसाधारणं तत्रापि तत्तत्कालविशेषनियतदासीदोहनादिना तस्य तस्य स्वत्वव्यञ्जनादस्त्वेकदेशस्वाम्यव्यवस्थापनरूपो विभागशब्दार्थः । अतएव "एकां स्त्रीं कारयेत्कर्म यथांशेन गृहे गृहे" इति "बहूनां कूपवाप्यस्त्वनुसारेण गृह्यते" । "युक्त्या विभजनीयं तदन्यथानर्थकं भवेदिति" च बृहस्पत्यादिवचनेषु वक्ष्यमाणरीत्या तदुपपादयिष्यते । स च दायो द्विविधोऽप्रतिबन्धः सप्रतिबन्धश्च । पुत्रादीनां पित्रादिधने पुत्रत्वादिनैव सत्यपि स्वामिनि पित्रादौ जन्मनैव स्वत्वोत्पत्तेः स तेषामप्रतिबन्धो दायः स्वामिसद्भावस्याप्रतिबन्धकत्वात् । यस्तु विभक्तस्यासंसृष्टिनोऽपुत्रस्य मृतस्य भ्रात्रादीनां तद्धनरूपो दायः स सप्रतिबन्धः स्वामिसद्भावस्य प्रतिबन्धकस्यापगम एव तत्र स्वत्वोत्पत्तेः । ननु सर्वोऽपि सप्रतिबन्ध एव दायः । स्वामिसद्भावे पुत्रादीनामपि जन्ममात्रेण स्वत्वस्य वक्तुमशक्यत्वात् । तथाहि । यदि जन्मनैव पुत्रादीनां पित्रादिधने स्वत्वं स्यात्तदुत्पन्नमात्रस्य पुत्रादेस्तत् साधारणमिति तदनुमतिं विना द्रव्यसाध्येष्वाधानादिषु पित्रादीनामनधिकारापत्तौ "आत्मपुत्रः कनकेनोऽग्नीनादधीतेति" श्रुतिविरोधः । किञ्च विभागात् प्राक्पित्रादिप्रसादलब्धस्याविभाज्यत्ववचनं व्यर्थं स्यात् । तद्धि पित्रा पुत्रान्तरानुमत्या यदि दत्तं सर्वैरेव दत्तमिति विभागप्राप्त्यभावादेव प्रतिषेधोऽनर्थकः । अननुमत्या तु साधारणद्रव्यस्य दानमेव न सम्भवतीति पित्रादिप्रीतिदत्तत्यादिवचने युक्तिरयुक्ता । एवं पुत्राद्यनुमतिमन्तरेण स्त्र्यादीनामपि भर्त्रादिभिः प्रीतिदानस्यासम्भवात्तदनुमतौ तु तैरपि दत्तत्वात् । "भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत् । सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते इति" वचने यथाकाममश्नीयाद्दद्याद्वेत्यनेनाविभाज्यत्वं भर्तृप्रीतिलब्धस्य यदभिहितं तदपि व्यर्थम् । न चेदमविभागावस्थायां प्रीतिदानं तस्य चाविभाज्यत्वञ्च प्रतिपादयति किन्तु स्थावरेतरे यद्दत्तमित्यन्वयाद्विभागोत्तरमपि भर्त्रा स्त्रियै स्थावरप्रीत्या देयमस्मानाद्दत्तमपि तेन पुत्रादिभिरपहृत्य विभजनीयमस्थावरन्तु न पत्याहर्त्तव्यमित्यनुवादमात्रम् स्थावरस्य स्त्रियै प्रीतिदानप्रतिषेधमात्रं तात्पर्य्येण बोधयतीति शङ्कनीयम् । तथान्वयस्य व्यवहितयोजनाप्रसङ्गेनायुक्तत्वात् । स्थावरप्रीतिदानप्रतिषेधमात्रतासमर्पकत्वेऽन्यांशस्यानुवादमात्रं व्यर्थत्वापरपर्य्यायस्यापद्यते ।

अथ "मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः । स्थावरस्य तु सर्वस्य न पिता न पितामहः" । तथा "पितृप्रसादाद् भुज्यन्ते वस्त्राण्याभरणानि च । स्थावरन्तु न भुज्येत प्रसादे सति पैतृक इति" वचनमध्यं विभागप्राक्कालीनस्थावरप्रसाददानप्रतिषेधपरं वाच्यं मणिमुक्तादिप्रसाददानानुमतिपुरःसरं तत्प्रतिषेधाभिधानात् अन्यथा तस्यानुवादमात्रत्वेन वैयर्थ्यापत्तेः । तथा च जन्मना पुत्रादीनां स्वत्वान्मणिमुक्तादिषु तदनुमतिमन्तरेणापि दाने पितुः स्वातन्त्र्यम् । स्थावरे तु तदनुमत्यैवेति विशेष इति वचनद्वयार्थस्य वाच्यत्वाज्जन्मना स्वत्वमायातीति, नैवम् तस्य पितामहोपात्तस्थावरविषयत्वात् । अतीते पितामहे तत्स्वाम्यनाशात्पितापुत्रयोः साधारणे तदीयद्रव्यस्वत्वेऽपि स्थावर एव पुत्रानुमत्यपेक्षा मणिमुक्तादौ तु नेति तदर्थात् । यत्तु गौतमवचनम् "उत्पत्त्यैवार्थस्वामित्वं लभते इत्याचार्य्याः" इति । जन्मनः स्वत्वहेतुत्वे मिताक्षराकृता प्रमाणत्वेनोपन्यस्तं तद्दायभागदायतत्त्वकृता व्याख्यातमेव ।

युक्तं यत्तु मन्यथा। विदितोऽर्थागमः शास्त्रे तथाऽर्जने पृथक् पृथगिति"। शास्त्रे "स्वामी रिक्थक्रयेत्यादौ" बाधा-रहिताधारणरूपोऽर्थागमः स्वत्वोपायः पृथक् पृथग्वर्णि-तस्तथा विदितो' लौकिकत्वे तच्छास्त्रानर्थक्यं स्याल्लो-कविदितत्वादित्यर्थः। अन्यत् स्पष्टम् यथावर्णमिति स्मृति-चन्द्रिकायां पाठः। पूर्वपाठस्तु मदनरत्नलिखितः। अथ यद्यस्य यथेष्टं विनियोक्तुं तत्तस्य स्वमिति लोकप्रसिद्धेर्य-थेष्टविनियोज्यत्वं स्वत्वमिति चौर्य्याद्यर्जितेनातिप्रसङ्गस्तत्र चौरादेर्यथेष्टविनियोज्यत्वाभावाद्विनियोगकाले त्रासादि-दर्शनात्। अतएव सन्देहोऽप्युपपन्नः सुवर्णत्वादितुल्य-त्वाभावात् स्वत्वस्य। नैवम् असम्भवात्। शास्त्रेण सर्वस्य कुटुम्बभरणादौ विनियोगविशेषनियमाद्यथेष्टविनियोग-विषयत्वस्य क्वाप्यप्रसिद्धेः। तदप्याह संग्रहकारः श-ङ्खोपन्यासपुरःसरम् "न च समुच्यते तद्यत् स्वेच्छया विनियुज्यते। विनियोगोऽस्य सर्वस्य शास्त्रेणैव निय-म्यते इति"। अत्र पूर्वार्द्धं शङ्खोपन्यास उत्तरार्द्धं तत्परिहारः। न च [illegible]स्वत्वादिवदुत्पत्त्यैवार्थस्वामित्व-मिति गौतमवचने उत्पत्त्यापि जन्मापरपर्य्यायायाः स्वत्व-हेतुत्वोक्तेः सत्यपि स्वत्वे तदुपायानाञ्च शास्त्रैकसम-धिगम्यत्वे जन्मना पुत्रादेः पित्रादिधने स्वत्वमस्त्येवेति वाच्यम् तस्यानेकदूषणैरन्यथा व्याख्यानस्य प्रागेवोक्त-त्वात्। इदमेवाभिसन्धाय धारेश्वरेणापि शास्त्रैक-समधिगम्यमेव स्वत्वमिति सिद्धान्तितम्। अपि च। जीव-त्यपि पित्रादौ पुत्रादेस्तद्धने जन्मना स्वत्वे तदनिच्छाया-मपि पुत्रादीच्छयैव विभागः स्यात्। अस्वातन्त्र्यवचना-न्नैवमिति चेत् न तथा सति दृष्टादृष्टविरोधमात्रं अनेहाव्यवहारस्तु सिद्ध्येदेव। यथा पित्रादिभिः सह पुत्रादिभिस्तुल्यव्यवहारे प्रवर्त्त्यमाने तेषां दृष्टादृष्टयोः श्रेयोविघातमात्रं शिष्ये पितुः पुत्र इत्यादि वचनार्थ इति प्राक्प्रपञ्चितं तथात्रापि स्यात्। अस्त्विति चेन्न सकलनिबन्धविरोधात्। कश्चिज्जन्मनैवेति प्राचीनग्रन्थ-लिखनमपि जन्मनिबन्धनत्वात्पितापुत्रादिसम्बन्धस्य पितृ-मरणस्य च तत्स्वत्वापगमहेतुत्वेन परम्परया वर्णनीयम् किञ्च। ऊर्द्ध्वं पितुश्चेत्यादि मनुवचनं जन्मना पुत्राणां स्वत्वपरं जीवति पितरि सत्यपि पुत्राणां स्वाम्ये तदि-च्छया विना न विभागः ऊर्द्ध्वन्तु स्वेच्छयेति विभागनिषे-धार्थं तदिति वाच्यं तथात्वाऽलम् असाम्यपरत्वापत्तेः। न तु पितृमरणकालविभागार्थमिति युक्तम्। इत्यर्थ-

दिविभागस्योक्तव्यवस्थानुपपत्तेः। नापि नियमविधि-र्विभागस्य "एवं सह वसेयुर्वा पृथग् वा धर्म्मकाम्यया" इति मनुना विकल्पाभिधानात्। काम्यविधौ च पितुरुपर-मानन्तरकाल एव विभागो नैमित्तिकस्य निमित्तानन्तर्य्य-बाधोऽयं स्यात्। आर्त्तिद्वयव्याप्ताप्यवियोगार्थमिच्छारूप विशेषविरोधस्यालाभाभावात्। अतो जीवतोः पित्रोस्त-द्धने स्वाम्यं नास्ति किन्तु परतयोस्तयोरिति तत्कालीना-स्वत्वज्ञापनार्थं मन्वादिवचनं विभागस्तु स्वातन्त्र्यात्त-त्कालीन इच्छाप्राप्तोऽनूद्यते। तथा चैतद्वचनविरोधादपि न जन्मना स्वत्वं वक्तुं शक्यम्। उपरमपतितत्वादि-कमपि पित्रादिस्वत्वनाशकारणं कथ्यते। तस्मात् पित्रादिस्वत्वनाश एव तद्धने पुत्रादीनां स्वाम्यं न तत्-स्वत्वसमकालीनमिति स्वाम्यादिसद्भावस्य [illegible] प्रति-बन्धकत्वात् सर्वोऽपि सप्रतिबन्ध एव दाय इति [illegible]-मनुपपन्नमिति। अत्रोच्यते। यदि स्वत्वापगम पुत्रादीनां तद्धने स्वत्वं तर्हि निर्दोषे पित्रादौ जीवति तेषां धनसाध्यवैदिककर्मस्वनधिकारप्रसङ्गे "जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यादि श्रुतिविरोधस्तुल्यः स्व-कपोलकल्पितहेत्वाभावसमर्थितस्त्वयैतदनुरोधेन श्रुति-सङ्कोचोऽयुक्तः। आहिताग्निविष्टप्रथमयज्ञे पित्रादौ जीवत्यपि पुत्रादीन् प्रति तत्प्रवृत्त्यविशेषात्। सकल-याज्ञिकशिष्टानां तदनुष्ठानदर्शनाच्च। जातपुत्रकृष्ण-केशपदाभ्यां वयोऽवस्थानतिक्रमस्यैव विवक्षा न तु तयोर-व्यवस्थितयोः स्वरूपेणेति विरोधाधिकरणे भाष्यवार्त्ति-कादौ स्थितत्वात्। न च यथा पुत्रानुमत्या पितुर्भव-त्यते तदधिकारस्तथा मन्मतेऽपि पुत्रादीनामपि पित्रा-द्यनुमत्येति वाच्यम्। यतो द्वयोरपि मते पितुः स्वत्वस्य धने विद्यमानत्वात् स्वत्वत्यागरूपप्रधाननिष्प-त्तिरविहता भवन्मते तु पुत्रादीनां स्वत्वस्यैवाभावादनु-मतेश्च स्वत्वजनकत्वाद्यागादिप्रधाननिष्पत्तिरेव कथम्। वस्तुतस्तु पितुः पुत्रानुमतिरपि नापेक्षिता स्वात-न्त्र्यात्। पित्राद्यनुमतिस्तु पुत्रादेरपेक्षिता पारतन्त्र्या-दित्येतावान् विशेषो यथा स्त्रियाः स्वधर्मेऽपीष्टा-पूर्त्तादिव्रतादौ भर्त्तुरनुमतिस्त्वारम्भकत्ववचनात्। अननुमतौ तु स्वतन्त्रः प्रत्यवायो वैगुण्यं वा कर्म्मणि न तु प्रधानस्वरूपानिष्पत्तिः। पित्राद्यनुमतेः स्वत्वोत्पाद-कत्वे तदनुरोधात्कल्प्यमानमलौकिकमप्रामाणीयम्। त-स्माच्छास्त्रैकसमधिगम्येऽपि स्वत्वे जन्मस्वत्वपक्षोऽपि

रिक्थादिवचनादधिगमादिपदेन संग्रह [illegible]ति स्वतिपुरोधस्थितावारविषयस्य निर्दोषे जीवत्यपि पित्रादौ पुत्रादिवत्साध्वनुज्ञानाधिकारस्यानुरोधात्। वस्तुतस्तु लौकिकमेव स्वत्वं लोके च जातमात्रस्यैव पुत्रादीनां पित्रादिधने स्वाम्यव्यवहारोऽस्यैवामपीति बाधयिष्यामः। यत्र पित्रादीनामनुमत्ययोग्यपुत्रादिसाधारण्यस्वत्वे वचनमनुमतिमन्तरेणाधानादिकं स्यादित्युक्तं तदनुमतियोग्येष्वपि पुत्रादिषु स्वातन्त्र्यात्पित्रादीनां न तदनुमत्यपेक्षा किन्तु तानुमत्ययोग्येष्विति परिहृतप्रायमेव तद्विधिवशादेवाधिकारोऽवगम्यत इति तु विश्वेश्वराचार्य्यः। उत्पत्त्यैवार्थस्वामित्वमिति गौतमवचनस्य रघुनन्दनाभ्यामाराध्याभ्यामरिकोत्पत्तिस्वत्वहेतुत्वं न [illegible]व्याख्यानं तत्तदपि व्यर्थमेव। यत्तु मनुवचनमपि स्मृतिचन्द्रिकोक्तव्याख्यैव साधीयसी। कल्पतरुकृतव्याख्यायान्तु विद्यादुपात्ताध्याहारेऽनुपस्थितभूयःपदाध्याहारः प्रसज्येत। जन्मपदाध्याहारस्तु पुत्रत्वाद्याक्षेपस्थितेरत्राध्याहाराद्य नायुक्तः। तेन मूलपदस्य स्वानुरोधान्नारददेवलादिवचनानामेवास्वातन्त्र्यपरत्ववर्णनमुचिततरम्। यदप्युक्तं प्रीतिदत्तस्याविभाज्यत्ववचनानि जन्मना स्वत्वाभ्युपगमेऽनुपपन्नानीति। तदपि न अनुमत्यभिप्रायेण स्थावरप्रीतिदानाभावस्थिरीकरणार्थतयोपपत्तेः। स्वातन्त्र्याद्वा पितुरनुमतिमन्तरेणापि तेन दत्ते स्थावरव्यतिरिक्ते पुत्राणामविभाज्यत्वमुच्यते। अतएव स्थावरे विशेषवचनम् "स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम्। असम्भूय सुतान् सर्व्वान् दानञ्च न विक्रयः" इति। मणिमुक्ताप्रवालानामित्यादिवचनन्तु जन्मना स्वत्वपक्ष एवोपपन्नतरम्। न च पितामहोपात्तस्थावरमात्रविषयत्वमिति युक्तम्। न पिता न पितामह इत्युपक्रमात्। पितामहस्य हि स्वार्जितमपि पुत्रे पौत्रे च सत्यपि न देयमिति वचनं जन्मना स्वत्वं ज्ञापयति। यथा परमते मणिमुक्ताप्रवालादीनां पैतामहानामपि पितुरेव स्वत्वन्तत्कारणसत्त्वात्तथास्मिन् मतेऽपि पुत्रादीनामपि जन्मना स्वत्वे साधारण्येऽपि पितुर्दानाधिकार इत्यविशेषः। तथात्मपैतृके पैतामहे च द्रव्ये पुत्रादीनां यद्यपि जन्मनैव स्वत्वं तथापि पितुरावश्यकेषु धर्म्मकार्य्येषु वाचनिकेषु च प्रसादद्दानकुटुम्बभरणापद्विमोक्षादिषु च स्थावरव्यतिरिक्तद्रव्यविनियोगे स्वातन्त्र्यमिति ध्येयम्। स्थावरादौ तु स्वार्जितेऽपि पित्रादिपरतन्त्रत्वात् न पुत्रादिपारतन्त्र्यं तत्रैव। "स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम्। असम्भूय सुतान् सर्व्वान् दानञ्च न विक्रयः। ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः। वृत्तिञ्च तेऽभिकाङ्क्षन्ति न दानञ्च न विक्रयः" इत्यादि वचनात्। अस्यापवादो वक्ष्यते यत्र स्वत्वस्य शास्त्रैकसमधिगम्यत्वाभावे च जन्मनः क्वापि स्वत्वहेतुतानभिधानात् कथञ्जन्मना पुत्रादीनां पित्रादिधने स्वत्वस्वीकार इत्युक्तम्। तत्तु शास्त्रैकसमधिगम्यत्वमभ्युपेत्यापि गौतमादिवचन उत्पत्तेरपि स्वत्वोक्तेः परिहृतमेव प्राक्। वस्तुतस्तु न स्वत्वस्य शास्त्रैकसमधिगम्यत्वं युक्तियुक्तम्। सर्व्वथा शास्त्रज्ञानगन्धर[illegible]तानां प्रत्यन्तवासिनां म्लेच्छादीनामपि मम स्वमिदं [illegible]न्यस्य स्वमिति व्यपदेशस्तत्कृतश्च क्रयविक्रयादिव्यव[illegible]रो दृश्यते। तेनान्वयव्यतिरेकाभ्यां क्रयादुत्पादकं [illegible]स्वामित्वमपि तदर्थेष्टविनियोगार्हत्वरूपं पदार्थ[illegible]रूपं वा प्रत्यक्षादिप्रमाणादेवावगतमित्यवश्यं वा[illegible]। एतत्तर्कोपष्टम्भोऽनुमानवाक्यप्रयोगोऽपि विज्ञानयोगिनोक्तः "स्वत्वं लौकिकं लौकिकार्थक्रियासाधनत्वाद्व्रीह्यादिवत् इत्यन्वयदृष्टान्तः। आहवनीयादीनां हि शास्त्रैकसमधिगम्यानां न लौकिकार्थक्रियासाधनत्वमस्तीति व्यतिरेकदृष्टान्तः। तेनान्वयव्यतिरेकी हेतुः। यद्यप्याहवनीयादीनामपि यागादिलौकिकक्रियासाधनत्वमप्यस्ति। तथापि तल्लोकप्रमाणकाग्न्यादिरूपेण नालौकिकाहवनीयादिरूपेणेति न व्यभिचारः। इह तु सुवर्णादिरूपेण न क्रयादिसाधनत्वमपि तु स्वत्वेनैवेति सुवर्णत्वादिना भरणाद्यर्थक्रियासाधनत्वात्तद्यथालौकिकं रूपमेवं स्वत्वमपि सर्व्वानुगतं लौकिकमेव तद्वत्त्वेन क्रयादिक्रियानिर्व्वाहो लोके। न चैवं स्वामी रिक्थक्रयादिकृतीनां लोकसिद्धार्थानुवादकत्वेनानर्थक्यापत्तिरिति वाच्यम्। धर्म्माधर्म्मोपयोगितया व्याकरणस्मृतावनादियाचकत्वतद्भावरूपसाधुत्वासाधुत्वविवेकस्येव तदुपपत्तेः। साधुशब्दाधिकरणे च तदुपवर्णितं यथा [illegible]व्यवहारिणां लोकानामविदितं लौकिकमेव साधुत्वं शास्त्रेण विविच्यते। अतस्त्वलौकिकसाधुत्वं साधुभिर्भाषितव्यमित्यादिविधानयोग्यान्यथाप्रमाणादित्यादि। एवमत्रापि। तथा च नयविवेके भवनाथः "लोकसिद्धस्यार्थस्य-

म्यादि अतएवानित्यं प्रथमश्लोकीविषयव्यवस्थितं लक्षितव्यमाणौ स्मृतिव्याकरणादिस्मृतिवदिति । अन्यादीनामादिपदेन क्रयादिपरिग्रहणम् । व्याकरणादित्यादिपदेन सङ्गीतरत्नपरीक्षाशास्त्रिकाणां परिग्रहणम् । रागादीनामपि हि लोकसिद्धानामेवानभियुक्तान् प्रति विवेकार्थमेव तल्लक्षणकथनमित्युक्तं स्मृत्यधिकरणे आचार्य्यचरणैः । स्वामी रिक्थेत्यादिवचनन्तु प्रागेव व्याख्यातम् । रिक्थशब्दस्तु निष्प्रतिबन्धदायपरः संविभागशब्दश्च सप्रतिबन्धदायपर इति मिताक्षरायां विज्ञानेश्वरेण व्याख्यातम् । स्मृतिचन्द्रिकाकृता तु रिक्थं पित्रादिधने पुत्रादीनां स्वामित्वापादकं जन्मनैवेति व्याख्याय संविभागः पित्रादिधने विशेषनिष्ठस्वामित्वसम्पादको विभाग इति संविभागशब्दो व्याख्यातस्तच्च स्वस्य सतो विभागात् स्वत्वहेतुत्वेन तत्प्रतिपादनानौचित्यात् । प्रादेशव्यवस्थापनमात्रं हि स्वत्वस्य विभागेन क्रियते । स्वत्वस्य तु स्वत्वहेतुत्वपक्षे स्वामिपदे वैयर्थ्यापत्तेः । अतएव च मिताक्षरायां विज्ञानेश्वराचार्य्यः 'विभागशब्दो ह्येकस्वामिकधनविषयः प्रसिद्धो नास्मदीयविषयो न प्रकृताविषय इति' । लोके पुत्रादीनां जन्मनैव स्वत्वं प्रसिद्धतरमेव । यदपि पत्नी दुहितरश्चेत्यादिवचनं तदपि स्वामिसम्बन्धनिबन्धनानेकदायहरप्राप्तौ लोकप्रसिद्धेऽपि स्वत्वे व्यामोहनिराशार्थम् । प्रायेण व्यवहारस्मृतीनां लोकसिद्धार्थानुवादकत्वमिति सकलनिबन्धृभिरभिधानात् । नियतोपायिकं स्वत्वं लोकसिद्धमेवेति भगवतोगुरोरपि सम्मतम् । लिप्सासूत्रे हि तृतीये वर्णके द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वमेव न स्यात् स्वत्वस्यालौकिकत्वादिति पूर्वपक्षाशङ्कामाशङ्क्य द्रव्यार्जनप्रतिग्रहादीनां स्वत्वसाधनत्वं लोकसिद्धमेवेति पूर्वपक्षः समर्थितस्तेन । न च द्रव्यार्जनस्य क्रत्वर्थत्वे स्वमेव न भवतीति याग एव न संवर्त्तेत । प्रलपितमिदङ्केनापि । अर्जनं स्वत्वं नापादयतीति विप्रतिषिद्धमिति' ग्रन्थेन । अस्यार्थष्टीकाकृता विवृत एवम् । यदा द्रव्यार्जननियमानां क्रत्वर्थत्वन्तदा नियमानां स्वत्वोपायतामिदं शास्त्रं न बोधयति क्रत्वर्थताबोधने व्यापृतत्वात् । तथा सति प्रतिग्रहादिप्राप्तस्य स्वत्वमित्यत्र प्रमाणाभावादस्वेन च स्वत्वाभावात्क्रत्वाभावप्रसङ्गात् कथं हि द्रव्यार्जननियमा भवेयुरिति पूर्वपक्षाशयः इति शङ्कार्थः । प्रलपितमित्याद्युत्तरग्रन्थार्थः । अर्जनप्रतिग्रहादेः स्वत्वहेतुताया लोकसिद्धत्वेन शास्त्रस्य तत्प्रतिपादकत्वाभावात् नियमानां क्रत्वर्थतैव तेन गम्यत इति न यागासम्भवो नियमानर्थक्यञ्चेति । सिद्धान्तेऽपि तेन स्वत्वस्य लौकिकत्वाभ्युपगमेनैव विचारप्रयोजनमुक्तम् 'अतो नियमातिक्रमः पुरुषस्य न क्रतोरिति' । अस्यार्थ एवं विवृतः । यदा द्रव्यार्जननियमानां क्रत्वर्थत्वन्तदा नियमार्जितेनैव क्रतुर्न नियमातिक्रमार्जितेन द्रव्येण । न तु पुरुषस्य नियमातिक्रमदोषः पूर्वपक्षे । सिद्धान्ते अर्जननियमस्य क्रत्वर्थत्वाभावात्केवलपुरुषार्थत्वात्नियमातिक्रमार्जितेनापि द्रव्येण क्रतुसिद्धिरप्रत्यूहा पुरुषस्यैव तु नियमातिक्रमदोष इति अनेन नियमातिक्रमार्जितस्यापि स्वत्वमभ्युपगतमन्यथा क्रतुसिद्ध्यभिधानविरोधात् । [illegible]ह्यधिकरणे कुमारीस्वामिनोऽप्यतभयतः स्वत्वं लौकिकमित्यभिमतमिति । तत्रत्यवार्त्तिकतन्त्ररत्नाभियोगभाजां सुलभमेव । अतएवाह शास्त्रदीपिकायां, पार्थसारथिः रागप्राप्तं तावदर्जनञ्च शास्त्रीयम् । रागतश्च पुरुषार्थतया प्राप्तेः प्रत्यक्षेणैवार्जितं द्रव्यं पुरुषप्रीणयत् पुरुषार्थं विज्ञायते न तदनुमाने क्रत्वेकशेषतया शक्यं विज्ञातुम् । तस्मात् पुरुषार्थं द्रव्यं क्रतुरपि पुरुषकार्य्याणामन्यतम इति कार्य्यान्तरवत् क्रतावप्युपयुज्यत इत्येतावान् विशेषः । ननु तस्यैवाक्तं तथा सति जीवनलोपात् क्रतुरेव न प्रवर्त्तेतेति प्रघट्टकेन । अत्रार्जनस्य शास्त्रीयत्वमिरस्यता स्वत्वस्य तदुपायानाञ्च लोकसिद्धत्वं स्पष्टतरमेवोक्तम् । अन्यदपि तेनैवोक्तम् । तस्मात् पुरुषार्थन्द्रव्यार्जनमेवञ्च दृष्टार्थम्भवति । नियमस्तु दृष्टाभावात्कामममदृष्टार्थः स्यात् । अदृष्टमपि पुरुषार्थार्जनविषयत्वात् । नियमस्य पुरुषगतत्वमेव कल्प्यते । तेनासावुपायान्तरेणार्जयन् प्रत्यवैतीति गम्यत इति । ततश्च स्वामी रिक्थेत्यादिवचनं लौकिकमेव रिक्थादीनां स्वत्वोपायत्वमनूद्य तदतिरिक्तोपायनिवृत्तौ तात्पर्य्यमित्यभविध्येति नानर्थक्यशङ्कापि तृप्तिसाधनभोजनान्नितदिक्क्रयवत् । द्रव्यार्जनमेव क्रत्वर्थपुरुषार्थत्वविचारोदाहरणमित्यस्तु पूर्वपक्षयुक्तितयोपन्यस्तः । स एव तत्रोदाहरणमित्येव भट्टगुरुमतयोर्भेदः स्वत्वस्य लौकिकत्वं तूभयसम्मतमिति निष्कर्षः । तस्मात् यथाभूतवादि तु सम्माभियोगवतामाकरे एव व्यक्तं प्रस्तुतानुपयोगादिह नोच्यते । एतेन चौर्य्यादिप्राप्तस्यापि स्वत्वं

वेदांशस्यानुपपन्नतरौ । ननु स्वत्वप्रतिपादकस्यार्जनवाक्यस्या- दावनापदि ब्राह्मणस्य राजदण्डोऽपि स्यादिति चेन्न दृष्टापत्तेः । न हि स्वधर्मत्यागिनो राजदण्डाभावः कस्यापि सम्मतः । स च कश्चित् सामान्यरूपेणोक्त एव दृश्यते कश्चिद्विशेषादाम्नात इत्यन्यदेतत् । अतएवालौ- किकस्वत्ववादिन इदमप्यपरदूषणमुक्तं चौर्य्यादिनिषेधस्य त्रितयप्रयोजनकतागौरवम् । पश्चाद्दासत्वादिस्वीकारगौर- वञ्च लौकिकस्वत्ववादिनस्तु पापप्रत्यवायमात्रपरत्वम् । तेषां स्वत्वानुपायत्वस्य लोके सिद्धत्वादिति रागप्राप्तनिषेधे पश्चाद्दासादिस्वीकारानापत्तेरिति लाघवमिति । तन्ना- स्माकं शास्त्रैकसमधिगम्ये स्वत्वेऽर्थे प्रतिग्रहादेस्तदनुपायत्वात्त- दर्जिते पितुः स्वत्वाभावः स्यादेवेति चौर्य्याद्यर्जितपि- तृधनाविभागवदसत्प्रतिग्रहाद्यर्जितस्याप्यविभाज्यत्वम् । लौकिके तु तस्मिन् इष्टे तेषामपि तदुपायत्वात् सिद्धं तद्विभाज्यमिति तन्नताचारोक्तं साध्वेव प्रयो- जनम् । इदमेवोपलक्षयन्ते । पूर्वपक्षे चौर्य्याद्यर्जित- पितृधनस्वीकारे यथा पुत्रकादीनामपि दण्डप्रायश्चित्तं भवत्येव तथाऽसत्प्रतिग्रहाद्यर्जितद्रव्यग्रहणेऽपीत्यपि प्रयोजनमवसेयम् अर्जयितुरेव प्रायश्चित्तमित्यभिधानेनो- चितत्वात् । इदन्त्विह विचार्य्यम् । स्वत्वस्य लौकिकत्वे चौर्य्यस्य लोके तदनुपायत्वे सिद्धे षड्भक्तानशनाद्या- पदि यच्चौर्य्यमनुमतं तेन चोरिते स्वत्वमुत्पद्यते न वा । नाद्यः लोकेऽनुपायत्वेनावधारितत्वात्तदुत्पत्तेरभ्युपगन्तु- मशक्यत्वात् । न हि प्रत्यक्षविरुद्धं शास्त्रसहस्रेणापि जलादेर्दाहजनकत्वादि बोध्यते । न द्वितीयः स्वत्वेन पञ्चमहायज्ञादिप्रधानानिष्पत्तेः । न च स्वत्वप्रतिघात- मात्रमेव तेन क्रियतां नान्यदलौकिकमिति वाच्यम् । शिष्टाचारविरोधात् न हि शिष्टाः पञ्चमहायज्ञाद्य- कृत्वा तदुपयुञ्जते "यदन्नः पुरुषो लोके तदन्नास्तस्य देवताः" इति स्मरणाच्च । अतएव विश्वामित्रः श्व- जाघनीं श्वपचगृहात् हृत्वेन्द्रादिदेवोद्देशेन त्यक्त्वा भोक्ष्यामीति समचिन्तयत् यदा यथादैवतन्तद्भागांश्चक्रे प्रस्तुतस्तदा तुष्टैरिन्द्रादिभिर्देवैः वृष्टा यस्य तत्- क्षणमेव प्रभूतमभूदित्याख्यायिका पुराणेषु वर्ण्यते । शास्त्रैकसमधिगम्ये तु स्वत्वे तथापत्सु चौर्य्यादेरपि स्वत्वोत्पादकत्वतदभावौ न विरुद्धौ । लौकिकस्वत्ववादि- नस्तूभयतःपाशारज्जुरियमिति । अत्र प्रति- विदध्मः । यद्यपि चौर्य्यस्य स्वत्वोत्पादकत्वम् लोकसिद्धं

तथाप्यनेनैव षड्भक्तानशनकाले षड्भक्तानशिनो विधानाद्गम्यते । स्वत्वमात्रस्य हि शास्त्रीयत्वे विरु- द्धत्वमतज्ज्ञानानां क्रयादिस्वत्वसाध्यव्यवहारानुप- पत्तेः । अतश्चौर्य्यनिषेधोऽदृष्टपापमात्रबोधक एव । चौर्य्यस्य स्वत्वोत्पादकत्वाप्रसक्तेर्न तदभावपरः । यथा ब्राह्मणत्वस्य सर्वत्र प्रत्यक्षत्वेऽपि जात्युत्कर्षस्थले शास्त्री- यत्वमेव । पुरुषेयत्तानियमस्य शास्त्रैकगम्यत्वात् । यथाहुराचार्य्याः "एतावन्मात्रमनिच्छानिकं प्रत्ये- तव्यम् यद्यायं पुरुषेयत्तानियमो लोकप्रमाणगम्य इति" । तत्रापि तावत् पुरुषपरम्पराजन्यव्यक्तौ ब्राह्मणत्व- मभिव्यज्यत इति व्यङ्ग्यव्यञ्जकभाव एव परं शास्त्रीय व्यञ्जकं ज्ञानयतस्तादृशव्यक्तौ ब्राह्मण्यं प्रत्यक्षमेव व्यक्तिप्रत्यक्षप्रत्यक्षजातिप्रत्यक्षसामग्रीसम्भारादिन्ये व- दन्ति । इह तु चौर्य्यमात्रस्यैव स्वत्वानुत्पादकत्वे गृहीतादृशस्य तस्य स्वत्वोत्पादकत्वेव शास्त्रेण बोध्यते न च प्रत्यक्षविरोधः । नहि प्रत्यक्षविरुद्धं शास्त्रसहस्रे- णापि बोधयितुं शक्यमिति वाच्यम् तस्यानुत्पादकत्व- मपि लोकात् । तादृशेन व्यवहाराभावादन्वयव्यतिरेक- गम्या स्वत्वस्य चौर्य्योपायकता नावगम्यत इत्येतावत् । तथा च पुत्रेष्ट्यादीनां लोकानवगतपुत्रादिजनकता यथा शास्त्रादवगम्यते तेषां दृष्टोपायान्तरजन्यतायामपि, तथेहाप्यस्तु । स्वर्गहेतुयागादीनामलौकिकमात्रस्योपायो दृष्टोपायाभावोऽप्यधिक इत्यन्यदेतत् । प्रतिबन्धकप्र- तिबद्धदाहादिजनकता यथोत्तेजकमन्त्राणामथर्वादि- शास्त्रगम्या लोकप्रमाणगम्यत्वात् उत्तेजकतायाश्च प्रति- बन्धकप्रतिबद्धकार्य्यजनकतातिरिक्ताया अनिर्वाच्यत्वात् । शक्तिनाशतदुत्पत्तिकल्पनायामतिगौरवात् । यत्तु जन्मना स्वत्वन्निराकुर्वता जीमूतवाहनेन 'कश्चिज्जन्मनैवेति जन्मनिबन्धनत्वात्पितापुत्रस्य सम्बन्धस्य पितृमरणस्य च कारणत्वात्परम्परया वर्त्तनमिति' प्राचीनलिखनाभि- प्रायमुक्त्वा कथन्तूत्पादनरूपेण पितृगतव्यापारेण पुत्रे स्व- त्वोत्पत्तिरित्याशङ्क्योक्तं 'अन्यव्यापारेणान्यस्य स्वत्व- विरुद्धं शास्त्रमूलकत्वादस्य । दृष्टञ्च लोकेऽपि दाने हि चेतनोद्देश्यकत्यागादेव दातृव्यापारात् सम्प्रदानस्य द्रव्ये स्वामित्वम् । न च स्वीकारणात् स्वत्वं लोकन्तुरेव दातृत्वापत्तेः । परस्वत्वापत्तिफलेन हि दानरूपता तच्च फलं सम्प्रदानाधीनम् । यथा हि देवतोद्देशेन त्यागं कुर्वन्नपि यजमानो न होता किन्तु तत्रैव त्यागस्य

निर्णीतएव विस्तरस्तु तत्रैव द्रष्टव्यः। कर्मकरानतिरिक्तक्रिया भृतिरेव हि परिक्रयः। एवमध्यापनेऽपि शिष्योऽध्यापकायाध्यापनभृतिमेव तदुपनीयमानमध्ययनान्तेऽर्पयन्ति। नियतभृतिकरणे तु भृतकाध्यापनमुपपातकम्। अतएव याजनाध्यापनयोः प्रतिग्रहाङ्गनियतत्वाच्चनिर्वेशाच्च पृथगभिधानमप्रयोजकत्वात्। तेन तयोरपि तुल्यमेवार्जनत्वम्। दैविकादिव्यवहारोऽप्यतएव ऋत्विगध्यापकदेये। यदपि भ्रात्रादिधने भ्रात्रन्तरादि स्वत्वोत्पादकत्वं तद्धनस्य तत्कालीनभ्रात्रन्तरादिजीवनस्य वा क्रममिति पुत्रादावपि पित्रादिनिधनतत्कालीनजीवनं वा स्वत्वोत्पादकमस्तु न प्रकृतं पुत्रादिजन्मनैवेत्युक्तम्। तदपि जन्मनोऽपि स्वत्वोत्पादकत्वस्यावश्यकत्वोपपादनादेव परिहृतम्। यच्चोक्तं 'ऊर्द्ध्वं पितुश्च' इत्यादि मनुवचनमपि जन्मनः स्वत्वापादकत्वेन घटते प्राग्विभागनिषेधार्थत्वे तस्यास्वार्थपरत्वापत्तेः विभागस्य दृष्टार्थत्वेन तद्विधानकालविधानयोरसम्भवात् विभागस्य पक्षप्राप्तस्य नियमार्थत्वे बहुवाक्यविरोधापत्तेः। तस्मात्पितरि सति मातरि च सति भङ्गस्वाम्याभाव उपरमयोरेव तयोः पुत्रादेस्तद्धनस्वाम्यमिति प्रतिपादनार्थमेव तद्वाक्यमिति। तदत्युक्तानाभिधानम् अस्वार्थविधानापत्तेस्तुल्यत्वात्। प्रागस्वातन्त्र्येण कालविधिपरत्वे बाधकाभावात्। इच्छाप्राप्तकालानुवादेऽपि व्यवहारशास्त्रत्वेनाविरोधात्। एतेन जातेष्टिवच्छोपि विरोधादि निमित्तानन्तर्यबाधकाभावात्पितुरुपरमानन्तरमेव विभागः प्रसज्येतेत्यपास्तम्। कालविधानेन पितुरुपरमस्य निमित्तत्वाबोधनाच्च। अन्यथा निमित्ते सति नैमित्तिकस्यावश्यकत्वात्पित्रोरूर्द्ध्वं विभागाकरणे प्रत्यवायोऽपि प्रसज्येत। पतितत्वपारिव्राज्ययोः पितृस्वत्वनाशोऽप्यधिकः जन्मना स्वत्वन्तुल्यमेव। पातित्ये तु प्रायश्चित्तानाचरण एव स्वत्वनाशो विभागानर्हता च। अन्यथा द्रव्यसाध्यं प्रायश्चित्तमपि पित्रोः स्वद्रव्येण न स्यात्। अतएव मातुर्निवृत्ते रजसीत्याद्यपि कालविधिपरमेव। न तु पातित्यादिवत्तत्र स्वत्वाभावः। स तु चोक्त एव विभागनिषेधाच्च भ्रात्रादावित्यादि वक्ष्यते। किञ्च। तदेवं पितृस्वत्वापगमएकः कालः अपरश्चानपगत एव पितृस्वाम्ये पितुरिच्छयेति कालद्वयमित्युक्त्वा मध्ये मिताक्षरोक्तं विभागकालत्रयं दूषयित्वा तस्मात्पतितत्वनिवृत्तत्वोपरमैः पितृस्वत्वापगम एकः कालः अपरश्च सति स्वत्वे तदिच्छात इति कालद्वयमेव युक्तमित्युपसंहरता जीमूतवाहनेनैव पितृस्वत्वानपगमेऽपि पुत्राणां विभागो स्वीकृतस्तत्र पुत्राणां पितृधने स्वत्वोत्पादः कथम्। कथञ्च जीवतोः पित्रोरस्वाम्यप्रतिपादकवचनैः सह न विरोधः। असत्त्वे विभागासम्भवात्कथन्तेषां विभागः। पितृस्वत्वापगमएवोर्द्ध्वं पितुरित्यनेन विवक्षितोऽतएव मृतपदस्यारित्यक्त्वोर्द्ध्वमित्युक्तम्। पितृस्वत्वापगमोर्द्ध्वमित्यर्थः पितृस्वत्वापगमश्च तन्निधनादिवत्तस्य पतितत्वनिस्पृहत्वाभ्यामपीत्यादि स्वग्रन्थे पूर्वापरविरोधश्च न कथम्। अत्राप्युपरतस्पृहत्वादिना पुत्राणां स्वत्वम्पितृधने भवतीति ज्ञापनादयमेकः काल इति उक्तम् तत्राप्युपरतस्पृहत्वादिनेत्यनेन पितृस्वत्वापगमएव यदि विवक्षितस्तदानपगते पितृस्वत्वे तदिच्छाऽपरः काल इत्यभिधानं विरुद्धम्। पितृस्वत्वापगमकालीनपुत्रादिस्वत्वमस्यैवार्जनस्य तदीयस्य स्वीकारात्पितृस्वत्वे सति पुत्राणां तद्धने स्वत्वस्वीकारः कथम्। तद्धानात्पितृमातृजोनिवृत्तिमात्रेण पितुः स्वत्वापगमे पूर्वद्रव्यस्वामिसम्बन्धाधीनं तत्स्वाम्योपरमे यत्र द्रव्ये स्वत्वन्तत्र निरूढो दायशब्द इति स्वोक्तदायशब्दार्थाभावात्पितृस्वत्वानपगमे यत्र विभागस्तत्र दायशब्दप्रयोगोऽपि दुरुह इत्यादि बहु व्याकुलो स्यात्। जन्मना स्वत्वस्वीकारे तु सर्वमनाकुलमित्यादि सुधीभिरूह्यम्। अतएव मिताक्षरादौ पूर्वस्वामिसम्बन्धाधीनं स्वत्वमन्यस्य यत्र धने तदेव दायशब्दवाच्यमित्युक्तञ्च तु पूर्वस्वाम्योपरमेऽपि तत्र प्रवेशितः। तच्चेदं द्विविधो दाय इति"।

यच्च जीमूतवाहनेनैव मिताक्षरोक्तम् विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानामेकदेशेषु व्यवस्थापनमिति विभागशब्दार्थः। न च सम्बन्धाविशेषात् सर्वेषां सर्वधनोत्पन्नस्य स्वत्वस्य द्रव्यविशेषे व्यवस्थापनं विभाग इति वाच्यमित्याशङ्क्य सम्बन्ध्यन्तरसद्भावप्रतिपन्नस्य सम्बन्धस्यावश्यकत्वेनैव विभागव्यञ्जकत्वस्वत्वापादकत्वात्। कृत्स्नपितृधनगतस्वत्वोत्पादविनाशकल्पनागौरवात्। यथेष्टविनियोगफलाभावेनानुपयोगाच्चेति दूषयित्वा उच्यते। "एकदेशोपात्तस्यैव भूहिरण्यादावुत्पन्नस्य स्वत्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतया अव्यवस्थितस्य गुटिकापातादिना व्यञ्जनं विभागः। विशेषेष्वकारं स्वत्वज्ञापनं वा विभाग इति अयुक्तमेवेत्युक्तम्"। तदप्यतत्त्वज्ञतोपज्ञम्

**दिक्पति** पु० ६त० । दिशां पत्यौ [illegible] दौ दिक्पाला-
शब्दे दृश्यम् । "पवनोदिक्पतिर्भो[illegible]माः खचरा-
चराः" संकल्पप्रारम्भमन्त्रः "वितर[illegible] दत्तु रखे दिक्-
पतिकमनीयम्" गीतगो० । "सूर्य[illegible] सोमः क्षमापुत्रः
सैंहिकेय शनिः शशी सोम्यश्चिद[illegible]न्ती च पूर्वादिदि-
गधीश्वराः" इत्युक्तेषु रव्याद्यो[illegible] ग्रहेषु ।

**दिक्पाल** पु० दिशं पालयति पालि[illegible]-अण् उप०स० । दिक्-
पतौ इन्द्रादौ "यत्नार्च्चयन्ति विधिना दिक्पालांश्चैव
कर्मिणः" पद्मपु० । कलश[illegible]ब्दे १७८१ पृ० दृश्य० ।

**दिक्शब्द** पु० दिशि दृष्टः शब्दः । दिग्वाचकशब्दे पूर्वाप-
रादौ तत्र देशकालादिपरो[illegible]ऽपि भूतपूर्व्वं गत्या दिग्वा-
चकत्वान्यथात्वम "अन्यारा[illegible]दितरर्त्तेदिक्शब्दाञ्चूत्तरपदा-
जाहियुक्ते" पा० 'दिशि दृष्टः शब्दो दिक्शब्दः तेन
सम्प्रति देशकालवृत्तिना योगेऽपि भवति" सि०कौ० ।

**दिक्शूल** न० दिशि दिग्भेदे गतौ शूलमिव । प्राच्यादिदिक्षु
गमने निषिद्धवारभेदे । "शुक्रादित्यदिने न वारुणदिशं
न ज्ञे कुजे चोत्तरां म[illegible] सोम दिने न शक्रककुभं
याम्यां गुरौ न व्रजेत् [illegible]जनीति विज्ञा यान्ति
मनुजा ये वित्तलाभा[illegible]गाः पुनरापतन्ति यदि
ते शक्रेण तुल्या अपि [illegible] ज्योतिःसारसंग्रहः ।
कथाश्चित्सुते "सोमे गुरौ दक्षिणाम । ईशाने व्यजने
चेव नैऋते मारुतं तथा । न गन्तव्यं सुराचार्ये प्र-
तीच्यां रविशुक्रयो." इति

**दिक्साधन** न० दिशः साध्यन्ते ज्ञानार्थम् अनेन । दिग्ज्ञान
साधने उपायभेदे तच्च कृत्याकौ दर्शितं यथा
"स्वपाङ्गुलैः संमितकर्कटेन वृत्तेन वा वृत्ततरं वि-
निश्च्य । स्यात्कृत्य शङ्कुमसुष्य मध्ये निवेशयेत् स्वाङ्ग-
मिताङ्गुलीभिः । चतुर्मिताभिश्च स्वअङ्कसमाभिः संस्पृ-
शीर्षं तु शलाकिकाभिः । तच्छङ्कुभा यत्र विशेदपैयाद्
वृत्ते क्रमात् स्तोऽवरुणेन्द्रकाष्ठे" स्वपाङ्गुलैः परिमितेन
कर्कटेन वृत्तेन वा वृत्तं विनिश्च्य तन्मध्ये द्वादशाङ्गुलं
शङ्कुं स्थापयेत् कीदृशं त्रिंशदङ्गुलमिताभिश्चतसृभि
रङ्गुभिः समानाभिः शलाकाभिः कल्पितचतुर्दिग्गत-
वृत्तस्वाभिः संस्पृष्टमस्तकम् एवं शङ्कुमपत्र साधयित्वा
तावन्मध्ये शङ्कोश्छाया पूर्वाह्णे यत्र यस्मिन् प्रदेशे
वृत्ते प्रविशति यत्र चापराह्णे वृत्ताद्बहिर्याति तत्र
चिह्नयोः क्रमात् प्रतीची प्राची च भवत इति
अत्र दिग्ज्ञानशब्दे वक्ष्यमाणम् "वृत्तेऽम्भः सुसमी-
कृतक्षितिगते [illegible] वि० वि० शाक्यं प्रमाणम् । तत्र
अत्रार्द्धसीमश्चोपपत्ति[illegible] चाविन्दा यथा "दोःकोटिभोम
भेदो न स्वरूपभेद इ[illegible] दोःकोटिवर्गयोगपद कर्णः ।०
वृत्तपरिधिस्य दिग्ज्ञाना[illegible]त्रं यावज्जीवमानाच्चतस्रः
शलाकाः कर्णा भवन्ति [illegible]पि देशे शङ्कुं निधाय शङ्कु
समितया रज्ज्वा मण्डल[illegible] दक्षिणं यत्र शङ्कुच्छाया
पतति स प्राचीति" [illegible] शङ्कुं संस्थाप्य पञ्च-
गुण तेनाधिकयापि रज्ज्वा [illegible] वृत्तं कार्य्यम् । अ-
न्यथा यत्राक्षभा पञ्चाङ्गुला तत्र [illegible]वृषसंक्रान्तौ द्वादशा-
ङ्गुलशङ्कोश्छायाप्रवेशस्तादृशे वृत्ते [illegible] स्यादेव तथाद-
शापि षोडशाङ्गुलमितेन वृत्तं कल्पितं तथा वृत्ते
कृते तावत् चैकेनैव प्रवेशेन शङ्कुसमत्वसाधनं दिक्साधनं
च सिध्यति । अतएव रामवाजपेयी शङ्कुमानाधिके
व्यासदले वृत्ते विशेद्यदि इत्याह एवं स्थूलप्राचीसाधनं
कृत्वा सूक्ष्मामपि शालिन्याह । "कर्के कीटे गोकने यूकया
सा द्वाभ्यां चाल्या सिंहकुम्भालिकेऽपि । या वै काले
भानुमान् याति तस्मां चाल्या हन्ते कालके चालनं न ।"
सा प्राची कर्के कर्कसंक्रान्तौ कीटे वृश्चिकसंक्रान्तौ वृष-
मकरसंक्रान्तौ एकया यूकया चाल्या सूर्य्यस्यायनवशात्
उत्तरायणे उत्तरतः दक्षिणायने दक्षिणतः एवं सिंह-
कन्यालिके सिंहकन्यातुलासंक्रान्तौ कुम्भमीनमेषसंक्रान्तौ
च द्वाभ्यां यूकाभ्यां चालनीया अयनवशात् मिथुनधनुः-
संक्रान्तौ चालनं नास्तीति एवं प्राचीसाधनं कृत्वायो-
त्तरदक्षिणयोः साधनं शालिन्याह "रज्ज्वं छिद्रां
मध्यचिह्ना सपाशा प्राचीं शङ्कौ पश्चिमे चापि दत्वा ।
कर्षेणामान् दक्षिणे चोत्तरे च तच्छिद्रे स्याद्दक्षिणा-
चोत्तरा दिक् । कृष्णमध्यपर्यायीयात् विस्तारस्याद्द्वि-
गुणकृतमध्याङ्कादभयत पाशवती रज्जुर्व्यक्ता तां प्राची
प्रवाच्यार्ट्टशङ्कौर्निवेशयेत् ततो मध्याङ्कं धृत्वा
रज्जुं दक्षिणे उत्तरे चाकर्षेत् विद्वान्, कर्षाङ्के दक्षिणा
उत्तरा च स्यादिति अत्र स्वल्पैव युक्तिरिति । अथ
रात्रौ दिक्साधनोपाय वसन्ततिलकयाह "निशि
वा श्रवणोदये दिनेन्द्रो गुरुभस्योदयनेऽथ संक्रमस्य ।
शरदर्द्धनिशानुमानतोऽथवा स्तुतः साधय पूर्ववन्न वाक्याम्"
अथवा रात्रौ श्रवणोदये प्राची अथ वा पुष्योदये
प्राची अथवा हस्तकोदये प्राची अथ शरदर्द्धनिशा
यामुकशीर्षे चित्रास्वात्यो मध्योत्तरात्रे प्राची । अस्तुतः
प्राचीतः पूर्ववत् पूर्वो[illegible] तथा याम्यां दक्षिणादिशं

हृदयस्थो यदा मारुतैः शी[illegible]पद्यते । मुखस्य शोषं लभते तद्वु वक्षार्द्ध[illegible] । किं वा ललाटे नासायां गात्रसन्धिषु कक्षयोः । [illegible]दा सञ्जायते स्वेदो बलार्द्धन्तु तदादिशेत् । भुक्तवान् [illegible]तसङ्क्षीणः कासी श्वासी कृशः-क्षयी । रक्तपित्ती [illegible] शोषी न तं कुर्य्यात् कदाचन । अतिव्यायामतः का[illegible]ज्वरः छर्द्दिः श्रमः क्लमः । तृष्णा-क्षयः प्रतमको र[illegible]पित्तञ्च जायते । अभ्यङ्गं कारये-न्नित्यं सर्वे[illegible] पुष्टिदम् । शिरःश्रवणपादेषु तं विशेषेण शीलयेत् । सार्षपं गन्धतैलञ्च यत्तैलं पुष्प-वासितम् । अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन । गन्धतैलम् गन्धद्रव्याणामनुशीलीभावमग्नियोगेन निष्का-शितः स्नेहः । अभ्यङ्गो वातकफहृच्छ्रमशान्तिबलं सुखम् । निद्रावर्णमृदुत्वायुः कुरुते देहपुष्टिकृत् । अभ्यङ्गः शीलितो मूर्ध्नि सकलेन्द्रियतर्पकः । दृष्टिपुष्टि-करो हन्ति शिरोभूमिगतान् गदान् । केशानां बहुतां दार्ढ्यं मृदुतां दीर्घतां तथा । कृष्णतां कुरुते कुर्य्या-च्छिरसः पूर्णतामपि । न कर्णरोगा वातोत्था न मन्या हनुग्रहः । नोच्चैःश्रुतिर्न बाधिर्य्यं स्यान्नित्यं कर्ण-पूरणात् । रसाद्यैः पूरणं कर्णे भोजनात् प्राक् प्रश-स्यते । तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते । पादाभ्यङ्गश्च तनुस्थैर्य्यं निद्रादृष्टिप्रसादकृत् । पादसुप्ति-श्रमस्तम्भसङ्कोचस्फुटनप्रणुत् । व्यायामक्षुण्णगात्रं पद्भ्यां संमर्दितं तथा । व्याधयो नोपसर्पन्ति वैनतेयमिवोरगा ! लोमकूपं शिराजालं धमनीभिः कलेवरैः । तर्पये[illegible] बलमाधत्ते स्नेहयुक्तावगाहने । अद्भिः संसिक्त[illegible]नां तद्वच्चास्थ्यपदादयः । वर्द्धन्ते हि तथा न्यम्[illegible] संसिक्तधातवः । नवज्वरी त्वजीर्णी च ना[illegible]त कथ-ञ्चन । तथा विरिक्तो वान्तश्च निरूढो [illegible] मानवः । निरूढः दत्तो निरूहणस्तिः यस्य सः । [illegible]र्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि वा । शेषाणा[illegible] नत्विह प्रोक्ता वह्निसादादयो गदाः । पूर्वयोः त[illegible]ज्वरिणोऽजीर्णि-नश्च । उद्वर्त्तनं कफहरं मेदोघ्न[illegible]कटप्परम् । बल्यं शोणितलश्चापि त्वक्प्रसादमृदुत्वकृ[illegible] । मुखलेपात् दृढं चक्षुः पीनोगण्डस्तथाननम् । [illegible]व्यङ्गपिडकं भवे-त्तमवर्णाब्जसम् । द्दीपनं [illegible]युष्यं स्नानमोजो-बलप्रदम् । कण्डूमलश्रमस्वेद[illegible]तन्द्राहृद्दाहपापजित् । वारीव वैवैः शीतासैवैष्ट[illegible]ति पीड़ितः । नरस्य स्नानमात्रस्य दीप्यते [illegible] शीतेन पयसा स्नानं रक्त[illegible]ानिकृत् । तदेवोष्णेन तोयेन बल्यं वात-कफाप[illegible] । शिरःस्नानमचक्षुष्यमत्युष्णेनाम्बुना सदा । [illegible]तस्य शरकोपे तु हितमन्त्र प्रकीर्त्तितम् । "अशीतेनाम्भसा स्नानं पयःपानमवाः स्त्रियः । एतद्वो मानवा ! पथ्यं स्निग्धमल्पञ्च भोजनम् ।" हरिवंश-स्यैतत् । यः सदामलकैः स्नानं करोति स विनिश्चितम् । वलीपलितनिर्मुक्तो जीवेदुवर्षशतन्नरः । स्नानं ज्वरेऽ-तिसारे च नेत्रकर्णानिलार्त्तिषु । आध्मानपीनसाजीर्ण-भुक्तवत्सु च गर्हितम् । स्नानस्यानन्तरं सम्यक्प्रोञ्छना-ङ्गस्य मार्जनम् । कान्तिप्रदं शरीरस्य कण्डूत्वग्दोष-नाशनम् । कौषेयौर्णिकरक्तञ्च रक्तवस्त्रन्तथैव च । वातश्लेष्महरन्तत्तु शीतकाले विधारयेत् । कौषेयं पट्टाम्बरम् तसरवस्त्रञ्च । मेध्यं सुशीतम्पित्तघ्नं कषायं वस्त्रमुच्यते । तद्धारयेदुष्णकाले तत्रापि लघु शस्यते । कषायं (गेरुको) इति लोके कषायरागरक्तं वा । शुक्लन्तु शुभदं वस्त्रं शीतातपनिवारणम् । न चोष्णञ्च च वा शीतन्तत्तु वर्षा[illegible]येत् । यशस्यमायुष्यं लोम-टानन्दवर्द्धनम् । [illegible]शीकरं हृद्यं सर्व निर्मल-मम्बरम् । क[illegible]पकम् । कदापि न जनैः सङ्कुधार्य्यं [illegible]म्बरम् । तत्तु कण्डूकरं म्लान्य-लक्ष्मी[illegible]म्परम् । अलक्ष्मीः अशोभा दारिद्र्यञ्च । [illegible] मृगुन्दनञ्चापि कृष्णागुरु च मिश्रितम् । उष्णं वातकफघ्नं हि शीतकाले तदिष्यते । चन्दनं घनसारेण बालकेन च मिश्रितम् । सुगन्धि परमं शीतमुष्णकाले प्रशस्यते । घनसारः कर्पूरः बालकं ह्रीवेरम् । चन्दनं घसृणोपेतं मृगनाभिसमायुतम् । न चोष्णं नच वा शीतं वर्षाकाले तदिष्यते । घुसृणं कुङ्कुमम् । मृग-नाभिः कस्तूरी । अनुलेपस्तृषामूर्च्छादुर्गन्धस्वेद-दाहजित् । सौभाग्यतेजस्त्वग्वर्णप्रीत्योजोबलवर्द्धनः । स स्नानानर्हलोकानामनुलेपोऽपि नो हितः । सुगन्धि-पुष्पपत्राणां धारणं शान्तिकारकम् । पापरक्षोघ्नदुष्टहरं कामदं श्रीविवर्द्धनम् । भूषणैर्भूषयेदङ्गं यथायोग्यं विधानतः । शुचिसौभाग्यसन्तोषदायकं भासुरं कृतम् । ग्रहदृष्टिहरं पुष्टिकरं दुःस्वप्ननाशनम् । पापदौर्भाग्य-शमनं रत्नाभरणधारणम् । माणिक्यन्तरणेः सुजात्य-ममलं मुक्ताफलम् शीतगोर्माहेयस्य च विद्रुमो निगदितः सौम्यस्य गारुत्मतम् । देवेज्यस्य च पुष्परागमसुरा-चार्य्यस्य वज्रं, शनेः नीलं निर्म्मलमन्ययोश्च गदिते गोमेद-

योगमैश्वरम्" गीता। दिव्यमलौकिकार्थदर्शनसाधनं चक्षुरस्य। ३तथाभूतनेत्रयुक्ते त्रि० "त्वया नियम्या ननु दिव्यचक्षुषा" रघुः "नमस्तुभ्यं विरूपाक्ष! नमस्ते दिव्यचक्षुषे" नीलकण्ठस्तव०।

**दिव्यतेजस्** स्त्री दिव्यं तेजो यस्याः ५ब०। १ब्राह्मीलतायाम। २अद्भुततेजस्के त्रि०।

**दिव्यदर्शिन्** त्रि० दिव्यमलौकिकपदार्थं पश्यति दृश–णिनि। अतीन्द्रियार्थदर्शके। "आजगाम सभामध्ये दिव्यदर्शी महातपाः" भा०आनु० २०अ०। दृश–क्विप्। दिव्यदृगप्यत्र।

**दिव्यदिन** न० दिवि भवम यत् कर्म०। दैवे दिने "मासैर्द्वादशभिर्वर्षं दिव्यं तदहरुच्यते" सू०सि०तन्मानमुक्तम।

**दिव्यदोहद** न० "यत् दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये। उपयाचितकं दिव्यदोहदं तद्विदुर्बुधा" हारा० उक्ते अभीष्टसिद्धये देवेभ्यो देये द्रव्ये।

**दिव्यनदी** स्त्री कर्म०। आकाशगङ्गायाम।

**दिव्यनारी** स्त्री अप्सरःसु स्वर्गनार्य्याम दिव्यस्त्री प्रभृतयोऽप्यत्र। 'दिव्यस्त्रीकरचारुचामरवरैः संवीज्यमानः कदा गङ्गास्तव०।

**दिव्यपञ्चामृतम** न० पञ्चानाममृतानां तत्तुल्यस्वादूनां समाहारः कर्म०। मिलितगव्याज्यदधिक्षीरमधुसितात्मके पदार्थे राजनि०।

**दिव्यपुष्प** पु०दिव्यं मनोज्ञं पुष्पमस्य। १करवीरे २महाद्रोणे राजनि० सत्तायां ननु कापि अतद्रूपम्। दिव्यपुष्पिका रक्तपुष्पार्कवृक्षे स्त्री रत्नमाला।

**दिव्यप्रश्न** पु० कर्म०। अनागतज्ञापके प्रश्ने। "उत्पातं दैवयुक्तं रहस्य दिव्यप्रश्नाः मृगचक्रा मुहूर्त्ताः। अयं महान्तं कुरुसत्तयानां निवेदयन्ते पाण्डवाना जयञ्च" भा०उ० ४७अ०।

**दिव्यमान** न० कर्म०। दैवे माने "सुरासुराणामन्योन्यमहोरात्रं विपर्य्ययात। यत् प्रोक्तं तद्भवेद्दिव्यं मानो भगणपूरणात्"। "युगाना त्रितयं यात तथा कृतयुगमिदम्। प्रोक्ता तुष्टेस्ततः कालं पूर्वोक्तं दिव्यसङ्ख्यया"। "ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं गुरोस्तथा। सौरं च सावनं चान्द्रमार्क्षं मानानि वै नव" सू०सि०।

**दिव्ययमुना** स्त्री नित्यकर्म०। कामरूपपीठस्थदमनिकाया नद्याः पूर्वभागस्थे नदीभेदे यथा "तस्या नद्याः पूर्वभागे गङ्गेव जलवाहिनी। आश्वयुजवकं मासं तस्यां स्नात्वा नरोत्तमः। तथा दमनिकायाञ्च परं निर्वाणमाप्नुयात्। ततः पूर्वे परा देवी नाम्ना या ललिता मता। महती दिव्ययमुना यमुनावत्फलप्रदा। दक्षिणादिक्समुद्भूता दक्षिणोदधिगामिनी। तस्यान्तु कार्तिकं मासं स्नात्वा मोक्षमवाप्नुयात्" कालि०पु०८१अ०।

**दिव्यरत्न** न०कर्म०। चिन्तामणौ मणौ शब्दार्थच०।

**दिव्यरथ** पु० कर्म०। व्योमयाने विमाने शब्दरत्ना०।

**दिव्यरस** पु० नित्यकर्म०। १पारदे राजनि०। २मनोज्ञे रसे पु०। दिव्योरसोऽस्य। ३रुचिररसयुक्ते त्रि०।

**दिव्यलता** स्त्री कर्म०। १मूर्वालतायाम् राजनि०। २मनोज्ञलतामात्रे च।

**दिव्यवस्त्र** पु० दिव्यं वस्त्रं यस्मात्। १सूर्यप्रकाशे शब्दरत्ना०। ६त०। २भास्वरवस्त्रयुक्ते त्रि०कर्म०। ३मनोज्ञे वसने न०

**दिव्यसरित्** स्त्री कर्म० आकाशगङ्गायाम् "व्योम्नि दिव्यसरिदम्बुपद्धतिः" माघः।

**दिव्यसानु** पु० १विश्वदेवभेदे "विश्वे चाग्निमुखा देवाः" इत्युपक्रमे "पार्ष्णिक्षेमात्समूहश्च दिव्यसानुस्तथैव च" भा०आनु० ९१अ०विश्वदेवोक्तौ। २दिव्यसानुके गिरौ च।

**दिव्यसार** पु० दिव्यः सारोऽस्य। शालवृक्षे राजनि०।

**दिव्यादिव्य** पु० दिव्यश्चादिव्यश्च कर्म०। नायकभेदे रसमञ्जरी यथा अर्जुनादयः। २नायिकाभेदे स्त्री यथा द्रौपद्यादयः। ३उपदेवीभेदे स्त्री शब्दार्थचि०।

**दिव्यासन** न० "अथ दिव्यासनं वक्ष्ये पृष्ठं हस्तेन बन्धयेत्। एकहस्तमध्यदेश भूमिहस्तञ्च नासया" रुद्रया० [illegible] आसनभेदे।

**दिव्ये[illegible]** पु० सर्पभेदे 'तयायां वैकरञ्जानां पुनर्दिव्येलकणोभ्रे पराजिचित्रिकाः पोटगलः पुष्पाभिकीर्णी दर्भपुष्पो [illegible] तकः सप्त तेषामा ज्योराजिसवत् शेषा कल्केलिनत [illegible]।

**दिव्योदक** न० [illegible] त। १अन्तरीक्षभवे जले दिव्यशब्दे भाव० प्र० वाक्यं [illegible] दृश्यम्। अम्बुशब्दे विवृतिः

**दिव्योपपादुक** [illegible] उपपद्यते मातृपित्रादिदृष्टकारणमनपेक्ष्यैव अदृष्टवशात् [illegible] पुरुष एव उत्पद्यते उप+पद–उकञ् कर्म० पिशाचादि [illegible] दिव्य इति विशेषणं तेषाञ्च मातृपित्रादिदृष्ट[illegible]कारणापेक्षाभावेऽपि दिव्यत्वाभावात् तथात्वम। देवे

**दिव्यौघ** पु० तन्त्रोक्ते [illegible] "महादेवो महाकालश्रि-

परं [illegible] दीक्षापरं वचः । न च दीक्षापरं कालं तस्माद्दीक्षा गरीयसी”
तत्र देशकालादि तन्त्रसारे निर्णीतं यथा
“हृषे सिंहे च कन्यायां धनुर्मीनाख्यलग्नके । चन्द्रताराानुकूले च कुर्य्याद्दीक्षाप्रवर्त्तनम् । स्थिरलग्नं विष्णुलग्ने शिवलग्ने चरः शुभः । द्विःस्वभावगतं लग्नं शक्तिमन्त्रे प्रशस्यते । त्रिषडायगताः पापाः शुभाः केन्द्रा त्रिकोणगाः । दीक्षायान्तु शुभाः सर्वे रन्ध्रस्थाः सर्वनाशकाः” । शुक्लपक्षे भवेद्दीक्षा कृष्णेऽप्या पञ्चमाह्निकात्’ । निषिद्धमासेऽपि तत्तद्विशेषो दर्शितः रत्नावल्याम् “षष्ठी भाद्रपदे मासि तथा कृष्णा चतुर्दशी । कार्त्तिके नवमी शुक्ला मार्गे शुक्ल तृतीयिका । पौषे च नवमी शुक्ला माघे शुक्लचतुर्थिका । फाल्गुने नवमी शुक्ला चैत्रे कामचतुर्दशी” । त्रयोदशीति केचित् । “वैशाखे चाऽक्षया चैव ज्यैष्ठे दशहरा तिथिः । आषाढे नवमी शुक्ला श्रावणे कृष्णपञ्चमी । एतानि देवपर्वाणि तीर्थकोटिफलं लभेत् । अत्र दीक्षा प्रकर्त्तव्या न मासञ्च परीक्षयेत् । न वारं न च नक्षत्रं न [illegible]दिकदूषणम् । न योगकरणञ्चैव शङ्करेण च [illegible]” । अन्यत्र । “चैत्रे त्रयोदशी शुक्ला वैशाखैकादशी सिता । ज्यैष्ठे चतुर्दशी कृष्णा आषाढे नागपञ्चमी । श्रावणैकादशी भाद्रे रोहिणीसंयुताष्टमी । आश्विने च महापुण्या महाष्टम्यष्टमीष्टदा । कार्त्तिके नवमी शुक्ला मार्गशीर्षे तथा सिता । षष्ठी चतुर्दशी पौषे माघस्यैकादशी सिता । फाल्गुने च सिता षष्ठी चेति कालविनिर्णयः” । योगिनीतन्त्रे “अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः । रविसंक्रान्तिदिवसे युगाद्यायां सुरेश्वरि । । मन्वन्तरासु सर्वासु महापूजादिने तथा । चतुर्थी पञ्चमी चैव चतुर्दश्यष्टमी तथा । तिथयः शुभदाः प्रोक्ताः” इत्यादिवचनात् चतुर्दश्यष्टमीति शक्तिविषयम् चतुर्थीति गणेशविषयम् तत्तत्कल्पोक्तत्वात् “निन्दितेष्वपि कालेषु दीक्षोक्ता ग्रहणे शुभा । सूर्य्यग्रहणकालस्य समानो नास्ति भूतले । विशेषतो [illegible] । दीक्षाग्रहणकर्मणि । तत्र यद्यत्कृतं सर्वमनन्तफलदं भवेत् । रविसंक्रमणे चैव सूर्य्यस्य ग्रहणे तथा । तत्र लग्नादिकं किञ्चित् विचार्य्यं न कदाचन । रविसंक्रमणे चैव नान्यदन्वेषितं भवेत् । न वारतिथिमासादिशोधनं सूर्य्यपर्वणि” । एवं चन्द्रग्रहणेऽपि तथा च रुद्रयामले “न कुर्य्यात्कालिकीं दीक्षां चन्द्रपरक्तो विभावसौ । न कुर्य्याद्वैष्णवीं तान्तु यदि चन्द्रमसो ग्रहः” । एतच्च गोपालश्रीविद्येतरविषयम् । “कल्येषु पुण्ययोगेषु ग्रहणे चन्द्रसूर्य्ययोरिति” गौतमीयात् । सूर्य्यग्रहणकाले तु नान्यदन्वेषितं भवेत्” इति योगिनीहृदयाच्च । वस्तुतस्तु “श्रीपराकालीगोजानि गोपाद्दीर्गेष्व यो मनुः । सूर्य्यस्योपप्लवे लब्धे नृणां शीघ्रफलप्रद” इत्यादिवचनानुरोधात् पूर्ववचने शक्तिमन्त्रपदं श्रीविद्याव्यतिरिक्तशक्तिमन्त्रपरमिति साम्प्रदायिकाः । “अमावास्या सोमवारे भौमवारे चतुर्थिका । सप्तमी रविवारे च सूर्य्यग्रहशतैः समा । शिष्यानाहूय गुरुणा कृपया दीयते यदि । तदा लग्नादिकं किञ्चिन्न विचार्य्यं कदाचन । तथा“सर्वे वारा ग्रहाः सर्वे नक्षत्राणि च राशयः । यस्मिन्नहनि सन्तुष्टो गुरुः सर्वे शुभावहाः” । योगिनीतन्त्रे “ग्रहणे च महातीर्थे नास्ति कालस्य निर्णयः” । अथ वक्ष्यामि दीक्षायाः स्थानं तन्त्रानुसारतः । गोशालायां गुरोर्गेहे देवागारे च कानने । पुण्यक्षेत्रे तथोद्याने नदीतीरे च मन्त्रवित् । धात्रीविल्वसमीपे च पर्वताग्रगुहासु च । गङ्गायास्तु तटे वापि कोटिकोटिगुणं भवेत्” । दीक्षायां विशिष्टदेशमाह ‘गयायां भास्करक्षेत्रे विरजे चन्द्रपर्वते । चट्टले च मतङ्गे च तथा कन्याश्रमेषु च । न कृष्टक्षीयाततो दीक्षा तीर्थेष्वेतेषु पार्वति ।” । वाराहीतन्त्रे “शुक्रोऽस्तो यदि वा हुत्रो गुर्वादित्यो भवेद्यदि । मेषवृश्चिकसिंहेषु तदा दोषो न विद्यते” । महाविद्यासु सर्वासु कालादिविचारो नास्ति तदुक्तं मुण्डमालातन्त्रे “कालादिशोधनं नास्ति न चामित्रादि दूषणम्” । ५ कर्मणि च ‘विवाहदीक्षां निरवर्त्तयत् गुरुः’ “विवाहदीक्षातिलकं चकार” रघुः नियमे “एताश्चान्याश्चैव दीक्षा विप्रो वने वसन्” मनुः ।

**दीक्षागुरु** पु० दीक्षाया गुरुरुपदेष्टा । मन्त्राद्युपदेष्टरि ।

**दीक्षान्त** पु० दीक्षायाः प्रधानयागस्य अन्तः अन्तोपलक्षितः तत्समापको यागभेदः । अवभृथस्नानरूपे यागभेदे अमरः ।

**दीक्षापति** पु० ६त० । दीक्षापालके सोमे । “दीक्षां मे दीक्षापतिर्मन्यतामनु” यजु० ५ । ६ । “दीक्षायाः पतिः पालकः सोमः” वेददी० । दीक्षापालादयोऽप्यत्र ।

**दीक्षायूप** पु०न० दीक्षायां यूपः । दीक्षाङ्गपश्वादिमारणार्थं काष्ठमये पदार्थभेदे “रथस्थदीक्षायूपेन” काद०

**दीक्षित** त्रि० दीक्ष–कर्त्तरि क्त दीक्षा जाताऽस्य तार० इतच् वा। १सोमादियागाङ्गव्रतभेदधारिणि २संजाततन्नोक्ष दीक्षे च दीक्षाशब्दे उदा०। "वर्णानां ब्राह्मणश्चापि विशेषेण दीक्षितो द्विजः" भा० अनु० ६१८श्लो० "अनाख्यो दीक्षितो नाम्ना यवीयानपि यो भवेत्। भोभवत्पूर्वकन्त्वेनमभिभाषेत धर्मवित्" "नाक्रामेत् कामतश्छायां बभ्रुणो दीक्षितस्य च" मनुः। ३काम्पिल्लनगरस्थविप्रभेदे तत्कथा "आसीत् काम्पिल्लनगरे सोमयाजिकुलोद्भवः। दीक्षितो यज्ञदत्ताख्यो यज्ञविद्याविशारदः। वेदवेदाङ्गवेदार्थवेदोक्ताचारचञ्चुरः। राजमान्यो बहुधनो वदान्यः कीर्त्तिभाजनम्। अग्निशुश्रूषणरतो वेदाध्ययनतत्परः" काशीख० १३अ०। स दीक्षितः अयनं यस्याः गौरा० ङीष्। दीक्षितायनी तत्पत्न्यां स्त्री "महापतिव्रतां सम्यक् पत्नीं प्रोवाच तामथ। दीक्षितायनि! कुत्रासि क्व ते गुणनिधिः सुतः। अथ तिष्ठतु किन्तेन क्व सा मम मुद्रोर्मिका। अङ्गोद्वर्त्तनकाले या त्वया मेऽङ्गुलितो हृता। नवरत्नमयीं शीघ्रं तामानीय प्रयच्छ मे। इति श्रुत्वाथ तद्वाक्यं भीता सा दीक्षितायनी" काशीख० १३अ० यजमाने ४संजातदीक्षे च। "संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता" वेणीसं० "दीक्षितो न ददाति" श्रुतिः।

**दीक्षित** त्रि० दीक्ष-शोकार्थे सुखं बाधित्वा तत्। दीक्षाशीले

**दीति** स्त्री दीप–क्तिन् वेदे पलोपः। दीप्तौ "सुदीतिरग्ने दिद्यद्भ्यः" ता०ब्रा० १६।११ "सुदीतिः सुदीप्तिरसि" भा०।

**दीदि** पु० दीप बा० दि–पृषो०। द्योतमाने। "अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता" ऋ० १।१५।११ "दीद्यग्नी द्योतमानाग्निसंयुक्तौ" भा०

**दीदिवि** पु० दिव–क्विन् अभ्यासे तस्य दीर्घः वस्य यलोपः। १स्वर्गे २अन्ने च उज्ज्वल०। २अन्ने बाह्ली अमरः। पुनः पुनर्भृशं वा दीव्यति दिव–यङ्लुक् क्विन् न गुणः अभ्यासदीर्घः। ४पुनःपुनर्भृशं वा द्योतमाने त्रि० "राजन्तमध्वराणां गोपामृतस्य दीदिविम्" ऋ० १।१।८ "दीदिविम् पुनःपुनर्भृशं वा द्योतकम्" भा०

**दीधिति** स्त्री दीधी–क्तिन् पृषोदरादित्वादिट् "यीवर्णयोर्दीधीवेव्योः" पा० इकारलोपश्च। १किरणे "मणिमये भवने रवेर्दीधितयो मूर्च्छितास्तमोनैशम्। व्यपयन्ति दर्पणोदरनिह्नुता इव मन्दिरस्थाम्नः" इ०दं० "पुपोष वृद्धिं हरिदश्वदीधितेः" रघुः "अमलदीधितिरेव विदर्भजे।" नैष०। "आयःशुभ्राद्दीधितिमालिनीं" कि०सि० २रघुनाथशिरोमणिकृते चिन्तामणिटीकाभेदे ३अङ्गुली निघण्टुः।

**दीधितिकृत्** पु० दीधितिं कृ–क्विप्। चिन्तामणिटीकाभेदकारके रघुनाथशिरोमणिविपश्चिति

**दीधितिमत्** पु० दीधितयः भूम्ना सन्त्यस्य मतुप्। १सूर्ये "शरदां सुप्रपद्मानां प्रातर्दीधितिमानिव"। "शरद्घनात् दीधितिमानिवोष्णः" कुमा०। २अर्कवृक्षे च।

**दीधी** देवने दीप्तौ च अदा० अक० आत्म० सक० सेट्। दीधीते अदीधिष्ट। दीध्यै दीध्याञ्चक्रे। दीधिता दीधिष्यते दीधितिः। "दीधीवेवीटाम्: कश्चिदुत्सृष्टदर्भो–रभाजनम्" भा० द०।

**दीन** त्रि० दी–क्त तस्य नः। १दुःखिते अमरः। २भीते च। ३तगरपुष्पे न० ४मूषिकायां स्त्री मेदि०। "वासुदेवेनादीनमनादीनवमीरितम्" माघः। "दिनानि दीनोद्धरणोचितस्य" रघुः।

**दीनदयालु** पु० दीने दयालुः। दुःखिते १दयालौ "दीनदयालुतयाऽवनिपालः" नैष०।

**दीननाथ** ६त०। दुःखितजनभर्त्तरि।

**दीनार** पु० दी–आरक् नुट् च। १स्वर्णभूषणे २मुद्रायां ३सुवर्णकर्षद्वये ४निष्कमाने अमरभरतौ। "दीनारोरोपकैरष्टाविंशत्या परिकीर्त्तितः। सुवर्णप्रतिमोभागोरोपक उच्यते" विष्णुगुप्तोक्ते सप्तमांशाधिककेशरत्तिकात्मकरोपकैरष्टाविंशत्या परिमिते ५द्वात्रिंशद्रक्तिकामिते हेम्नि च प्राय०त० रघुः।

**दीप** दीप्तौ दि० आत्म० अक० सेट्। दीप्यते अदीपि–अदीपिष्ट। दिदीपे दीप्तः। णिच् अदीदिपत्–त अदिदीपत् त। दीप्तिः। दीपनं दीपकः दीप्रः। "दीप्यमानः स्वतेजसा" मनुः। "पुनर्दिदीपे मदहुर्दिनश्रीः" रघुः "देवाङ्गनेव नीपिष्ट" "सधूमदीप्ताग्निरुचीनि रेजुः" भट्टिः "ततः प्रकनको दीप्ताः मृगाश्च क्रूरभाषिणः" हरिवं० १७१ अ०। "हिंस्रेषु दीप्तास्त्रधरः कुमारः" भट्टिः "यावत् कर्माणि दीप्यन्ते तावत् संसारवासनाः" कुलार्ण०। उपसर्गपूर्वकस्य तत्तदुपसर्गद्योत्यार्थयुक्ते तदर्थे "आदिचादादीप्तकमालुकल्पम्" भट्टिः "अस्य यद्रेतसः प्रथममुद्दीप्यत" ऐत०ब्रा० ३।३४ "कुर्वन्ति परिदीप्यन्ति भूमिजलाधिपिते" भा० शा० १०३६ श्लो० आर्षः परस्मैपदः। "ते शराः स्वसत्त्वेन प्रदीप्ताग्निसमाभया" भा० अ० १८१ अ०

**दीप** पु० दीपयति स्वं परञ्च दीप–णिच्–अच्। स्वपर-

**दीपकलिका** स्त्री दीपस्य कलिकेव । १दीपशिखायां शूल-पाणिकृते २याज्ञवल्क्यधर्मसंहिताटीकाभेदे च ।

**दीपकिट्ट** न० ६त० । कज्जले शब्दार्थकल्पतरुः ।

**दीपकूपी** स्त्री दीपस्य कूपीव । दीपवर्त्तिकायाम् दीप-दशायाम् शब्दमा० ।

**दीपखोरी** स्त्री खोर–गत्याघाते भिद्–अच् गौरा० ङीष् । ६त० । दीपवर्त्तिकायां (शलते) शब्दमाला ।

**दीपध्वज** पु० दीपस्य ध्वज इव । कज्जले जटाधरः ।

**दीपन** त्रि० दीपयति वह्निम् दीप–णिच्–ल्यु । १तगरमूले रत्नमा० २कुङ्कुमे त्रिका० । ३मयूरशिखावृक्षे ४शालि-ञ्चशाके च पु० शब्दच० ५कासमर्दे ६पलाण्डौ च पु० राजनि० । ७दीपकमात्रे त्रि० । भावे ल्युट् । ८प्रकाशने न० ९याज्ञमन्त्रसंस्कारभेदे च “मन्त्राणां दश कथ्यन्ते संस्काराः सिद्धिदायिनः । जननं जीवनं पश्चात्ताडनं बोधनं तथा । अथाभिषेको विमलीकरणाप्यायने तथा । तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः । “तारमायारमायोगो मनोर्दीपनमुच्यते” शारदाति० । दीप्यतेऽनया दीपि–करणे ल्युट् ङीप् । दीपनी १०मेथिकायां ११पाठायां १२यवान्याञ्च स्त्री राजनि० । १३दीप-नसाधने त्रि० स्त्रियां ङीप् । “त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशिनी । चक्षुष्या दीपनी” “निहन्याद्दीपनं गुल्मपीनसाग्न्यल्पतामपि” । “कटुकोदीपनः पाचनो रोचनः शोधनः” इति च सुश्रु० ।

**दीपनीय** पु० दीपनाय जठरानलोद्दीपनाय हितं छ । १यवान्यां राजनि० औषधवर्गभेदे “पिप्पली पिप्पली-मूलं चव्यचित्रकनागरम् । दीपनीयः स्मृतो वर्गः कफा-निलगदापहः” चक्रपाणिदत्तः । दीप-णिच्-अनीयर् । २ज्वालनीये त्रि० ।

**दीपपादप** पु० दीपस्य पादप इव आश्रयत्वात् । (पिलसुज) दीपाधारे शब्दार्थकल्प० दीपवृक्षादयोऽप्यत्र ।

**दीपपुष्प** पु० दीपः तत्कलिकेव पुष्पमस्य । चम्पके राजनि० ।

**दीपभाजन** न० ६त० । दीपपात्रे तत्स्थापनतैलाधारे पात्रे “वामनार्चिरिव दीपभाजनम्” रघुः ।

**दीपमाला** स्त्री दीपानां माला । भीष्मोक्ते प्रदोषसंघे “च-तुर्दश्यां च अमायां पूजयेद्दीपमालया” ति०त० ।

**दीपवत्** त्रि० दीप+अस्त्यर्थे मतुप् मस्य वः । १दीपयुक्ते गृहादौ स्त्रियां ङीप् ङीवन्तः २कामरूपपीठस्थे नदी-भेदे “शारदी कथिता या तु नदी मरुकूटमध्यगा स्थिता । तस्याः पूर्वे समाख्याता नदी दीपवती मता । यथा च ललितख्याता ललिताख्ता दीपवत्समः । तेन देवस-ङ्घेषु नदी दीपवती कृता । दीपवत्याः पूर्वतस्तु श्रृङ्गाटोनाम पर्वतः” कालिका०पु० ८२अ० ।

**दीपवृक्ष** पु० ६त० । कीटभेदे (जोनाकीपोका) पारस्करनि० ।

**दीपशिखा** पु० ६त० । १प्रदीपज्वालायाम् उपचारात् तज्जाते २कज्जले च शब्दार्थचन्द्रिका ।

**दीपशृङ्खला** स्त्री दीपानां शृङ्खलेव । दीपावल्यां हारा० ।

**दीपान्वित** त्रि० ६त० । १दीपयुक्ते गृहादौ श्मशानचत्व-रादिषु देवदीपयुक्तायां मुख्याश्विनस्य गौणकार्त्तिकस्य २अमावास्यायाम् स्त्री ततकर्त्तव्यादि यथा

भविष्यपुराणे “ येयं दीपान्विता राजन् ! ख्याता पञ्च-दशी भुवि । तस्यां दद्यान्न चेद्दानं पितॄणां वै महा-लये । प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् । दीपवृक्षास्तथा कार्य्या भक्त्या देवगृहेष्वपि । चतुष्पथे श्मशानेषु नदीपर्वतसानुषु । वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च । वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रय-भूमयः । दीपमालापरिक्षिप्ते प्रदोषे तदनन्तरम् । ब्राह्मणान् भोजयित्वादौ संविभज्य च बुभुक्षितान् । अलङ्कृतेन भोक्तव्यं नवस्त्रोपशोभिना । स्निग्धैर्मुग्धै-र्विदग्धैश्च बान्धवैर्भृतकैः सह” तिथित० ।

निर्णयसिन्धौ तत्र विशेष उक्तो यथा

कालादर्शे “प्रत्यूष अश्वयुग्दर्शे कृताभ्यङ्गादिमङ्गलः । भक्त्या प्रपूजयेद्देवीमलक्ष्मीविनिवृत्तये” अस्य व्याख्याने आदिशब्दात्सुवृत्तगृटकद्रव्यालाभादेरुपसंग्रहः तदुक्तं पद्मपु-राणे “स्वातिस्थिते रवाविन्दुर्यदि स्वातिगतो भवेत् । पञ्च-त्वगुटकस्नायी कृताभ्यङ्गविधिर्नरः । नीराजितो महाल-क्ष्मीमर्चयन् श्रियमश्नुते । अश्वयुग्दर्श इति दर्शशब्दः प्रत्यूषे स्वातियुक्ततिथिपरः तदुक्तं ब्राह्मे “कार्त्ते शुक्लद्वितीयायां तिथिषु स्वातिसङ्गते । मानवो मङ्गल-स्नायी नैव लक्ष्म्या वियुज्यते । तत्रैव “इषे भूते च दर्शे च कार्त्तिकाद्यगते दिने । यदा स्वाती तदाभ्यङ्गस्नानं कुर्याद्दिनोदये” । कश्यपसंहितायां तु दीपावलिदर्शे प्रक्रम्य “इन्दुक्षयेऽपि संक्रान्तौ रवौ पाते दिनक्षये । तत्राभ्यङ्गो न दोषाय प्रातः पापापनुत्तये” इति । स्वातियोगं विना-प्यभ्यङ्ग उक्तः । मात्स्ये “दीपैर्नीराजनादत्र सैषा दी-पावली स्मृता” । अत्र विशेषो हेमाद्रौ भविष्ये “दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् । प्रदोषसमये

न्तराले तु पर्वस्वभावः तदुक्तं वैराग्निकेन चन्द्रकल्पना।

**दीप्तांशु** पु॰ दीप्ता अंशवोऽस्य। १सूर्ये "यथा हि दिवि दीप्तांशुः प्रभासयति तेजसा" भा॰ आ॰ १७१ अ॰। २अर्कवृक्षे च।

**दीप्ताक्ष** पुंस्त्री॰ दीप्ते अक्षिणी अस्य षच्। १विडाले त्रिका॰ स्त्रियां ङीप्। २दीप्तलोचनान्विते रूपराक्षसादौ त्रि॰। "बाल्ह्वं सत्यवर्णवाला दीप्ताक्षाणां पुरूरवाः" भा॰ उ॰ ७४अ॰ स्त्रियां ङीप्। "एतास्त्वन्याश्च दीप्ताक्ष्यः करभोत्कटमूर्द्धजाः" भा॰ व॰ २७८अ॰

**दीप्ताग्नि** पु॰ दीप्तोऽग्निरस्य। १अगस्त्ये मुनौ त्रिका॰ तेन भक्षपीतमात्रेण वातापिमनुकयोर्जठरानलेन जारणात् तस्य तथा त्वम्। २दीप्तजठरानलयुक्ते त्रि॰ "बलिनः खरभक्ष्या ये ये च दीप्ताग्नयो नराः। 'सात्म्यतोऽल्पतया वापि दीप्ताग्नेस्तरुणस्य च" सुश्रु॰ कर्म॰। ३दीप्ते वह्नौ पु॰ 'सधूमदीप्ताग्निरुचीनि रेजुः" भट्टिः "गच्छन् दीप्ताग्निसङ्काशान्" भा॰ व॰ १७अ॰।

**दीप्ताङ्ग** त्रि॰ दीप्तमङ्गमस्य। १दीप्तियुक्तदेहके। २मयूरे पुंस्त्री शब्दच॰ स्त्रियां जातित्वात् ङीप्।

**दीप्ति** स्त्री दीप—भावे क्तिन्। १त्विषि प्रभायाम् "एवं दीप्त्या योजनं भाति सन्ध्या" सू॰ सं॰ ७१अ॰ २अभिव्यक्तौ च ज्ञानाभिव्यक्तिरूपदीप्तेः कारणानि पात॰ सू॰ भाष्ययोरुक्तानि यथा

"योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः" सू॰ "योगाङ्गान्यष्टावभिधायिष्यमाणानि तेषामनुष्ठानात् पञ्चपर्वणो विपर्ययस्याशुद्धिरूपस्य क्षयो नाशः तत्क्षये सम्यग्ज्ञानस्याभिव्यक्तिर्यथा यथा च साधनान्यनुष्ठीयन्ते तथा तथा तनुत्वमशुद्धिरापद्यते यथा यथा च क्षीयते तथा तथा च क्षयक्रमानुरोधिनी ज्ञानस्यापि दीप्तिर्विवर्द्धते सा खल्वेषा विवृद्धिः प्रकर्षमनुभवति आ विवेकख्यातेरा गुणपुरुषस्वरूपविज्ञानादित्यर्थः। योगाङ्गानुष्ठानमशुद्धेर्वियोगकारणं यथा परशुश्छेद्यस्य विवेकख्यातेस्तु प्राप्तिकारणं यथा धर्मः सुखस्य, नान्यथा कारणम्। कति चैतानि कारणानि शास्त्रे भवन्ति नवैवेत्याह तद् यथा "उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः। वियोगान्यत्वधृतयः कारणं नवधा स्मृतम्" इति। तत्रोत्पत्तिकारणं मनो भवति ज्ञानस्य, स्थितिकारणं मनसः पुरुषार्थता शरीरस्येवाहार इति अभिव्यक्तिकारणं यथा रूपस्यालोकस्तथा रूपज्ञानम्। विकारकारणं मनसो विषयान्तरम् यथाग्निः पाक्यस्य, प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्य, प्राप्तिकारणं योगाङ्गानुष्ठानं विवेकख्यातेः वियोगकारणं तदेवाशुद्धेः अन्यत्वकारणं, यथा सुवर्णकारः सुवर्णस्य, एवमेकस्य प्रत्ययस्याविद्यामूढत्वे द्वेषो, दुःखत्वे रागः सुखत्वे तत्त्वज्ञानं माध्यस्थ्ये, धृतिकारणं शरीरमिन्द्रियाणां, तानि च तस्य महाभूतानि शरीराणां तानि च परस्परं सर्वेषाम्। तैर्यग्यौनमानुषदैवतानि च परस्परार्थत्वादित्येवं नव कारणानि तानि च यथासम्भवं पदार्थान्तरेष्वपि योज्यानि" भा॰ स्त्रीणां यौवने अयत्नसाध्ये गुणभेदरूपे ३सत्त्वजेऽलङ्कारे च 'यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः। अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः। शोभा कान्तिश्च दीप्तिश्च माधुर्यञ्च प्रगल्भता" इत्युपक्रमे "रूपयौवनलालित्यभोगाद्यैरङ्गभूषणम्। शोभा प्रोक्ता, सैव कान्तिर्मन्मथाप्यायिता द्युतिः। कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते" सा॰ द॰ लक्षयित्वा उदाजहार यथा 'तारुण्यस्य विलासः समधिकलावण्यसम्पदो हासः। धरणितलस्याभरणं युवजनमनसो वशीकरणम्"। दीप—कर्त्तरि संज्ञायां क्तिच् ४लाक्षायां ५कांस्ये च राजनि॰। विश्वदेवभेदे पु॰ "उष्णीनाभो नभोदश्च विश्वायुर्दीप्तिरेव च" भा॰ अनु॰ ९१अ॰ विश्वदेवोक्तौ।

**दीप्तिक** पुंस्त्री दीप्त्या कायति कै—क। दुग्धपाषाणवृक्षे राजनि॰।

**दीप्तिमत्** पु॰ दीप्तिरस्त्यस्य मतुप्। दीप्तियुक्ते "तद्रोचिःशतधा भिन्नं ददृशे दीप्तिमन्मुखम्" रघु॰। "उदक्स्थो दीप्तिमान् स्यान्तो जयी याम्योऽपि यो बली" सू॰ सि॰ 'दीप्यत्तेर्भरतदीप्तिमद्भिर्नक्तं महेन्द्रैरमलप्रदीप्तैः" भा॰ क॰ ९४अ॰। कृष्णस्य सत्यभामायां जाते २पुत्रभेदे पु॰ कृष्णपत्न्युपक्रमे "जज्ञिरे सत्यभामायां भानुर्भीमरथः क्षुपः। रोहितो दीप्तिमांश्चैव ताम्रजाक्षो जलान्तकः" हरिवं॰ १६२ अ॰।

**दीप्तोद** न॰ दीप्तमुदकं यत्र उदकस्योदादेशः। तीर्थभेदे "गच्छ पुत्र! नदीं पुण्यां वधूसरकृताह्वयाम्। तत्रोपस्पृश्य तीर्थेषु पुनर्वपुरवाप्स्यसि। दीप्तोदं नाम तत्तीर्थं यत्र ते प्रपितामहः। भृगुर्देवयुगे राम! तप्तवानुत्तमं तपः। तत्तथा कृतवान् रामः कौन्तेय! वचनात् पितुः" भा॰ व॰ ९९अ॰ [कान्तमणौ (आतशी) राजनि॰।

**दीप्तोपल** पु॰ दीप्तः सूर्यकरसंयोगात् ज्वलितः उपलः। सूर्य-

**दीप्त्र** त्रि॰ दीप्ताय दीपनाय हितम् गवा॰ यत्। दीप्तिहिते।

**दीप्य** पु॰ दीपाय अग्निदीपनाय हितम् अपूपा॰ पक्षे यत्। १यमान्यां २जीरके च राजनि॰। ३रुद्रजटायाम् अमरः ४प्रदीपहितादौ त्रि॰।

**दीप्यक** पु॰ दीप्य+संज्ञायां कन् स्वार्थे क वा। १अजमोदायां २यमान्यां ३मयूरशिखायां रुद्रजटायाञ्च मेदि॰।

**दीप्र** त्रि॰ दीप—र। दीप्तिशीले "हिमेषु दीप्रास्त्रधरः कुमार" "आतीमव्याल दीप्रास्त्रः सुत्वनः परिपूजयन्" भट्टिः

**दीर्घ** पु॰ दृ—विदारे बा॰ घञ् घस्य नेत्त्वम। १आयते (लम्बा) परिमाणभेदयुते दीर्घत्वञ्च परिमाणभेदे इति क णादाः महत्त्वावान्तरभेद इति सांख्याः। तथा हि कणाद सू॰ उपस्कारवृत्तौ च परिमाणसत्तां व्यवस्थाप्य सकारणं महत्त्वादिकं व्यवस्थापितं यथा "अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते" सू॰। "नित्ये इति विषयेण विषयिणं नित्यत्वप्रतिपादकं चतुर्थाध्यायमुपलक्षयति उपलब्ध्यनुपलब्धी इति यथायोगम- न्वयः "येन यस्याभिसम्बन्धो दूरस्थस्यापि तस्य सः" न्यायात् तदेवं स्थूलो नीलः कलस इति चाक्षुषप्रत्यये यथा नीलं रूपं विषयस्तथा परिमाणमपि तेन च परिमाणेन परमाणुपर्य्यन्तं परिमाणमुन्नीयते द्रव्यत्वाच्च किञ्च द्रव्य प्रत्यक्षतायां रूपवत् परिमाणमपि कारणं न हि महत्त्वमन्तरेण द्रव्यं प्रत्यक्षं भवति तथाच द्रव्यप्रत्यक्ष- कारणत्वेन स्वयञ्च प्रत्यक्षतया परिमाणं गुणोऽस्तीति निश्चीयते, यदि हि घटादिस्वरूपं परिमाणं स्यात् तदा महदानयेत्युक्ते घटमात्रमानयेत् तथा च नैवंप्रतिपत्ती विरुध्येयाताम्, एवं घटपदात् परिमाणं प्रतीयेत परि माणपदाद्वा घट इति। मानव्यवहारासाधारणकारणत्वं द्रव्यसाक्षात्कारकारणविषयनिष्ठसामान्यगुणत्वं वा महत्त्वं मानव्यवहारोऽत्र हस्तवितस्त्यादिव्यवहारो न तु पञ्च- सङ्ख्यादिव्यवहारः। तच्च परिमाणं चतुर्विधं महत्त्वमणुत्वं दीर्घत्वं ह्रस्वत्वञ्च, तत्र परममहत्त्वपरमदीर्घत्वे विभु- चतुष्टयवर्त्तिनी परमाणुत्वपरमह्रस्वत्वे परमाणुवर्त्तिनी अवान्तराणुत्वावान्तरह्रस्वत्वे द्व्यणुकवर्त्तिनी त्रसरेणुमारभ्य महावयविपर्य्यन्तं महत्त्वदीर्घत्वे। एवञ्च सर्वाण्यपि द्रव्याणि परिमाणद्वयवन्ति। बिल्वामलकादावणुत्वव्यव- हारः समिदिक्षुदण्डादिषु च ह्रस्वत्वव्यवहारो भाक्तः, भक्तिश्चात्र प्रकर्षभावाभावः। आमलके यः प्रकर्षभावस्त- स्याभावः कुवले, बिल्वे यः प्रकर्षभावस्तस्याभाव आम- लके, स च गौणत्वादुभयभागित्वादुभक्तिपदवाच्यः" दीर्घत्वह्रस्वत्वे नित्ये न वर्त्तेते इत्येके. परिमाणे एव ते न भवत इत्यपरे, महत्त्वं दीर्घमानीयतामितिवत् महत्तद्वर्तुलं त्रिकोणञ्चानीयतामिति निर्धारणव्यव- हारे वृत्तादीनामप्यापत्तेरिति तेषामाशयात्। इदानीं परिमाणकारणानि परिगृह्णन्ते" उप॰ सू॰. "कारणबहुत्वाच्च" सू॰ "चकारो महत्त्वप्रचयौ समुच्चिनोति. परिमाणमुत्पद्यते इति शेषः. तत्र कारणबहुत्वं केवलं त्र्यणुके मह- त्त्वदीर्घत्वे जनयति महत्त्वप्रचययोस्तत्कारणेऽभावात तच्च बहुत्वमीश्वरापेक्षाबुद्धिजन्यं तद्बुद्धेरनेकविषयत्वेऽप्य- दृष्टविशेषोपग्रहो नियामकः। एवं परमाणुद्वयगतं द्वित्वं द्व्यणुके परिमाणोत्पादकं वक्ष्यते द्वाभ्यां तन्तुभ्यामप्यारब्धे- ताभ्यामारब्धे पटे केवलं महत्त्वमेवासमवायिकारणं बहु त्वप्रचययोस्तत्राभावात्। यत्र च द्वाभ्यां तूलकपिण्डाभ्यां तूलकपिण्डारम्भस्तत्र परिमाणोत्कर्षदर्शनात् प्रचयः का- रणं बहुत्वस्याभावात महत्त्वस्य सत्त्वेऽपि परिमाणो- त्कर्षं प्रत्यप्रयोजकत्वात्। एवञ्च सति यदि महत्त्वं तत्र कारणं तदा न दृष्टः तदुक्तम् "द्वाभ्यामेकेन सर्वैर्वा" इति। प्रचयश्च आरम्भकः संयोगः, स च स्वाभिमुख- किञ्चिदवयवायुक्तत्वे सति स्वाभिमुखकिञ्चिदवयवसं- योगलक्षणः, स चावयवसंयोगः स्वावयवप्रशिथिलसंयो गापेक्षः परिमाणजनकः गुणकर्मारम्भे सापेक्ष इति वचनात्" उप॰ सू॰।

एतेन दीर्घत्वह्रस्वत्वे व्याख्याते" सू॰ "अणुत्वमहत्त्व- प्रक्रियां दीर्घत्वह्रस्वत्वयोरतिदिशति। ह्रस्वत्वदीर्घत्वे अपि न ह्रस्वत्वदीर्घत्ववती। महत्त्वोत्पादकमेव दीर्घत्वो त्पादकमणुत्वोत्पादकमेव ह्रस्वत्वोत्पादकम्, कारणैक्यात कथं कार्य्यभेद इति चेन्न प्रागभावभेदेन पाकजवदुपपत्तेः यत्रैव महत्त्वं तत्र दीर्घत्वं यत्राणुत्वं तत्र नियतं ह्रस्वत्व- मित्याद्यतिदेशार्थः" उप॰ सू॰। "अनित्येऽनित्यम्" सू॰। "इदानीं विनाशकमाह एतच्चतुर्विधमपि परिमाणं विनाशिनि द्रव्ये वर्त्तमानमाश्रयनाशादेव नश्यति न तु विरोधिगुणान्तरात्। घटे सत्यपि तत्परिमाणं विनश्यति कथमन्यथा कम्बुभङ्गेऽपि स एवायं घट इति प्रत्यभि- ज्ञेति चेन्न आश्रयनाशेन तत्र घटनाशावश्यकत्वात् न हि परमाणुद्वयसंयोगनाशाद् द्व्यणुके नष्टे तदा- श्रितस्य त्रसरेणोस्तदाश्रितस्य चूर्णपर्य्यन्तादेरविनाश इति युक्तिरभ्युपगमो वा, कथं तर्हि प्रत्यभिज्ञेति चेत्,

चैवेयं दीपज्वालेति प्रत्यभिज्ञानवद्भ्रान्तत्वात्। प्रदीपप्रत्यभिज्ञाऽपि भ्रमैव, ह्रस्वत्वदीर्घत्वे परत्वत्वादविनाशशालिनी इति चेन्न तद्विनाशस्याश्रयविनाशमन्तरेणानुपपत्तेरुक्तत्वात्। तत् किं पार्थिवपरमाणुरूपादिवत् परमाणुगतमणुत्वं शब्दगुणादिवदाकाशादिगतं महत्त्वमपि नश्यतीत्यत आह उप०सू०। "नित्ये नित्यम्" सू० "नित्येष्वाकाशादिषु परमाणुषु च यत् परिमाणं तन्नित्यं विनाशकाभावात्" उप० सू०।

सांख्यसूत्रभाष्ययोस्तु परिमाणद्वैविध्यं व्यवस्थापितं यथा "न परिमाणचातुर्विध्यं द्वाभ्यां तद्योगात्" सू०। "अणु महद्दीर्घं ह्रस्वमिति परिमाणचातुर्विध्यं नास्ति। द्वैविध्यं तु वर्त्तत एव द्वाभ्या तद्योगात् द्वाभ्यामेवाणुमहत्परिमाणाभ्यां चातुर्विध्यसम्भवादित्यर्थः। महत्परिमाणस्यावान्तरभेदावेव हि ह्रस्वदीर्घौ। अन्यथा वक्रादिरूपैः परिमाणानन्त्यप्रसङ्गादिति। तत्राणुत्वेऽणुपरिमाणमाकाशस्य कारणगुणविशेषं वर्जयित्वा भूतेन्द्रियाणां मूलकारणेषु सत्त्वादिगुणेषु मन्तव्यम्। अन्यत्र यथायोग्यं मध्यमादिपरममहत्त्वान्तपरिमाणानि तानि च महत्त्वस्यैवावान्तरभेदा इति"।

दीर्घत्वे कारणञ्च पार्श्वतोयोजितावयवबाहुल्यादिकम् स्थूलत्वे तु अधऊर्ध्वस्थितावयवबाहुल्यादिकमिति भेदः। कालस्य दीर्घत्वप्रयोजकं तदुपाधेर्बहुकालस्थायित्वं तदभिप्रेत्यैव "दीर्घकालनैरन्तर्य्यादरसेवितात्" योगशास्त्रे "दीर्घयामा त्रियामा" इति काव्ये च प्रयोगः। २व्याकरणपरिभाषिते द्विमात्रकालेनोच्चार्य्ये (आ ई ऊ) प्रभृतौ वर्णे च। "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" पा० "एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम्" शिक्षा। "गुहानिबद्धप्रतिशब्ददीर्घम्" रघौ शब्दस्य गुणत्वेऽपि दीर्घत्वं बहुकालस्थायित्वेन भाक्तम्। एवं "हृदयकुसुमशोषी दारुणो दीर्घशोकः" "सा दीर्घं रोदिति विक्षिपत्यत इतः श्यामा भुजावल्लरीम्" सा०द० शोकरोदनयोर्दीर्घत्वं बहुकालस्थायित्वात् भाक्तमेव। ३शालवृक्षे ४इत्कटे पु० ५रामशरे पु० ६उष्ट्रे पुंस्त्री० राजनि० स्त्रियां जातित्वात् ङीष्। "वृश्चिककन्याकुम्भपतिबधिनो दीर्घाः" ज्यो०त० उक्तेषु ७सिंहकन्यातुलावृश्चिकराशिषु पु०।

**दीर्घकणा** स्त्री नित्यकर्म०। श्वेतजीरके राजनि०।

**दीर्घकण्टक** पु०दीर्घः कण्टको यस्य। बर्बुरे (बावला) राजनि०

**दीर्घकण्ठ** पुंस्त्री० दीर्घः कण्ठो यस्य। १बके शब्दच० स्त्रियां जातित्वात् ङीष्। २दानवभेदे पु० ३आयतकण्ठकमात्रे त्रि० "विप्ररोदीर्घकण्ठश्च मद्यपो वातायनः" हरिवं०२४०अ० कर्म०। ४आयते कण्ठे पु०। स्व कप्। दीर्घकण्ठक। बकखगे शब्दच०

**दीर्घकन्द** न०दीर्घः कन्दोऽस्य। १मूलके। दीर्घः कन्दो यस्याः कप् अत इत्वम्। दीर्घकन्दिका २मूषल्याम् स्त्री राजनि०।

**दीर्घकन्धर** पुंस्त्री दीर्घः कन्धरोऽस्य। १बकखगे राजनि०। स्त्रियां ङीष्। २दीर्घकन्धरयुक्ते त्रि० कर्म०। ३दीर्घे कन्धरे पु०।

**दीर्घकाण्ड** पु० दीर्घः काण्डोऽस्य। १गुण्डतृणे २पातालगरुडीलतायां ३तिक्ताङ्गायां स्त्री राजनि०।

**दीर्घकील** पु०दीर्घः कीलो यत्र। १अङ्कोटवृक्षे वा कप्। दीर्घकीलक तत्रैवार्थे कर्म०। २दीर्घे कीले पु०न०।

**दीर्घकूर** न०दीर्घं कूरम्। आन्ध्रदेशोद्भवे शालिभेदे राजान्ने राजनि०

**दीर्घकेश** पुंस्त्री०दीर्घः केश इव लोमास्य। १भल्लूके राजनि० स्त्रियां जातित्वात् ङीष्। २आयतकेशयुते त्रि० स्त्रियां स्वाङ्गत्वात् वा ङीप्। "दीर्घकेशी सुमध्या" इहमाटकम वृ०सं०१४अ०कूर्मविभागे उक्ते पश्चिमोत्तरदिकस्थे ३देशभेदे च यथा "एकविलोचनशूलिकदीर्घग्रीवास्यकेशाश्च"।

**दीर्घकोशि(षि)का** स्त्री दीर्घः को(शो)षो यस्याः कप् अत इत्वम् (झिनुक) शुक्तिकायाम् अमरः। तालव्यमध्योऽपि भरतः।

**दीर्घगति** पु०दीर्घा गतिरस्य। १उष्ट्रे राजनि० तस्य पादविक्षेपस्य बहुदेशान्तरितत्वात्तथात्वम्। [राजनि०।

**दीर्घग्रन्थि** पु० दीर्घो ग्रन्थिः पर्व यस्य। गजपिप्पल्याम्।

**दीर्घग्रीव** पुंस्त्री०दीर्घा ग्रीवा यस्य। १उष्ट्रे राजनि०२नीलक्रौञ्चे हेमच०। स्त्रियां जातित्वात् ङीष्। ३पश्चिमोत्तरदिकस्थे देशभेदे पु० दीर्घकेशशब्दे दृश्यम्। [माला।

**दीर्घघाटिक** पुंस्त्री० दीर्घा घाटाऽस्त्यस्य ठन्। १उष्ट्रे शब्द-

**दीर्घचञ्चु** पु० दीर्घा चञ्चुरस्य। खगभेदे पारस्करनि०।

**दीर्घच्छद** पु०दीर्घाश्छदा यस्य। १इक्षौ शब्दार्थचि०। २दीर्घच्छदके त्रि० कर्म०। ३दीर्घे छदे पु०।

**दीर्घजङ्गल** पुंस्त्री० नित्यकर्म०। भङ्गानमत्स्ये (भाङ्गन) शब्दमाला स्त्रियां ङीष्।

**दीर्घजङ्घ** पुंस्त्री० दीर्घा जङ्घा यस्य। १उष्ट्रे जटाध०।

२वके त्रिकाण्ड० स्त्रियां ङीप्। ३दीर्घजङ्घायुक्ते उष्ट्रादौ त्रि० कर्म०। ४दीर्घायां जङ्घायाम् स्त्री

**दीर्घजिह्व** पुंस्त्री दीर्घा जिह्वा यस्य। १सर्पे हेमच० स्त्रियां ङीष्। २दानवभेदे पु० "गविष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः" भा०आ० ६५अ० ३राक्षसभेदे स्त्रियां टाप्। "ददर्श तत्रसौ ललाटाक्षीं दीर्घजिह्वामजिह्मकाम्" भा०व० २७९ अ०। ५कुमारानुचरमातृगणभेदे "जाटालिका क्रामचरी दीर्घजिह्वा बलोत्कटा" भा०श० ४७अ० दीर्घजिह्वी च छन्दसि पा०नि०ग० स्यापि ङीष् इत्युक्तेर्वे "अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम्" ऋ० ९।१०१।१।

**दीर्घजीविन्** त्रि० दीर्घं बहुकालं जीवति जीव–णिनि। बहुकालजीविनि। "तेन कालेन जायन्ते मानवा दीर्घजीविनः" मनुः।

**दीर्घतन्तु** पु० दीर्घास्तन्तवः सूत्रमयोऽस्य। पवनतन्तिके देशादौ "दीर्घतन्तुं हृदुत्था यमस्मि" ऋ० १।८।१७ २दीर्घकालव्यापिसन्तानके। कर्म०। ३दीर्घे तन्तौ पु०।

**दीर्घतपस्** त्रि० दीर्घं बहुकालव्यापकं तपोऽस्य। १बहुकालव्यापकतपस्के २आयुर्वेदज्ञे नृपभेदे पु० "काश्यपस्य काश्यपः पुत्रो राजा दीर्घतपास्तथा। धन्वस्तु दीर्घतपसो विद्वान् धन्वन्तरिः सुतः" हरिवं० २९ अ० आयुर्वेदाज्ञौ।

**दीर्घतमस्** पु० उतथ्यर्षेः पुत्रे गुरुशापात् जन्मान्धे ऋषिभेदे तत्कथा उतथ्यशब्दे १०७१पृ० उक्ता दृश्या "स वै दीर्घतमा नाम शापादृषिरजायत। बृहस्पतेर्बृहत्कीर्त्तिर्बृहस्पतिरिवौजसा। जात्यन्धो वेदवित् प्राज्ञः पत्नीं लेभे स विद्यया" भा०आ०१०४अ० "ऋषिर्दीर्घतमा नाम जात्यन्धो गुरुशापतः। त्वत्प्रसादाच्च चक्षुष्मान् तेन सत्येन भोजय" हरिवं० ६२अ० "दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे" ऋ० १।१५८।६

**दीर्घतरु** पु० नित्यकर्म०। तालवृक्षे शब्दार्थकल्प०। २दीर्घ तमाले च। [शब्दमाला।

**दीर्घतिमिष** स्त्री तिम–षा नित्यकर्म०। कर्कट्याम्

**दीर्घतुण्डा** स्त्री दीर्घं तुण्डमस्याः। छुछुन्दर्यां भावप्र०। २दीर्घतुण्डयुक्ते गजादौ पुंस्त्री०। कर्म०। ३दीर्घे तुण्डे न०।

**दीर्घतृण** पु० दीर्घं तृणमस्य। १पल्लिवाहे राजनि० कर्म०। २दीर्घे तृणे न०

**दीर्घदण्ड** पु० दीर्घो दण्ड इव काण्डोऽस्य। १एरण्डवृक्षे २गोरक्षां स्त्री भावप्र० गौरा०ङीष्। ३गोरक्षीवृक्षे स्त्री टाप् राजनि०।

**दीर्घदर्शिन्** पु० दीर्घं दीर्घात् वा पश्यति दृश–णिनि। १भाविकार्य्यज्ञे २पण्डिते च अमरः। ३गृध्रे पु० शब्दरत्ना०। ४भल्लूके राजनि०। ५दूरात् दर्शके त्रि०। "न हि धर्मं पुरस्कृत्य दीर्घदर्शी परं हितम्" भा०स० ४८अ० [र्येन ब०। २दूरवीक्षणे यन्त्रभेदे हला०

**दीर्घदृष्टि** पु० दीर्घा दृष्टिरस्य। १पण्डिते। दीर्घा दूरगो दृष्टि-

**दीर्घद्रु** पु० नित्यकर्म०। १तालवृक्षे शब्दच० कर्म०। २दीर्घे वृक्षे

**दीर्घद्रुम** पु० नित्यकर्म०। शाल्मलिवृक्षे (शिमुल) राजनि०।

**दीर्घनाद** पु० दीर्घो दूरगामित्वात् विस्तीर्णो नादोऽस्य बहुव्री० न समस। १शङ्खे राजनि० २बहुकालस्थायिशब्दयुक्ते घण्टादौ त्रि०। कर्म०। ३आयते शब्दे पु०।

**दीर्घनाल** पु० दीर्घं नालं यस्य। १यावनाले हेमच० गुण्डतृणे २दीर्घरोहिषके न० राजनि०।

**दीर्घनास** त्रि० दीर्घा नासाऽस्य। १दीर्घनासिकान्विते। "शुक्लचारी दीर्घनासो दद्यात् गां धवलप्रभाम्" शातातपेन तत्कर्मविपाक उक्तः। कर्म०। २दीर्घायां नासायां स्त्री

**दीर्घनिद्रा** स्त्री नित्यकर्म०। १मरणे कर्म०। २चिरकालव्यापिन्यां निद्रायाञ्च "अकाले बोधितो भ्रात्रा प्रियस्वप्नो वृथा भवान्। रामेषुभिरितीवासौ दीर्घनिद्रां प्रवेशितः" रघुः।

**दीर्घपक्ष** पु० दीर्घौ पक्षौ यस्य। १कलिङ्गखगे शब्दच०। २दीर्घपक्षयुक्ते खगमात्रे पुंस्त्री०।

**दीर्घपटोलिका** स्त्री कर्म्मिता पटोली कन् कर्म०। (धुँधुल) ख्यातायां लतायाम् राजवल्लभः।

**दीर्घपत्र** पु० दीर्घं पत्रं यस्य। १राजपलाण्डौ २विष्णुकन्दे ३हरिदर्भे ४कुन्दरे ५तालवृक्षे च राजनि० ६कृष्णेक्षौ भावप्र० कपसंज्ञायां कन् वा। दीर्घपत्रक ७रक्तलशुने ८पलाण्डौ ९हिज्जले १०वेतसे च राजनि०। ११करीरवृक्षे शब्दच० १२जलजमधूके जटाध० १३लशुने हेमच० काक्षिमत इत्यम्। दीर्घपत्रिका १४श्वेतवचायां १५शालपर्ण्यां १६घृतकुमार्याञ्च स्त्री राजनि०।

**दीर्घपत्रा** स्त्री दीर्घं पत्रं यस्याः। १चित्रपर्णिकायां (चाकुलिया) भेदे २क्षुद्रजम्बूवृक्षे रत्नमाला ३गन्धपत्रायां ४केतक्यां ५डोरीवृक्षे च राजनि०। गौरा०ङीष् दीर्घपत्री ६पलाशीलतायां ७महाचञ्चुशाके स्त्री राजनि०।

**दीर्घपर्णी** स्त्री दीर्घं पर्णं यस्याः गौरा० ङीष्। पृश्निपर्ण्याम् राजनि०।

**दीर्घशाख** पु० दीर्घा शाखा यस्य । १शालवृक्षे संज्ञायां कन् टाप् अत इत्त्वम् । २एलापर्ण्याम् स्त्री राजनि० । वा कप् अत इत्त्वम् । दीर्घशाखिका श्वेतालम्बुषाम् राजनि०।

**दीर्घशिम्बिका** स्त्री दीर्घा शिम्बी यस्य कप् ह्रस्वः । क्षुपे (नाकछिक्नी) ख्याते राजनि०।

**दीर्घशूक** पु० दीर्घः शूकोऽग्रमस्य । शालिभेदे संज्ञायां कन् । दीर्घशूकः राजान्ने राजनि० कर्म०। २दीर्घे शूके न०

**दीर्घश्रवस्** पु० दीर्घं श्रवोऽस्य । दीर्घतमसः पुत्रे ऋषिभेदे "औशिजाय वणिजे दीर्घश्रवसे" ऋ० १।११२।११ "उशिक् संज्ञा दीर्घतमसः पत्नी तस्याः पुत्रो दीर्घश्रवा नाम कश्चिदृषिरनावृष्टौ जीवनार्थमकरोत् वाणिज्यम्" भा० २दीर्घकर्णयुक्ते त्रि० कर्म०। ३दीर्घे कर्णे न०।

**दीर्घसत्र** न० कर्म० । १दीर्घकालिके यज्ञभेदे हेम०। २तत्कर्त्तरि त्रि०। 'हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः' रघु० । दीर्घाणि सत्राणि कृतानि यत्र । ३तीर्थभेदे 'ततो गच्छेत धर्मज्ञ ! दीर्घसत्रं यथाक्रमम । तत्र ब्रह्मादयो देवाः सिद्धाश्च परमर्षयः । दीर्घसत्रमुपासन्ते दीक्षिता नियतव्रताः । गमनादेव राजेन्द्र ! दीर्घसत्रमरिन्दम ! । राजसूयाश्वमेधाभ्यां फलं प्राप्नोति भारत भा०व०८२अ० । ४यावज्जीवकर्त्तव्ये अग्निहोत्रे न० "दीर्घसत्रं ह वा एत उपयन्ति येऽग्निहोत्रं जुह्वत्येतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वा ह्येवास्मान्मुच्यन्ते मृत्युना वा" शत०ब्रा० १२।४।१।१

**दीर्घसत्रिन्** पु० दीर्घसत्रमस्त्यस्य इनि । १बहुकालिकसत्रकारके २यावज्जीवकर्त्तव्याग्निहोत्रिणि च, "यदेतस्य दीर्घसत्रिणोऽग्निहोत्रं जुह्वतोऽन्तरेणाग्नी युक्तं वा वियायात्" शत०ब्रा० १२।४।१।२

**दीर्घसुरत** पुंस्त्री० दीर्घं बहुकालव्यापकं सुरतमस्य । १कुक्कुरे त्रिका० स्त्रियां जातित्वात् ङीप् । कर्म० । २आयते सुरते न० ।

**दीर्घसूक्ष्म** पु० कर्म०। पात०सू० भाष्योक्ते प्राणायामभेदे तत्स्वरूपादि तत्रोक्तं यथा

"तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" सू०। "सत्यासनजये बाह्यस्य वायोराचमनं श्वासः । कौष्ठ्यस्य वायोर्निःसारणं प्रश्वासः तयोर्गतिविच्छेद उभयाभावः प्राणायामः" भा० । "बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः" सू० । "यत्र प्रश्वासपूर्वको गत्यभावः स बाह्यः यत्र श्वासपूर्वको गत्यभावः स आभ्यन्तरः तृतीयस्तम्भवृत्तिर्यत्रोभयाभावः सकृत्प्रयत्नाद्भवति यथा तप्ते न्यस्तमुपले जलं सर्वतः सङ्कोचमापद्यते । तथा द्वयोर्युगपद्गत्यभाव इति । त्रयोऽप्येते देशेन परिदृष्टाः, इयानस्य विषयो देश इति । कालेन परिदृष्टाः क्षणानामियत्तावधारणेनावच्छिन्ना इत्यर्थः । सङ्ख्याभिः परिदृष्टाः एतावद्भिः श्वासप्रश्वासैः प्रथम उद्घातस्तद्वत् निगृहीतस्यैतावद्भिः द्वितीय उद्घातः एवं तृतीयः एवं मृदुरेवं मध्य एवं तीव्र इति सङ्ख्यापरिदृष्टः स खल्वयमेवमभ्यस्तो दीर्घसूक्ष्मः" भा० । "बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः" सू० । "देशकालसङ्ख्याभिर्बाह्यविषयः परिदृष्ट आक्षिप्तः तथाभ्यन्तरविषयः परिदृष्ट आक्षिप्तः उभयथा दीर्घसूक्ष्मः तत्पूर्वको भूमिजयात् क्रमेणोभयोर्गत्यभावश्चतुर्थः प्राणायामः । तृतीयस्तु विषयानालोचितो गत्यभावः सकृदारब्ध एव देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मश्चतुर्थस्तु श्वासप्रश्वासयोर्विषयावधारणात् क्रमेण भूमिजयादुभयाक्षेपपूर्वको गत्यभावश्चतुर्थः प्राणायामः इत्ययं विशेषः" भा० ।

**दीर्घसूत्र** त्रि० दीर्घेण चिरकालेन सूत्रमीप्सितव्यापारो यस्य । १चिरकालेन प्रारब्धकर्म्मानुष्ठातरि अमरः । "दीर्घसूत्रस्य आपत्प्राप्तिरिति ह्रासमुखेन' भा०शा०१३७अ० दर्शिता तथा "अनागतविधाता च प्रत्युत्पन्नमतिश्च यः । द्वावेव सुखमेधेते दीर्घसूत्रो विनश्यति । अत्रैव चेदमव्यग्रं शृणु व्याख्यानमुत्तमम् । दीर्घसूत्रमुपाश्रित्य कार्य्याकार्य्यविनिश्चये । नातिगाधे जलाधारे सुहृदः शकुलास्त्रयः । प्रभूतमत्स्ये कौन्तेय ! बभूवुः सहचारिणः । तत्रैको दीर्घकालज्ञ उत्पन्नप्रतिभोऽपरः । दीर्घसूत्रश्च तत्रैकस्त्रयाणां सहचारिणाम् । कदाचित् तं जलाधारं मत्स्यबन्धाः समन्ततः । निःस्रावयामासुरथो निम्नेषु विविधैर्मुखैः । प्रक्षीयमाणं तं दृष्ट्वा जलाधारं भयागमे । अब्रवीद्दीर्घदर्शी तु तावुभौ सुहृदौ तदा । इयमापत् समुत्पन्ना सर्वेषां सलिलौकसाम् । शीघ्रमन्यत्र गच्छामः पन्था यावन्न दुष्यति । अनागतमनर्थं हि सुनयैर्यः प्रबाधयेत् । स न संशयमाप्नोति रोचतां भो व्रजामहे । दीर्घसूत्रस्तु यस्तत्र सोऽब्रवीत् सम्यगुच्यते । न तु कार्य्या त्वरा तावदिति मे निश्चिता मतिः । अथ सम्प्रतिपत्तिज्ञः प्राब्रवीद्दीर्घदर्शिनम् । प्राप्ते काले न मे किञ्चिन्न्यायतः परिहास्यते । एवं श्रुत्वा निराक्रामद्दीर्घदर्शी महामतिः । जगाम स्रोतसा तेन गम्भीरं

वर्त्तिकाशयम्। ततः प्रत्युत्तनोयन् प्रत्तमीक्ष्य जलाशयम्। बहुभिर्विविधैर्योगैर्मत्स्यान् मत्स्योपजीविनः विलोड्यमाने तस्मिंस्तु प्रतनीये जलाशये। अनागतविधानं तत्र दीर्घसूत्रः सहापरैः। उद्धाने क्रियमाणे तु मत्स्यानां तत्र रज्जुभिः। प्रविश्यान्तरमेतेषां स्थितः सम्प्रतिपत्तिमान्। गृहीतमेव तदुद्धानं गृहीत्वा तं तथैव सः। सर्वानेव च तांस्तत्र ते विदुर्ग्रथितानिति। ततः प्रक्षाल्यमानेषु मत्स्येषु विमले जले। मुक्त्वा रज्जुं प्रमुक्तोऽसौ शीघ्रं सम्प्रतिपत्तिमान्। दीर्घसूत्रस्तु मन्दात्मा हीनबुद्धिरचेतनः। मरणं प्राप्तवान् मूढो यथैवोपहतेन्द्रियः। एवं प्राप्ततमं कालं यो मोहान्नावबुध्यते। स विनश्यति वै क्षिप्रं दीर्घसूत्रो यथा झषः। आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान्। स संशयमवाप्नोति यथा सम्प्रतिपत्तिमान्। अनागतविधाता च प्रत्युत्पन्नमतिश्च यः। द्वावेव सुखमेधेते दीर्घसूत्रो विनश्यति" कर्ण०। २दीर्घे सूत्रे न०। ६त०। ३दीर्घतन्तुके त्रि० "दीर्घसूत्रमकरोत् परिधानम्" माघः।

**दीर्घसूत्रिन्** त्रि० दीर्घं सूत्रं कर्तव्यव्यापारोऽस्यास्य इनि। चिरक्रियावति। "अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः। विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते" गीता। "यदह्ना कार्यं तन्मासेनापि यो न सम्पादयति स दीर्घसूत्री" शा०त० रघु०।

**दीर्घस्कन्ध** पु० दीर्घः स्कन्धः काण्डोऽस्य। तालवृक्षे राजनि०

**दीर्घा** स्त्री दीर्घ+टाप्। पृश्निपर्ण्याम् राजनि०।

**दीर्घाध्वग** पु० दीर्घमायतमध्वानं गच्छति गम–ड ६त०। (धावोडिया) ख्याते पत्रवाहकभेदे।

**दीर्घायु** त्रि०दीर्घमायुः यस्य। चिरकालजीविनि "जीवातुश्च दीर्घायुत्वं मे" यजु०१८।६ "दीर्घायुत्वाय प्रति दत्त न आयुः" ऋ०८।५६।७

**दीर्घायुध** पु० नित्यकर्म०। कुन्तास्त्रे त्रिका०। दीर्घं दन्तरूपमायुधं यस्य दीर्घात् आयुध्यते आ+युध–क। १शूकरे पुंस्त्री शब्दमा०।

**दीर्घायुष्य** पु०दीर्घमायुष्यं यस्य। १श्वेतमन्दारकवृक्षे २मार्कण्डेये च राजनि०। ३आयतायुर्युक्ते ४चिरजीविमात्रे च त्रि० कर्म०। ५दीर्घे बहुकालव्यापके आयुषि तत्कारणत्वं मनुना। "ऋषयो दीर्घसन्ध्यत्वात् दीर्घमायुरवाप्नुयुः"।

**दीर्घायुस्** पु०दीर्घमायुरस्य। १दीर्घायुष्ययुक्ते २चिरजीविमात्रे च। "दीर्घायुष्को भोषधे! खनिता" यजु० १।३।१००

**दीर्घालर्क** पु० दीर्घोऽलर्क इव। श्वेतमन्दारवृक्षे राजनि०।

**दीर्घास्य** त्रि० दीर्घमास्यं यस्य। १आयतमुखे २हस्तिनि च ३शिवानुचरभेदे दीर्घजीवनशब्दे दृश्यम् दीर्घमास्यं यत्र देशे। ४पश्चिमोत्तरदेशभेदे ह०सं०१४अ०वाक्यं दीर्घग्रीवशब्दे दृश्यम्।

**दीर्घाहन्** पु०दीर्घाण्यहानि यत्र। निदाघसमये हृ "हन्नत्रादि" पा० सुलोपे प्रत्ययलक्षणेन "रोऽसुपि" पा० रकारनिषेधेन पदत्वासिद्धत्वात् न नान्तलक्षण उपधादीर्घः" सि०कौ०। दीर्घाह्ना इत्यत्र "अह्नोऽदन्तात्" पा० णत्वम् कर्म०। "राजाहःसखिभ्यः टच्" पा० टच्। दीर्घाह दीर्घदिवसे पु०।

**दीर्घिका** स्त्री दीर्घैव स्वार्थे क कापि अत इत्वम्। १जलाशयभेदे तत्प्रमाणं जलाशयोत्सर्गतत्त्वे यथा मत्स्यवर्द्धमानधृतवचनम् "शतेन धनुर्भिः पुष्करिणी। त्रिभिः शतैर्दीर्घिका, चतुर्भिर्द्रोणः पञ्चभिस्तडागः।। द्रोणाद्दशगुणा वापी" इति संक्षिप्तायामन्तरपदश्रुतेरन्तार्थ नयायगम्यते। तेन चतुर्दिक्षु पञ्चविंशत्यानूनतायां द्वादशशतहस्तान्तरानूनत्वेन दीर्घिका" "गृह्णाति क्षोभति दीर्घिकाणाम्" रघुः। २जलाशयमात्रे "स्वर्णदीर्घिका" अमरः दीर्घिकाभिश्च पूर्णाभिस्तथा पुष्करिणीभिर्हि" भा०आ० १२८अ०।

**दीर्घवीक्** नित्यकर्म०। वक्रतरीलताभेदे राजनि०। [४भये च न०

**दीर्ण** त्रि० दॄ–क्त। १विदारिते २भीते च भावे क्त। ३विदारे

**दीप** त्रि०दी–क्षये क्विप् तां स्यति सो–क। क्षयनाशके गवादिगणे दीप्रेत्यत्र दीपेति पाठान्तरात् छितादौ यत्। दीप्य तद्धितादौ त्रि०।

**दु** गतौ भ्वा०पर०सक०अनिट्। दवति अदौषीत् केचित्तु वेडयमित्याहुस्तेन अदावीदित्यपि। दुदाव वेट् क्वचिदपि लिटि नित्येट् दुदुविथ। दूनः। "चिरेण दूने रसने सितादि" नैष०।

**दु** उपतापे स्वा०प०सक०सेट्। उपतापः पीडनम्। दुनोति अदावीत् अदौषीत् लिटि नित्येट् दुदुविथ। दुतः। "अदुतया दुतया" माघः। "दुनोति निर्गन्धतया स्म चेतः" कुमा०"स भक्तसाधुकारादीन् दुदाव च क्षमातलवत्" भट्टिः "अद्रु दूयेत यदक्रमर्पितम्" रघुः कर्मकर्त्तरि रूपं दू–कर्त्तरि दैवादिकस्य वा रूपम्।

**दुःक(दुष्क)र्ण** पु॰ वा सत्वम्। धृतराष्ट्रपुत्रभेदे "दुर्मर्षणो दुर्मुख च दुष्कर्णः कर्ण एव च" भा॰ आ॰ ६७अ॰ तत्पुत्रोक्तौ।

**दुःख** दुःखकरणे कण्ड्वा॰ पर॰अक॰ सेट्। दुःख्यति अदुःख्यीत् अदुःखीत्। [अदुदु.खत् त।

**दुःख** तत्क्रियायाम् अद-चु॰उभ॰अक॰ सेट्। दुःखयति ते

**दुःख** न॰ दुष्टानि खानि यस्मिन्, दुष्टं खनति खन—ड, दुःख—अच् वा। सांख्यादिमतसिद्धे प्रतिकूलवेदनीये रजःकार्य्ये १चित्तादिधर्मभेदे। न्यायमते २आत्मधर्मभेदे "बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा। धर्म्माधर्म्मौ गुणा एते आत्मनः स्युश्चतुर्दश। अधर्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम्" भाषा॰ 'अधर्मत्वेन दुःखत्वेन कार्य्यकारणभावः। प्रतिकूलं, दुःखत्वज्ञानादेव सर्वेषां स्वाभाविकविषयः प्रतिकूल इत्यर्थः' सि॰ मु॰। "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्" गौ॰ सू॰ "यज्जातीयस्यार्थस्य सन्निकर्षात् सुखमात्मोपलब्धवान्। तज्जातीयमेवार्थं पश्यन्नुपादातुमिच्छति सेयमादातुमिच्छा एकस्यानेकार्थदर्शिनोदर्शनप्रतिसन्धानाद् भवति लिङ्गमात्मनः, नियतविषये हि बुद्धिभेदमात्रे न सम्भवति देहान्तरवदिति। एवमेकस्यानेकार्थदर्शिनोदर्शनप्रतिसन्धानाद् दुःखहेतौ द्वेषः। यज्जातीयो यस्यार्थः सुखहेतुः प्रसिद्धस्तज्जातीयमर्थं पश्यन्नादातुम् प्रयतते, सोऽयम् प्रयत्न एकमनेकार्थदर्शिनं दर्शनप्रतिसन्धातारमन्तरेण न स्यात् नियतविषये बुद्धिभेदमात्रे न सम्भवति देहान्तरवदिति एतेन दुःखहेतौ प्रयत्नो व्याख्यातः। सुखदुःखस्मृत्या चायं तत्साधनमाददानः सुखमुपलभते दुःखमुपलभते सुखदुःखे वेदयते पूर्वोक्त एव हेतुः" भा॰ "द्वितीयस्तत्र भाष्ये च 'दोषैः प्रयुक्तः शरीरेण प्रवर्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति वाचा अनृतपरुषसूचनाऽसम्बद्धानि मनसा परद्रोहं परद्रव्याभीप्सा नास्तिक्यञ्चेति सेयं पापात्मिका प्रवृत्तिरधर्म्माय" उक्तम्।

कणा॰सूत्रे उपस्कारवृत्तौ च सुखदुःखयोः परस्परभेदः, ज्ञानाद्भेदश्च साधितो यथा

"इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः" सू॰। "आत्मगुणानां कारणभेदव्युत्पादन दशमाध्यायार्थः, तत्र "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" इति गौतमीये प्रमेयविभागसूत्रे सुखस्यानभिधानात् दुःखाभिन्नमेव सुखमिति भ्रमनिरासार्थं सुखदुःखयोरेव प्रथमं भेदमाह। सुखदुःखयोर्मिथः परस्परमर्थान्तरभावोभेदो वैजात्यमिति यावत् कुत इत्यत आह इष्टानिष्टकारणविशेषात् इष्टस्य इष्यमाणं स्रक्चन्दनवनितादि अनिष्टमनिष्यमाणमहिकण्टकादि, तद्रूपं यत्कारणं तस्य विशेषाद्भेदात् कारणवैजात्याधीनं कार्य्यवैजात्यमावश्यकं यतः। भेदकान्तरमाह विरोधात् एकाधिकरणासमवायात् नह्येकस्मिन्नात्मन्येकदा सुखदुःखयोरनुभवः। चकारादनयोः कार्य्यभेदं भेदकं समुच्चिनोति, तथाहि अनुग्रहाभिष्वङ्गनयनप्रसादादि सुखस्य, दैन्यमुखमालिन्यादि दुःखस्य कार्य्यमिति ततोऽप्यनयोर्भेदः। तदुक्तं प्रशस्तपादाचार्यैः "अनुग्रहलक्षणं सुखं स्रगाद्यभिप्रेतविषयसान्निध्ये सति इष्टोपलब्धीन्द्रियार्थसन्निकर्षाद्धर्माद्यपेक्षादात्ममनसोः संयोगाद्यदुत्पद्यतेऽनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत् सुखम्" इति तदिदमतीतेषु स्रक्चन्दनादिषु स्मृतिजम्, अनागतेषु सङ्कल्पजम्, गौतमीये सूत्रे सुखापरिगणनं वैराग्याय, सुखमपि दुःखत्वेन भावयतो वैराग्यं स्यादेतदर्थमिति" उप॰ वृ॰। "नन्वात्मनि सुखदुःखे परस्परं भिन्ने ज्ञानादभिन्ने स्यातां स्मृत्यनुभववदित्यत आह उप॰ वृ॰ "संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः" सू॰ "सुखदुःखयोर्ज्ञानान्तरत्वे ज्ञानभेदत्वे संशयनिर्णयान्तरत्वाभावो हेतुर्लिङ्गमित्यर्थः, तदयमर्थः सुखं दुःखं वा ज्ञानं भवत् संशयरूपं वा स्यात् निर्णयरूपं वा नाद्यः कोटिद्वयानुल्लेखित्वात्, न द्वितीयः एककोट्यनुल्लेखित्वात्, तथा च व्यापकनिषेधात् व्याप्यनिषेधः; द्वावेव हि ज्ञानस्य विशेषौ संशयत्वं निर्णयत्वञ्च तदुभयञ्च, सुखे दुःखे च बाधितमिति ज्ञानत्वमपि तत्र बाधितम्। चकारादनुभवबाधं समुच्चिनोति सुखदुःखयोरहं सुखी दुःखीति मानसोऽनुभवो भवति ज्ञाने सन्दिह्मि निश्चिनोमीत्याकारोऽनुभव इति। भेदकान्तरमाह उप॰ वृ॰ "तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम्" सू॰ "तयोः संशयनिर्णययोर्निष्पत्तिरुत्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् सुखं दुःखं वा न प्रत्यक्षजन्यं न वा लिङ्गजन्यम्, चतुर्विधं हि सुखं वैषयिकमानोरथिकम् आभिमानिकमाभ्यासिकञ्च, तत्र तथाप्यानिन्द्रियसन्निकर्षप्रभवत्वं नास्त्येव। प्रथममिन्द्रियार्थसन्निकर्षजन्यत्वात् ज्ञानं स्यादिति चेन्न सामग्र्येकदेशस्य कार्य्यस्य साजात्यानापादकत्वात् अन्यथा दिक्कालसाधारण्येन सकलकार्य्यैकजात्यापत्तेः, किञ्च इन्द्रियार्थसन्निकर्षादुत्पद्यमानं सुखं निर्विकल्पकं वा स्यात् सविकल्पकं,

वा, नाद्यः अतीन्द्रियत्वप्रसङ्गात्, न द्वितीयः विशेष्यविशेषणभावेन द्वयोरेकाकलनस्वरूपत्वात् । किञ्च सुखदुःखयोःस्वसंवेद्यत्वात् ज्ञानस्यानुव्यवसायवेद्यत्वेऽनवस्थाप्रसङ्गात् । लैङ्गिकमिति लिङ्गमेव वैषयिकवत् । दार्ष्टान्तिकस्तु तयोर्ज्ञानसुखयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्यां प्रत्यक्षलैङ्गिकज्ञानव्याख्यानाभ्यां व्याख्याता, प्रत्यक्षं ज्ञानमिन्द्रियजम्, लैङ्गिकन्तु लिङ्गजम्, सुखादिकन्तु नैतादृशमिति व्याचक्षुः” उप० सू० । “अभूदित्यपि” सू० “लैङ्गिकज्ञानात् सुखादेः प्रकारभेदाधीनं भेदमाह इति शब्दः प्रकारं, अपिशब्दो भविष्यतीत्याकारान्तरसमुच्चये, तथाच पर्वते वह्निरभूद्भविष्यति वेति लैङ्गिके ज्ञानेऽतीतादिः प्रकारो दृश्यते न चैवं प्रकारं सुखं दुःखं वा उत्पद्यमानमुपलब्धम्” उप० सू० । ‘सति च कार्यादर्शनात्’ सू० “पुनरन्यं भेदकान्तरं समुच्चिनोति । सति इन्द्रियार्थसन्निकर्षे सति च व्याप्तिपक्षधर्मतादिप्रतिसन्धाने कार्यस्य सुखस्य दुःखस्य वाऽदर्शनात् न प्रत्यक्षमात्रं सुखं दुःखं वा न लैङ्गिकमात्रं वा, तदयमर्थः ज्ञानसामान्यमात्रात् सुखदुःखे न भवत इत्युक्तं ज्ञानविशेषः प्रत्यक्षज्ञानं वा भवदनुमितिरूपं वा इन्द्रियार्थसन्निकर्षे स्रक्चन्दनादिप्रत्यक्षे सुखस्यानुभवाभावात्, न द्वितीयः चन्दनाद्यनुमितौ वह्न्याद्यनुमितौ वा सुखस्य दुःखस्यान्यतराननुभवात् । एव प्रत्यक्षविशेषेऽनुमितिविशेषे वा सुखदुःखयोरननुभवान्न तद्विशेषोऽपीति” उप० सू० । ‘एकार्थसमवायिकारणान्तरेषु दृष्टत्वात्” सू० । ‘भेदकान्तरमाह सुखदुःखयोरिति शेषः, सुखं प्रति एकार्थसमवेतानि असाधारणकारणानि धर्म्मः, सुखे रागः सुखकारणेच्छा, तदुपादानरूपं स्रक्चन्दनादिज्ञानम् । दुःखं प्रति तु अधर्म्मः, अनिष्टकण्टकादिज्ञानम्, एषु एकार्थसमवायिषु कारणेषु दृष्टत्वादित्यर्थः, ज्ञानन्तु निर्विकल्पकमेकार्थसमवेतमसाधारणकारणं नापेक्षत एव, सविकल्पकन्त्वपेक्षते विशेषणज्ञानं तच्च कारणान्तरं स्वविजातीयं कारणं न भवति, मनःसंयोगस्तु साधारणत्वादविवक्षितः । यद्यपि स्मृतिः संस्कारमसाधारणमपेक्षते तथापि तद्भेदः स्फुट एव एवंत्वनुभवमादाय भेदाभिधानात् । लैङ्गिके यद्यपि व्याप्तिस्मृतिपक्षधर्मतादिज्ञानापेक्षा तथाप्यन्तरशब्देनैव तद्व्युदासः । तदयं प्रमाणप्रयोगः सुखदुःखे अनुभवभिन्ने स्वसमानाधिकरणसजातीयासाधारणकारणजन्यत्वात् स्मृतिवदाद्यशब्दवच्च” उप० सू० ।

सांख्यास्तु तस्य रजःकार्यत्वम् चित्तस्य विषयाणाञ्च धर्मत्वं तत्त्ववैशारदीकृतः । यथा हि “दुःखत्रयाभिघातादित्यादि” सा० का० तत्त्वकौमुद्यामुक्तं यथा “दुःखानां त्रयं दुःखत्रयं तत् खलु त्रिविधम् आध्यात्मिकमाधिभौतिकमाधिदैविकञ्च तत्राध्यात्मिकं द्विविधं शारीरं मानसञ्च । शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तं, मानसं कामक्रोधलोभमोहभयेर्ष्याविषादविषयविशेषादर्शननिबन्धनम् । सर्वं चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम् । बाह्योपायसाध्यञ्च दुःखं द्वेधा आधिभौतिकमाधिदैविकञ्च तत्राधिभौतिकं मानुषपशुपक्षिसरीसृपस्थावरनिमित्तम् । आधिदैविकं यक्षराक्षसविनायकग्रहाद्यावेशनिबन्धनम् । तदेतत् प्रत्यात्मवेदनीयं दुःखं रजःपरिणामभेदो न शक्यते प्रत्याख्यातुम् । तदनेन दुःखत्रयेणान्तःकरणवर्त्तिना चेतनाशक्तेः प्रतिकूलतयाभिसम्बन्धोऽभिघातः इति । एतावता प्रतिकूलवेदनीयत्वं जिहासाहेतुरुक्तः । यद्यपि न सन्निरुध्यते दुःखं तथापि तदभिभवं शक्यः कर्त्तुमित्युपरिष्टादुपपादयिष्यते”

“भोग्ये हि सुखदुःखे अनुकूलप्रतिकूलवेदनीये प्रत्यात्ममनुभूयेते तेनानयोरनुकूलनीयेन प्रतिकूलनीयेन च केनचिदन्येन भवितव्यं ये चानुकूलनीयाः प्रतिकूलनीया वा बुद्ध्यादयस्तेषां सुखदुःखात्मकत्वेन स्वात्मनि वृत्तिविरोधात् । तस्माद्योऽसुखदुःखात्मा सोऽनुकूलनीयः प्रतिकूलनीयो वा स चात्मेति” सा० प्र० भा० ।

सर्वेषां त्रिगुणात्मकत्वात् विषयस्यापि सुखदुःखात्मकत्वं त० कौ० व्यवस्थापितं यथा

“अत्र च सुखदुःखमोहाः परस्परविरोधिनः स्वानुरूपाणि सुखदुःखमोहात्मकान्येव निमित्तानि कल्पयन्ति । तेषाञ्च परस्परमभिभाव्याभिभावकभावान्नानात्वम् । तद्यथा एकैव स्त्री रूपयौवनकुलशीलसम्पन्ना स्वामिनं सुखाकरोति तत्कस्य हेतोः ? स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात् । सैव स्त्री सपत्नीर्दुःखाकरोति तत्कस्य हेतोः ? ताः प्रति तस्या दुःखरूपसमुद्भवात् । एवं पुरुषान्तरं तामविन्दत् सैव मोहयति तत्कस्य हेतोः ? तं प्रति तस्या मोहरूपसमुद्भवात् । अनया च स्त्रिया सर्वे भावा व्याख्याताः । तत्र यत् सुखहेतुस्तत् सुखात्मकं सत्त्वं, यत् दुःखहेतुस्तद्दुःखात्मकं रजः, यन्मोहहेतुस्तन्मोहात्मकं तमः, सुखप्रकाशलाघवानां त्वेकस्मिन् युगपदुद्भूतावविरोधः सहदर्शनात् । तस्मात् सुखदुःखमोहैरिव

विरोधिभिरेकैकगुणवृत्तिभिः सुखप्रकाशलाघवैर्न निमित्त-भेदा उन्नीयन्ते एवं दुःखोपष्टम्भकप्रवर्त्तकत्वैरेवं मोह-गुरुत्वावरणैरिति सिद्धं त्रैगुण्यमिति"।

दुःखादीनाञ्च सा॰ प्र॰ भा॰ विषयगतत्वं यद्दर्शितं तच्च आनन्दशब्दे ७७२ पृ॰ दृश्यम् "प्रीत्यप्रीतिविषादा-द्यैर्गुणानामन्योन्यवैधर्म्यम्" सा॰ सू॰

'गुणानां सत्त्वादिद्रव्याणामन्योऽन्यं सुखदुःख-विषादाद्यैः साधर्म्यं कार्येषु तद्दर्शनादित्यर्थः। शोकादिकं च घटादेरपि रूपादिवदेव धर्मोऽन्तःकरणोपादानत्वा-दन्यकार्याणामित्युक्तम्। सत्त्वादियज्ञपाद्याः पञ्च-शिखाचार्यैरुक्ताः यथा "सत्त्वं नाम प्रसादलाघवाभिष्वङ्ग-प्रीतितितिक्षासन्तोषादिरूपानन्तभेदं समासतः सुखात्म-कम्। एवं रजोऽपि शोकादिनानाभेदं समासतो दुःखात्मकम्" सा॰ प्रवचनभाष्यम्।

दुःखस्य चित्तवृत्तिविशेषरूपत्वम् शङ्करभाष्ये उक्तम् तच्च अज्ञानशब्दे ६४२ पृ॰ दर्शितम्।

कविकल्पलतायाञ्च लोकसिद्धानि कतिचित् दुःखकार-णानि दर्शितानि यथा

पारतन्त्र्यं१ आधिः२ व्याधिः३ मानच्युतिः४ शत्रुः५ कुभार्य्या६ नैस्स्वम्७ कुग्रामवासः८ कुस्वामिसेवनम्९ बहुकन्याः१० वृद्धत्वं११ परगृहवासः१२ वर्षाप्रवासः१३ भार्य्याद्वयम्१४ कुभृत्यः१५ दुर्जनकरणकृषिः१६

वराहपुराणे दुःखतराणि कतिचिदुक्तानि यथा

"दुःखमेव प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे!। उचिते-नोपचारेण दुःखं मोक्षविनाशनम्। अहङ्कारस्ततो नित्यं नरा मोहेन चाहताः। ये मां नैव प्रपद्यन्ते ततो दुःख-तरन्तु किम्। सर्वाशी सर्वविक्रेता नमस्कारविव-र्जितः। ये च मां न प्रपद्यन्ते ततो दुःखतरन्तु किम्। सर्वाण्यपि तु सिद्धानि पाकभेदन्तु कारयेत्। अवैष्ण-वैर्यं योऽश्नाति ततो दुःखतरन्तु किम्। प्राप्तकाले वैश्व-देवे दृष्टं त्वतिथिमागतम्। अदत्त्वा तस्य यो भुङ्क्ते ततो दुःखतरन्तु किम्। अधन्यस्तु वैषम्ये परदाराभि-मर्दकः। परोपतापी मन्दात्मा ततो दुःखतरन्तु किम्। अकृत्वायुर्बलं कर्म्म स्वल्पे संवसते नरः। अल्पकालवयं प्राप्तस्ततो दुःखतरन्तु किम्। स्तन्यवरणयानानि न-अमानानि पश्यति। न वै तत्प्राप्नुतः पुत्रे ततो दुःख-तरन्तु किम्। अन्नानि पिशितं केचित् स्वतयाभिसम-न्वितम्। पुण्याहं केचिदश्नन्ति ततो दुःखतरन्तु किम्। वरवस्त्राहृता याश्च समासेवन्ति भूषिताः। केचित् नरेषु भैरन्ते ततो दुःखतरन्तु किम्। विद्वान् कृती गुणज्ञश्च सर्वशास्त्रविशारदः। केचिन्मूकाश्च दृश्यन्ते ततो दुःखतरन्तु किम्। विद्यमाने धने केचित् लपणा भोगवर्जिताः। दरिद्रो जायते दाता ततो दुःखत-रन्तु किम्। पुरुषस्य तु द्वे भार्य्ये तयोरेकां प्रशंस-येत्। एकापि दुर्भगा तत्र ततो दुःखतरन्तु किम्। लब्ध्वा तु मानुषीं संज्ञां पञ्चभूतसमन्विताम्। मामेव न प्रपद्यन्ते ततो दुःखतरन्तु किम्। लब्ध्वा ब्राह्मण-भावन्तु त्वयो वर्णाः सुमध्यमे!। पापकर्म्मरता ह्यासं-स्ततो दुःखतरन्तु किम्। एतत्ते कथितं भद्रे! दुःखकर्म्म विनिश्चितम्। सर्वभूतहितार्थाय यत्त्वया परिपृ-च्छ्यते"। "अवाच्यवादांश्च बहून् वदिष्यन्ति तवा-हिताः। निन्दन्तस्तव सामर्थ्यं ततो दुःखतरन्तु किम्" गीता। "स जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति" माघ॰। "सुखं हि दुःखान्यनुभूय शोभते" मृच्छ॰। दुःख-मनुभवति दुःख+क्यङ् दुःखायते दुःखमनुभवतीत्यर्थे। "दुःखायते जनः सर्वः स एकः सुखायते" भट्टिः।

**दुःखग्राम** पु॰ दुःखानां ग्रामोऽत्र। १संसारे शब्दार्थचि॰। ६त॰। २दुःखसमुदाये च।

**दुःखजात** त्रि॰ जातं दुःखमस्य परनि॰। वजातसुखे 'जातिकालसुखादिभ्य'' इत्यादिना पा॰अस्यान्तोदात्तता ६त॰। २दुःखसमुदाय न॰।

**दुःखत्रय** न॰ ६त॰। आध्यात्मिकाधिभौतिकाधिदैविकरूपे दुःखत्रिके दुःखशब्दे सा॰का॰ त॰कौ॰वाक्यं दृश्यम्।

**दुःखदिर** पु॰ दुष्टः खदिरः वा सत्वम्। मह्यासारे खदि-र॰॰ शब्दार्थचि॰। [हेमच॰।

**दुःखदोह्या** स्त्री दुःखेन दोह्या। दुःखेन दोह्यायां गवि।

**दुःखशील** त्रि॰ दुःखं शीलयति शील—अण् उप॰। दुःखा-नुभवशीलनकर्त्तरि "कामैकपत्नीव्रतदुःखशीलाम्" कुमा॰।

**दुःखित** त्रि॰ दुःख+तार॰ इतच्। संजातदुःखे "दुःखिता यत्र दृश्येरन् विकृताः पापकारिणः" मनु॰।

**दुःखिन्** त्रि॰ दुःख+तुप्रा॰ मत्वर्थे इनि। दुःखान्विते

**दुःशकुन** न॰दुष्टं शकुनं वा रोः शः। अशुभसूचके निमि-त्तभेदे "सन्ध्यावर्णतुषास्थि सर्पलवणाङ्गारेन्धनक्लीबविट्-तैलोन्मत्तवसौषधारिजटिलप्रव्राट्तृणव्याधिताः नग्नाभ्य-क्तविमुक्तकेशपतित व्यङ्गक्षुधार्त्ता असृक् स्त्रीपुष्पं शर-टः स्वगेहदहनं मार्ज्जारयुद्धं क्षुतम्। काषायी गुड-

रोगी षः । गङ्गीवाम् कवरः ६व०। अवश्यम् । अवश-
त्वे त्रिका० ।

**दुः(दुस्स)सह** त्रि० दुःखेन सह्यतेऽसौ सह—खल् वा रोः षः । १दुःखेन सोढव्ये “यो दुःसहाशो वसुधा” भा० ८ ६।१५ “तेषामापततां वेगः करिणां दुःसहोऽभवत्” भा०व०६५अ० “दुःसहेन हृदये निशाचरी” रघुः “भव-त्यनिष्टादपि नाम दुःसहात्” कुमा० । २नागदमन्यां स्त्री राजनि० । [भावे क्त । २दुष्टे स्वप्ने न०।

**दुःषु(सु)प्त** त्रि० दुर्+स्वप—क्त—वा षत्वम् । १दुष्टस्वप्नयुक्ते

**दुःपति** त्रि० दुष्टा स्तुतिः रोर्षः षः । दुष्टायां स्तुतौ ।

**दुः(दुष्प्रे)षेध** त्रि० दुर्—षिध—खल् सुषामा० षत्वे रोर्षः षः । षेद्धुमशक्ये । [दुष्टसक्थियुक्ते ।

**दुःसक्थ(क्थि)** त्रि० दुष्टं सक्थि यस्य वा अच् समा०।

**दुःसाध(ध्य)** त्रि० दुःखेन साध्यतेऽसौ खल् तदर्थे यत् वा । साधयितुमशक्ये ‘छन्दोनुवृत्तिदुःसाधा’ माघः ‘किं नाम मम दुःसाध्यं यत्त्वा निगृह्णे रणे’ हरिवं० २६७अ०

**दुःसाधिन्** त्रि० दुष्टं साधयति साधि—णिनि । १दुष्टसाधके २दौवारिके पु० शब्दमाला ।

**दुः(दु)स्त्री** स्त्री दुष्टा स्त्री प्रा०स० वा विसर्गलोपः । दुष्टायां स्त्रियां तस्याभावः कर्म वा ष्यञ् । दौस्त्रैण्य तस्याभावे कर्मणि च न० ।

**दुः(दु)स्थ** त्रि० दुष्टं तिष्ठति स्था—क वा विसर्गलोपः । १दुर्गते २मूर्खे ३दुष्टं स्थिते च मेदि० ४लुब्धे शब्दार्थचि० । “दुःस्थ तिष्ठसि यच्च पथ्यमधुना कर्त्तास्मि तत् श्रोष्यसि” अमरु० ।

**दुः(दु)स्पर्श** त्रि० दुःखेन स्पृश्यतेऽसौ दुर्+स्पृश—कर्मणि खल् वा विसर्गलोपः । १स्प्रष्टुमशक्ये मेदि०। “दुर्गाह्यो वह्निना वायुः दुःस्पर्शः पाणिना यथा” भा०आनु०२२अ० १दुरालभायाम् स्त्री अमरः २लताकरञ्जे राजनि० ४क-पिकच्छ्वाम् ५आकाशवल्ल्यां ६कण्टकार्य्याम् च स्त्री रा-जनि०। [१कर्मणि खल् । २दुष्टे स्पर्शे च स्वस्थादौ हेमच०।

**दुः(दु)स्फोट** पु० दुष्टं स्फोटयति स्फुट—अच् वा विसर्गलोपः ।

**दुःस्वप्न** पु० दुष्टः स्वप्नः प्रा०स० । अशुभसूचके स्वप्नभेदे स च छान्दोग्यो० “अथ स्वप्ने कृष्णदन्तं पुरुषं पश्यति स एनं हन्ति” इत्युक्तः ।

कतिचित् दुःस्वप्नभेदाश्च ब्रह्मवैवर्तजन्मख० उक्ता यथा “सर्वं श्रुतं महाभाग ! दुःस्वप्नं कथय प्रभो ! । उवाच तच्च भगवान् ! स्वप्नाधिपति तद्वचः । श्रीभगवानुवाच

स्वप्ने हसति यो हर्षाद्विवाहं यदि पश्यति । नर्त्तनं गीतमिष्टञ्च विपत्तिस्तस्य निश्चितम् । दन्ता यस्य विघी-र्यन्ते विचरन्तञ्च पश्यति । धनहानिर्भवेत्तस्य पीडा चापि शरीरजा । अभ्यक्तिस्तु तैलेन यो गच्छेद्दक्षिणां दिशम् । खरोष्ट्रमहिषारूढो मृत्युस्तस्य न संशयः । स्वप्ने चूर्णं जवापुष्पमशोकं करवीरकम् । विपत्ति-स्तस्य तैलञ्च लवणं यदि पश्यति । नग्नां कृष्णां छिन्न-नासां शूद्रस्य विधवां तथा । कपर्दकं तालफलं दृष्ट्वा शोकमवाप्नुयात् । स्वप्ने रुष्टं ब्राह्मणञ्च ब्राह्मणीं कोप-संयुताम् । विपत्तिश्च भवत्तस्य लक्ष्मीर्यातीति स्वगृहाद्ध्रु-वम् । वनपुष्पं रक्तवर्णं पलाशञ्च सुपुष्पितम् । का-र्पासं रक्तवस्त्रञ्च दृष्ट्वा दुःखमवाप्नुयात् । गायन्तीञ्च हसन्तीं वा कृष्णाम्बरधरां स्त्रियम् । दृष्ट्वा कृष्णाञ्च विवर्णां नरो मृत्युमवाप्नुयात् । देवता यत्र नृत्यन्ति गायन्ति च हसन्ति च । आस्फोटयन्ति धावन्ति तस्य देशो विन-श्यति । वान्तं मूत्रं पुरीषञ्च रेतः रक्तं सुवर्णकम् । प्रत्यक्षमथ वा स्वप्ने जीवितं दशमासिकम् । कृष्णाम्बर-धरा नारीं कृष्णमाल्यानुलेपनाम् । उपगूहति यः स्वप्ने तस्य मृत्युर्भविष्यति । मृतवत्सञ्च शुष्कञ्च मृगस्य वानरस्य वा । यः प्राप्नोत्यश्नमानां च विपत्तिस्तस्य निश्चितम् । अभ्यक्तिस्तु तैलेन हविषा मधुनाऽपि वा । तक्रेणैव गुडेनापि पीडा तस्य विनिश्चितम् । पतितं मस्तकेशञ्च निर्वाणाङ्गारमेव च । भस्मपूर्णां चितां दृष्ट्वा लभते मृत्युमेव च । मसीञ्च किञ्चित् लवणं वा दृष्ट्वा दुःखं लभेद्ध्रुवम् । पादुकाफलकं रक्तपुष्पमाल्यं भयानकम् । माषं मसूरं मुद्गं वा दृष्ट्वा सद्यो व्रणं भवेत् । करटं शरटं काकं भल्लूकं वानरं परम् । पूयगात्रमलं स्वप्ने केशस्य व्याधिकारणम् । भग्नभाण्डं क्षतं शूद्रं गलत्कुष्ठं च रोगिणम् । रक्ताम्बरञ्च जटिलं शूकरं महिषं खरम् । महाकारं महाघोरं हत-जीवं भयङ्करम् । दृष्ट्वा स्वप्ने योनिलिङ्गं विपत्तिं लभते ध्रुवम् । कुवेशरूपं म्लेच्छञ्च यमदूतं भयङ्करम् । पाश-हस्तं पाशयन्तं दृष्ट्वा मृत्युं लभेन्नरः । ब्राह्मणो ब्राह्मणी बाला बालको वा सुतः सुता । विषादं कुरुते कोपात् दृष्ट्वा दुःखमवाप्नुयात् । कृष्णपुष्पञ्च तन्माल्यं सशस्त्र-सैन्यधारिणम् । म्लेच्छाञ्च विकटाकारां दृष्ट्वा मृत्युं लभेद्ध्रुवम् । नाट्यञ्च नर्त्तकं गीतं गायनं रक्तवास-सम् । मृदङ्गवाद्यध्वानं दृष्ट्वा दुःखं लभेद्ध्रुवम् ।

प्राप्यान्नं मृतं दृष्ट्वा मृत्युञ्च लभते ध्रुवम्। मत्स्यादिभक्षणं यो हि तद्भावान्मरणं भवेत्। छिन्नं भयङ्करं वापि विकृतं मुक्तकेशिनम्। छिन्नं मृत्युञ्च कुर्वन्तं दृष्ट्वा मृत्युं लभेन्नरः। मृतो वापि मृता वापि कृष्णा स्त्री च्छा भयानका। उपगूहति यं स्वप्ने तस्य मृत्युर्विनिश्चितम्। उपगूहति यं स्वप्ने म्लेच्छो दंष्ट्रिणोऽपि वा। बालका मानवाश्चैव तस्य राजकुलाद्भयम्। छिन्नवृक्षं पतन्तञ्च शिलावृष्टिं तुषं क्षुरम्। रक्ताङ्गारं भस्मवृष्टिं दृष्ट्वा दुःखमवाप्नुयात्। गृहं पतन्तं शैलं वा धूमकेतुं भयानकम्। भग्नं स्कन्धं तरोर्वापि दृष्ट्वा दुःखमवाप्नुयात्। रथगेहच्युतशैलगोहस्तितुरगोऽम्बरात्। भूमौ पतति यत्स्वप्ने विपत्तिस्तस्य निश्चितम्। उच्चैः पतन्ति गर्तेषु भस्माङ्गारचितासु च। क्षारकुण्डेषु चूर्णेषु मृत्युस्तथा न संशयः। बलाद्धरति छत्रञ्च छत्रञ्च यस्य मस्तकात्। पितुर्नाशो भवेत्तस्य गुरोर्वापि नृपस्य वा। सुरभी यस्य गेहाच्च याति त्रस्ता सवत्सिका। प्रयाति पालतस्तस्य लक्ष्मीरपि वसुन्धरा। पाशेन कृत्वा बद्धञ्च यं गृहीत्वा प्रयान्ति च। यमदूताश्च ये म्लेच्छास्तस्य मृत्युर्विनिश्चितम्। गणको ब्राह्मणो वापि ब्राह्मणी वा गुरुस्तथा। परिरुष्टः शपति यं विपत्तिस्तस्य निश्चितम्। विरोधिनश्च काकास्तु कुक्कुरा भल्लुकास्तथा। पतन्त्यागत्य यद्गात्रे तस्य मृत्युर्न संशयः। महिषा भल्लुका उष्ट्राः शूकरा गर्दभास्तथा। रुष्टा धावन्ति यं स्वप्ने स रोगी निश्चितं भवेत्"।

अस्य शान्तिस्तत्रोक्ता यथा

"रक्तचन्दनकाष्ठानि घृताक्तानि च यो जुहेत्। गायत्र्या च सहस्रेण तेन शान्तिर्विधीयते। सहस्रधा जपेद् यो हि भक्त्या श्रीमधुसूदनम्। निष्पापो हि भवेत् सोऽपि दुःस्वप्नः सुस्वप्नो भवेत्। अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम्। हंसं नारायणञ्चैव एतन्नामाष्टकं शुभम्। शुचिः पूर्वमुखः प्राज्ञो दशकृत्वश्च यो जपेत्। निष्पापो हि भवेत् सोऽपि दुःस्वप्नः सुस्वप्नो भवेत्"। स्वापसमयलग्ने दुःस्वप्नसूचकग्रहयोगभेदः नी०क०त० उक्तो यथा

"लग्नांशपेऽर्के तनुगेऽथ वाऽस्मिन् दुःस्वप्नमीक्षेत यथा केविघ्नम्। रक्ताम्बरं वह्निमथापि चन्द्रे इत्येवमादि"।

"प्रोह्यते भक्ष्यते वापि पिशाचासुरवायसैः। भूतैः प्रेतैः श्वभिर्व्याघ्रैर्गोमायुखरसूकरैः। वरभैः करभैः कीशैः श्यामैरन्यतरैर्मृगैः। स्वप्ने च जीवितं तस्य वर्षान्ते यममीयते। गन्धपुष्पाद्यैः शोभैः स्नातानुभूषिताम्बरः। यः पश्येत् स्वप्नमध्ये सोऽष्टौ मासान्नित्यहो" काशीख० अधिकं कालचिह्नशब्दे १६६७पृ० दृश्यम्।

**दुकूल** न० दु—अलच् कुक् च दुः कूलति कूल—आवरणे वा पृषो०। १क्षौमाम्बरे २सूक्ष्मवस्त्रे ३श्लक्ष्णवस्त्रे च मेदि०। "गोपवधूटीदुकूलचौराय" भाषा० "अथ वल्कलदुकूलकुथादिभिः" भट्टिः। "वधूदुकूलं कलहंसलक्षणम्" कुमा०।

**दुगूल** न० दुकूल+पृषो०। दुकूलार्थे पट्टवस्त्रे हेमच०।

**दुग्ध** न० दुह—क्त। १पयसि क्षीरे स्त्रीजातिस्तननिःसृतद्रवद्रव्ये। कर्मणि क्त। २कृतदोहायां धेन्वादौ स्त्री ३प्रपूरिते त्रि० मेदिनी०। भावे क्त। ४दोहने न० क्षीरशब्दे २१७७पृ० अस्य विवृतिः। तत्रानुक्तं भावप्र० उक्तं किं चिदत्राभिधीयते

"रात्रौ चन्द्रगुणाधिक्याद्व्यायामाकरणात्तथा। प्राभातिकं तदा प्रायः प्रादोषाच्च शीतलम्। दिवाकरकराघातात् व्यायामानलसेवनात्। प्राभातिकात्तु प्रादोषं लघु वातकफापहम्"। अथ दुग्धसेवने समयादिविशेषे गुणमाह। "दुग्धं वृष्यमग्निदीपनकरं पूर्वाह्णकाले पयो मध्याह्ने तु बलावहं कफहरं पित्तापहं दीपनम्। बाले वृद्धिकरं क्षये क्षयकरं वृद्धेषु रेतोवहम् रात्रौ पथ्यमनेकदोषशमनं क्षीरं सदा सेव्यते। वदन्ति पेयं निशि केवलं पयो भोज्यं न तेनेह सहौदनादिकम्। भवत्यजीर्णे निशि पीतशर्करा क्षीरात्सपानस्य न शेषवत्सृजेत्। विदाहीन्यन्नपानानि दिवा भुङ्क्ते हि यन्नरः। तद्विदाहप्रशान्त्यर्थं रात्रौ क्षीरं सदा पिबेत्। दीप्तानले क्षये पुंसि बालवृद्धे पयःप्रिये। मतं हिततमं पथ्यं सद्यः शुक्रकरं यतः"। अथ क्वथितस्य दुग्धस्य गुणाः "क्षीरं गव्यमथाजं कोष्णं दण्डाहतं पिबेत्। लघु वृष्यं ज्वरहरं वातपित्तकफापहम्"। अथ गोजदुग्धगुणाः "गोदुग्धप्रभवं हि वा छागीदुग्धसमुद्भवम्। तद्भवेच्च त्रिदोषघ्नं रोचनं बलवर्द्धनम्। वह्निवृद्धिकरं वृष्यं सद्यस्तृप्तिकरं लघु। अतीसारेऽग्निमान्द्ये च ज्वरे जीर्णे प्रशस्यते"। अथ भिन्नदुग्धम् "विवर्णं विरसं चाम्लं दुर्गन्धं ग्रथितं पयः। वर्जयेदम्ललवणयुक्तं कुष्ठादिकृद्यतः"। अजादिदुग्धगुणादिभेदादिकं तत्तच्छब्दे वक्ष्यम्।

"शैत्याविर्मं गव्यतमं इन्तोष्णं क्षीरं सर्वानां इन्तशीत मार्गुः ।"। दोहात्मशीतं महिषीपयस्तं गव्यन्तु धारोष्णमिदं प्रशस्तम् । हृद्यं हि कृष्णमग्निसंवर्द्धनकरं पूर्वाह्णपीतं पयो मध्याह्ने बलदायकं रतिकरं कृच्छ्र विच्छेदनम् । बाल्ये वह्निकरं ततो बलकरं वीर्यप्रदं वार्द्धके रात्रौ क्षीरमनेकदोषशमनं सेव्यं ततः सर्वदा । क्षीरं शुक्लमलिनयोषितं यदतप्तमेतद्दिकृतिं प्रयाति । तस्मात्तु दोषं कुरुते तदूर्द्ध्वं विषोपमं स्यादुषितो दग्धानाम् । जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् । तदेव तरुणे पीतं विषवद्धन्ति मानुषम्" । क्षीरक्वाथगुणः । "चतुर्थभागं सलिलं निधाय यत्नाद् यदावर्त्तितमुत्तमं तत् । सर्वामयघ्नं बलपुष्टिकारि वीर्यप्रदं क्षीरमति प्रशस्तम् । गव्यं पूर्वाह्णकाले स्यादपराह्णे तु माहिषम् । क्षीरं सशर्करं पथ्यं यद्वा सात्म्यञ्च सर्वदा । क्षीरं न भुञ्जीत कदाप्यतप्तं तप्तञ्च नैतल्लवणेन सार्द्धम् । पिण्याकमत्स्यानकमाषमुद्गसौगातकीकन्दफलादिकैश्च" । तथा

"मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः । शाकजाम्बवरसैश्च सेवितं मारयत्यबुधमाशु सर्पवत् । स्निग्धं शीतं गुरु क्षीरं सर्वकालं न सेवयेत् । दोषाग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च । नित्यन्तोष्णाग्निना सेव्यं सुपक्वं माहिषं पयः । पुष्णन्ति धातवः सर्वे बलपुष्टिविवर्द्धनम् । क्षीरं गवाजकादेर्मधुरं क्षीरं नवप्रसूतानाम् । रूक्षञ्च पित्तदाहं करोति रक्तामयं कुरुते । मधुरं त्रिदोषशमनं क्षीरं मध्यप्रसूतानाम् । लवणं मधुरं क्षीरं विदाहजननं चिरप्रसूतानाम् । गुणहीनं निःसारं क्षीरं प्रथमप्रसूतानाम् । मध्यमवयसां सुक्तमिदं दुर्बलन्तु वृद्धानाम् । तासां मासत्रयादूर्द्ध्वं गुर्विणीनाञ्च यत् पयः । तद्धि लवणं क्षीरं मधुरं पित्तशोषकृत् । दुग्धाग्रं शीतलं स्वादु हृद्यं वर्ण्यकरं गुरु । वातपित्तापहं रुच्यं हृद्यं बलवर्द्धनम्" राजनि० ।

**दुग्धतालीय** न० दुग्धस्य तालाय प्रतिष्ठायै हितं छ । १दुग्धाग्रे २क्षीरफेने च मेदि० ।

**दुग्धपाचन** न० दुग्धं पाच्यतेऽनेन पचि—करणे ल्युट् । दुग्धपाकपात्रे हारा० ।

**दुग्धपाषाण** पु० दुग्धं निर्यासः पाषाण इव यस्य । (गिरगोला) ख्याते वृक्षभेदे राजनि० । स्वार्थे क । अत्रैवार्थे ।

**दुग्धपुच्छी** स्त्री दुग्धमिव शुभ्रं पुच्छं मञ्जरी यस्याः गौरा० ङीष् । (दुधपेया) ख्याते १वृक्षभेदे २वृश्चिकाली शब्दच० ।

**दुग्धफेन** पु० दुग्धस्य फेनो यत्र । शर्करावर्त्तिते क्षीरविदार्य्यां राजनि० । गौरा० ङीष् । दुग्धफेनी १क्षुपभेदे स्त्री । स्वार्थे क तत्रार्थे पु०

**दुग्धग्रन्थ** पु० दुग्धार्थं बन्धः । दुग्धदोहनार्थं गोर्बन्धे "पीतदुग्धा तु धेनुर्या संस्थिता दुग्धबन्धकैः" हेमच० ।

**दुग्धबीजा** स्त्री दुग्धमिव बीजं यस्य बीजं यस्य । यावनालाद्यतण्डुलविशेषे राजनि० ।

**दुग्धसमुद्र** पु० ६त० । दुग्धोदके क्षीरसमुद्रे त्रिका० । दुग्धसिन्ध्वादयोऽप्यत्र । "लवणजलधिरादौ दुग्धसिन्धुश्च तस्मादमृतमहनतरङ्गः शीश यस्मात् बभूव" सि०शि०

**दुग्धाङ्क** पु० दुग्धमिव शुभ्रोऽङ्कः चिह्नभेदोऽस्य । उपलभेदे शब्दार्थच० । [दृष्टौ राजनि० ।

**दुग्धाश्मन्** पु० दुग्धं निर्यासः अश्मा इव । दुग्धपाषाण-

**दुग्धाम्र** न० दुग्धपक्वमाम्रम् । दुग्धतालीये राजनि० ।

**दुग्धिका** स्त्री दुग्धं क्षीरमिव निर्यासोऽस्त्यस्याः ठन् । (दुधिया) (क्षीरा) इति ख्याते वृक्षभेदे । "दुग्धिकोष्णा गुरू रूक्षा वातला पुष्पदायिनी । स्वादुक्षीरा कटुस्तिक्ता सृष्टमलमला पटुः । साद्री विष्टम्भिनी वृष्या कफकुष्ठकृमिप्रणुत्" भावप्र० । २गन्धिका इति प्रसिद्धायामुत्तमफलिन्याम् युग्मफलायाम् रत्नमा० ।

**दुग्धिनिका** स्त्री दुग्धमस्त्यस्य इनि दुग्धिनि निर्यासेकायति कै—क अलुक्स० । रक्तापामार्गे राजनि० ।

**दुग्धी** स्त्री दुग्धमिव निर्यासोऽस्त्यस्याः अर्श आद्यच् गौरा० ङीष् । १दुग्धिकायाम् (दुध) १क्षीरावीलतायां मेदि० । २दुग्धपाषाणे राजनि० ।

**दुघ** त्रि० दुग्धि—दुह—क कस्य घः । दोहनकर्त्तरि "कामदुघा गौः" सि०कौ० । अस्य अचिरिंश्चदुपपदे एव साधुत्वं नान्यथा । "कामदुघाङ्घ्रिपद्म" भाग० १।२१।१५

**दुच्छक** पु० दु-सन्तापे सम्प० भावे क्विप् तस्यै उपतापाय तन्निवृत्तये शक्नोति शक—अच् । सुरानामगन्धद्रव्ये शिलारादावकाशके च मेदि० ।

**दुच्छुन्** पु० दुष्टःश्वा प्रा०स० पृषो० । दुष्कुक्कुरे "आरेबीधस्य दुच्छुनाम्" यजु०१८।२८ "दुष्टाय ते श्वानः तेषाम्" वेददी० ।

**दुच्छून** त्रि०दुष्ट उच्छूनः प्रा०स०। पृषो० । दुष्टे उच्छूने ततः भृशा०क्यङ् । दुच्छुनायते बाधते इत्यर्थः । "किमस्मान् दुच्छुनायसे" ऋ०७।५५।२ "दुच्छुनायसे बाधसे" भा० ।

**दुच्छि** स्त्री दुत्+छश्च कः । दुःखाम् रायमुकुटः ।

**दुण्डुका** स्त्री० दुण्डुभ इव कायति कै–क पृषो० सलोपः। दुष्टचित्ते शब्दार्थकल्पतरुः।

**दुण्डुभ** पुंस्त्री० दुन्दुभ+पृषो०। (ढोंडा) सर्पभेदे अमरः। “परमीर्नां महारौद्रां प्राप्य यज्ञां दिव दुण्डुभाम्। मञ्जा-मांसमहापङ्कां कबन्धार्गजितोडुपाम्” भा० द्रो० १५६ अ०।

**दुण्डुभि** पु० दुन्दुभि+पृषो०। दुन्दुभिशब्दार्थे “दुण्डुभेर्मू-षिकाणां च कीटानां कल्प एव च” इति सुश्रुतस्थाने प्रति-ज्ञाय सुश्रुतेन कल्पस्थाने दुन्दुभिस्वनीयाध्याय उक्तः अतस्तयोरेकार्थता।

**दुत** त्रि० दु उपतापे क्त। पीडिते “मृदुतया दुतया” माघः। द्रुतौ इत्यस्य तु “दुग्वोर्दीर्घश्च” पा० नत्वे दीर्घत्वे दून इत्येव सि० कौ०।

**दुत्थोत्थदवीय** पु० नील० ताजकोक्ते वर्षप्रवेशे योगभेदे “वीर्योनितौ कार्यविलग्ननाथौ स्वक्षादिकेनान्यतरो-युनक्ति। अन्यौ यदा द्वौ बलिनौ तदान्यसहायतो वीर्य-मुपान्ति सन्तः” तल्लक्षणम्।

**दुर्द** पु० पर्वतभेदे। “शृङ्गवान् मन्दरो नीलो निषधो दुर्दुद-स्तथा” भा० अनु० १६५ अ०। दर्दुरस्तथा इत्येव पाठः साधुः

**दुदुह** पु० अनुवंश्ये नृपभेदे। “अनोस्तु पुत्रो धर्मोऽभूद्घृत-स्तस्यात्मजोऽभवत्। घृतात् दुदुहो जज्ञे प्रचेतास्तस्य चात्मजः” हरिवं० ३२ अ०।

**दुद्रुम** पु० दुष्टो द्रुमः प्रा० स०। हरित्पलाण्डौ अमरः।

**दुध** हिंसने प्रेरणे च भ्वा० पर० सक० सेट्। दोधति अदोधीत् दुदोध दुधितम् “नेशत्तमो दुधितं रोचत” ऋ० ४।१।१७ “दुधः प्रेरणकर्मा” भा०।

**दुधि** त्रि० दुधाहिंसाकर्मेति भाष्योक्तेः दुध–हिंसायां कि। १हिंसके “स्थूभ दभे दुधयेऽर्य ! ते” ऋ० ६।२६।२ “दुधये हिंसकाय” भा० उपचारात् २दुर्धरे च “दुधेर्युक्तस्य द्रवतः सहानसा” ऋ० १०।१०२।६ दुधेर्दुर्धरस्य” भा०

**दुध्र** त्रि० दुध–बा० रक् दुष्टं वा धारयति धृ–मूल० क पृषो०। १हिंसके २प्रेरके ३दुर्धरे ४दुर्द्धर्षे ५दुष्टानां व्यवस्थापके च। “दुध्र आभूषु रामयन्नि दामनि” ऋ० १।५६।३ “दुध्रः दुष्टानां धर्ता व्यवस्थापयिता वा” भा० “दुध्रकृतो मरुतो भ्राजदृष्टयः” ऋ० १।६४।११ “दुध्रकृत् दुध्रं दुष्टं भा-न्यैर्दुर्द्धर्षं वा आत्मना” भा० “विदथे दुध्रवाचः” ऋ० ७।२१।२ “दुध्रवाचः दुर्धरवाचः” भा०। [शब्दर०।

**दुन्दभ** पु० दुन्द इत्यव्यक्तं भणति भण–ड। दुन्दुभिवाद्ये

**दुन्द** पु० १वसुदेवे त्रिका० २दुन्दुभिवाद्ये शब्दरत्ना०।

**दुन्दुभ** पु० दुन्दु इत्यव्यक्तं शब्दं भणति भण–ड। दुन्दुभि वाद्ये शब्दर०। दुन्दुम इति पाठान्तरम्।

**दुन्दुभि** पु० दुन्दु इत्यव्यक्तशब्देनोभति पूरयति उभ–पूरणे कि शक०। ढक्कायाम् अमरः। “दुन्दुभे ! त्वं सप-त्नानां घोषाद् हृदयकम्पनः” दुन्दुभिपूजामन्त्रः “विजय-दुन्दुभितामयुरर्णवाः” रघुः “दुन्दुभिश्च तदा देवैस्ता-डितो देवकिङ्करैः” भा० अनु० २६ श्लो०। १वरुणे २दैत्य-भेदे मेदि० ३राक्षसभेदे पु० शब्दर० ४विषे हेमच० ५पाशके स्त्री अमरः स्वर्णपट्टकादिमये चतुःपार्श्वे बिन्दुयुक्ते कूतो-पकरणे (पाशटी) ख्याते ६पदार्थे स्त्री ७गन्धर्वीभेदे स्त्री वा ङीप्। “तेषां समक्षं गन्धर्वी दुन्दुभी नाम ना-मतः। शशास वरदो देवो गच्छ कार्यार्थसिद्धये। पिता-महवचः श्रुत्वा गन्धर्वी दुन्दुभी ततः। मन्थरा मानुषे लोके कुब्जानामाभवत्तदा” भा० व० २७५ अ०। दुन्दुभि-नामासुरभेदश्च मायाविनामासुरपिता। तत्कथा रामा० कि० ९ सर्गे “मायावी नाम तेजस्वी पूर्वजो दु-न्दुभेः सुतः। तेन तस्य महद्वैरं वालिनः स्त्रीकृतं पुरा” “यदा तु दुन्दुभिं नाम दानवं महिषाकृतिम्। प्रतिकालयते वाली मलयं प्रतिपर्वतम्। तदा विवेश महिषो मलयस्य गुहां प्रति। विवेश वाली तत्रापि मलयं तज्जिघांसया” रामा० कि० ४६ अ० ४श्लो०। “दुन्दुभिं नामेति अत्र दुन्दुभिशब्देन तत्पुत्रो मायाविनामा दानव उच्यते तद्वृत्तान्तस्यैवाग्रे वक्ष्यमाण-त्वात् ‘मायावी नाम तेजस्वी दुन्दुभेः पूर्वजः सुतः” इति प्रोक्तेः तस्य तत् पुत्रत्वं पितुर्महिषाकारत्वात् तत्-पुत्रस्य तदाकारत्वमिति च बोध्यम्” तट्टीका।

**दुन्दुभिक** पु० कीटभेदे कीटशब्दे दृश्यम्।

**दुन्दुभिनिर्ह्राद** पु० दुन्दुभेरिव निर्ह्रादोऽस्य। दानवभेदे स्कान्दपु०। [नृपभेदे।

**दुन्दुभिषेण** पु० दुन्दुभिः सेनायां यस्य सुषामा० षत्वम्।

**दुन्दुभिस्वन** पु० ६त०। १दुन्दुभिशब्दे दुन्दुभेर्वाद्यभेदस्य स्वनो यत्र विषचिकित्सायाम्। सुश्रुतोक्ते विषचिकित्साभेदे “अथातो दुन्दुभिस्वनीयमध्यायं व्याख्यास्यामः धवाश्व-कर्णतिनिशपलाशपिचुमर्दपाटलिपारिभद्रकाम्रोदुम्बरकर-हाटकार्जुनककुभसर्जकपीतनश्लेष्मातकाङ्कोठामलकप्रग्रह-कुटजशमीकपित्थाश्मन्तकार्कचिरबिल्वमहावृक्षारुष्करारग्वध-मधुकमधुशिग्रुशाकगोजीभूर्जतिल्वकेक्षुरकगोपघण्टारि-मेदानां भस्मान्याहृत्य गवां मूत्रेण क्षारकल्पेन परि-

चाव्य विपचेद्द्राक्षाम पिप्पलीमूलनागर,लौहचराङ्ग-चोचकमञ्जिष्ठाकर्कटशृङ्गीपिप्पलीमरिचोत्पलसारि-वाः चन्दनकुष्ठचूर्णानन्तासोमसरनाशालीकशुण्ठीगोक्ष-रतगरपथ्याजगन्धामूलनिकुलकावर्णमानवकुष्ठपुरम्यपी-चप्रपर्णदन्ताकेशवालुकनागदन्त्यतिविषाभयाभद्रदारुकुष्ठ-चारद्राक्षवाचूर्णानि लोहभाजि समभागानि ततः चार-वद्दानतपाकमवतार्य सौहकामो निदध्यात्। अनेन दुन्दुभिं लिम्पेत् पताकातोरणानि च। अस्माहर्ग-नात् स्पर्शात् विधात् सर्व्वानिमुच्यते। एष चारागदो नाम शर्कराश्मसरोगेषु। अर्शःसु वातगुल्मेषु काश-शूलोदरेषु च। अजीर्णे ग्रहणीदोषे भक्तद्वेषे च दा-रुणे। एष सर्व्वविषार्त्तानां सर्व्वथैवोपयुज्यते। तथा तच-कमुख्यानामयं दर्पोहृणोऽगदः"।

**दुन्दुभ्य** पु० दुन्दुभौ दानवभेदे तिषे वाद्यभेदे वा भवः प्रक्षृतो वा यत्। १रुद्रभेदे "नमो दुन्दुभ्याय चन्याय च" यजु० १६।३५ दुन्दुभये तद्वादनाय साधु यत्। २दुन्दुभिवादन साधने मन्त्रभेदे "ऐन्द्राः चत्रियस्य चक्रदुन्दुभ्याः" कात्या०श्री० १४।२।११ "चत्रियस्य चक्रारोहणे दुन्दु-भिवादनमन्त्रा ऐन्द्रा भवन्ति" कर्कः।

**दुन्दुमार** पु० धुन्धुमार+पृषो०। धुन्धुमारदेशे शब्दार्थकल्प०।

**दुफानिकुत्थ** न० नी० ता० उक्ते वर्षप्रवेशे योगभेदे तल्ल-चणं तत्रोक्तं यथा "मन्दः शुभोग्रादिपदस्थितस्तेन पदोनशीघ्रेण कृतेत्थशालः। तत्रापि कार्यं भवतीति वाच्यं वक्रादिनिर्धीयपदेन चेत् स्यात्"।

**दुम्बक** पु० (दुम्बा) इति ख्याते मेषभेदे शब्दार्थचि०।

**दुर(स्)** अव्य०दु—रुक् सुक् वा। १दुष्टे २निन्दायां ३निषेधे ४दुःखे च पुरुषोत्तमः ५ईषदर्थे ६कष्टार्थे ७असे ८असम्पत्तौ ९सङ्कटे च गणर०दुर्जीवनः दुर्बलः दुर्दिनम् "सुदुरोरधिकरणे" पा०दुष्कृतम्। क्रियायोगेऽस्योपसर्गता उपसर्गशब्दे १२११पृ० दृश्यम्।

**दुर्** स्त्री दृ—क्विप्। द्वारे "दुरोप्यूतान्यचरम्" ऋ० १।१८८।५ "या दुरः यज्ञगृहद्वारः" भा० दुरो मानुषी देव आ च" ऋ०५।४५।१ "मानुषीर्मनुष्य सम्बन्धिनोर्दुरः द्वारः" भा०

**दुर** त्रि० दृ—बा० कुर। दातरि "दुरो अश्वस्य दुर इन्द्र गोरसि दुरो यवस्य वसुन इनस्पतिः" ऋ०१।५३।२ "दुरो दातासि" भा०

**दुरच** पु० दुष्टोऽचः प्रा०स०। १कपटपाशके २दुष्टनेत्रे च "असंवै पुरुषस्याचि प्रभाकमेति ह स्माह वाजसनेयो दुरच इव ह्यस्य पूर्वोऽप्येवाचमुत्मयोक्ता ते यथैतदत्वव्या-रोति यदच्यायनक्ति" शत०ब्रा० ३।१।३।१० "दुरचमेव अञ्जनेन नाशयति" भा०३ब०। दुष्टमचि यस्य षच् समा। ३तद्युक्ते त्रि० "अयः शुक्ल उ दुष्टस्य इत्याचोक दुरचोभात् कतान्" शत०ब्रा०७।१।२।१४ दुष्टोऽचो यस्य। ४दुष्टद्युते

**दुरतिक्रम** त्रि०दुःखेनातिक्रम्यतेऽसौ दुर्+अति+क्रम—कर्मणि खल्। १दुःखेनातिक्रमणीये २दुर्लङ्घ्ये "सर्वन्तु तपसा-साध्यं तपोहि दुरतिक्रमम्" मनुः। ३विष्णौ पु० "सुभा हृत्ता निष्टनात्मा दुर्जयो दुरतिक्रमः" विष्णु०सं० "भयहेतुत्वादस्यास्य मर्यादयोमातिक्रामन्तीति दुरतिक्रमः "भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" इति मन्त्र-वर्णात्" भा० "तस्याज्ञाया दुर्लङ्घ्यत्वात् तस्य तथात्वम्।

**दुरत्यय** त्रि०दुःखेनातीयते दुर्+अति—इ—खल्। १दुरतिक्र-मणीये २दुस्तरे च। "स्वर्गमार्गपरिघो दुरत्ययः" रघुः।

**दुरत्येतु** त्रि० दुर्+अति+इ—कर्मणि—तुन्। दुरतिक्रमणीये "ता भूरि पाशावनृतस्य सेतू दुरत्येतू रिपवे मर्त्याय" ऋ० ७।६५।३ "दुरत्येतू दुरतिक्रमणीयौ" भा०

**दुरदृष्ट** न० दुष्टमदृष्टम् प्रा०स०। दुर्भाग्ये पापे।

**दुरद्मनी** स्त्री अद—भावे मनिन् वा ङीप् दुष्टा अद्मनिः (नी) प्रा०स०। दुर्भोजने। "पाहि दुरद्मन्या अविषं नः पितुम्" यजु० २।२०। "अदनमद्मनी दुष्टा अद्मनी दुरद्मनी दुर्भोजनम् ततः मां पाहि चतुर्थी पञ्चम्यर्थे" वेददी०।

**दुरधिग** त्रि० दुःखेनाधिगम्यतेऽसौ दुर्+अधि+गम—बा० कर्मणि ड। १दुष्प्रापे २दुर्ज्ञेये च। "दिव्यास्रैर्दुरधि-गामपि विक्रियाभिः" माघ० ३।१३।८।

**दुरधिगम** त्रि० दुःखेनाधिगम्यते दुर्+अधि+गम—कर्मणि खल्। १दुष्प्रापे २दुर्ज्ञेये च। "द्रव्यदेशकालमन्त्रर्त्वि-गर्दाक्षिणाविधानयोगोपपत्त्या दुरधिगमोऽपि भगवान्" भाग०५।३।२ "इह दुरधिगमैः किञ्चिदेवागमैः" किरा०।

**दुरधीत** न० दुष्टमधीतम् प्रा०स०। वर्णानां दथास्थानानु-च्चारणेन यथास्वरानुच्चारणेन च अध्ययने "दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपरा-धादिति" दुष्टांश्च शब्दान्मा प्रयुक्ष्महीत्यध्येयं व्या-करणम्" महाभाष्योक्तेः "यदधीतमविज्ञातं निगदेनैव शब्द्यते। सोऽनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्" श्रुतेश्चाध्ययनस्य दुष्टत्वं बोध्यम्। [अध्येतुमशक्ये

**दुरध्येय** त्रि० दुःखेनाधीयते शक्यार्थे दुर्+अधि+इ—खल्।

**दुरध्वन्** पु० दुष्टोऽध्वा प्रा०स०अच् समा०। दुष्टवर्त्मनि अमरः।

**दुरन्त** त्रि०दुष्टोन्तोऽवसानं यस्य प्रा०ब०। १मृगयाद्यूतपानादिषु व्यसनेषु शब्दार्थचि०। तानि हि प्रथमं सुखयित्वा अन्ते दुःखाकुर्वन्ति।"व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत्" मनुः। दुर्गेयोऽन्तः परिच्छेदो यस्य। २दुर्ज्ञेये ३गभीरे ४दुरतिक्रमणीये च "न्टत्यति युवतिजनेन समं सखि! विरहिजनस्य दुरन्ते" गीतगो०। कप्। दुरन्तक असद्गुणव्यादि५शिवे पु० "दुर्विज्ञेयो महादेवो दुराधारो दुरन्तकः" भा० अनु०४१अ०।

**दुरन्वय** त्रि०दुःखेनान्वीयतेऽसौ दुर+अनु–इ–कर्मणि खल्। दुःखेनानुगमनीये "दुरन्वयं दुष्प्रधर्षं दुरापं दुरभिक्रमम्। सर्वं वै तपसाप्नोति" भा०अनु० १२२अ०

**दुरभिग्रह** पु०दुःखेनाभिमुख्येन गृह्यतेऽसौ दुर्+अभि+खल्। १अपामार्गे २दुःखेन ग्राह्ये त्रि०। ३दुरालभायां ४कपिकच्छ्वाञ्च स्त्री राजनि०।

**दुरवग्रह** त्रि० दुःखेनावगृह्यते निगृह्यतेऽसौ दुर्+अव+ग्रह–कर्मणि खल्। लङ्घ्यानिग्राह्ये "संग्रामतो रिपुर्यस्तु विचलेत् दुरवग्रहः" कामन्दकी० [व्यायाम्।

**दुरवस्था** स्त्री दुष्टा अवस्था प्रा०स०। दारिद्र्यादौ दुष्टाव-

**दुरस्य** दुष्ट+क्यच् "दुरस्युर्द्रविणस्युर्वृषण्यति" पा० वेदे नि०। दुष्टीभवने पर०अक० सेट्। दुरस्यति अदुरस्यीत्। "अभि पृतन्यन्तं तिष्ठाभि योनो दुरस्यति" अथ०१।२६।२ लोके तु दुष्टीयति इत्येव। [उणादिको०।

**दुराक** पु० दुर्+अक+संज्ञायां कर्त्तरि घञ्। म्लेच्छदेशभेदे

**दुराचर** त्रि०दुःखेन आचर्य्यते दुर्+आ+चर–कर्मणि खल्। १लङ्घ्याचरणीये "सोऽयं चतुर्णामेतेषामाश्रमाणां दुराचरः" भा०शा०६५६श्लो०। आर्षत्वात् कर्तरि षष्ठी। दुष्टमाचरति अच्। २दुष्टाचारयुक्ते त्रि० "समीरणः श्रोत्रगतोऽन्यथाचरः। समन्ततः शूलमतीव कर्णयोः। करोति दोषैश्च यथा स्वमाहृतः स कर्णशूलो कथितो दुराचरः" सुश्रु०।

**दुराचार** पु० दुष्ट आचारः प्रा०स०। दुष्टे आचारे "प्राप्ते कलियुगे घोरे नराः पुण्यविवर्जिताः। दुराचाररताः सर्वे सत्यवार्त्तापराङ्मुखाः" अध्यात्मरामा०। "धार्ष्ट्यभावेऽभीता बदनाममनादिरत् दुराचारात्" सा०द०। दुष्ट आचारो यस्य प्रा०ब०। २दुष्टाचारयुक्ते त्रि० "दृष्टहर्षानि दुराचारा घोरकृपाणकर्मक्रियाः" भट्टिः "दुराचारो हि पुरुषो लोके भवति निन्दितः" मनुः।

**दुराढ्यङ्कर** त्रि० दुःखेन आढ्यः क्रियते "कर्तृकर्मणोश्च भूकृञोः" पा० कर्तृकर्मणोरीषदादिषु च उपपदेषु भूकृञोः खल् स्यात् यथासङ्ख्यं नेष्यते कर्तृकर्मणी धातोरव्यवधानेन प्रयोक्तव्ये ईषदाढ्यङ्करः(ईष दुः सु)ततः प्राक् । "कर्तृकर्मणोश्च भ्व्यर्थयोरिति वाच्यम्" वार्त्ति० सि०कौ० कर्मणि उपपदे खल् मुम्। दुःखेन अनाढ्ये आढ्ये करणीये

**दुराढ्यम्भव** न० दुःखेन अनाढ्येनाढ्येन भूयते दुर्+च्व्यर्थे आढ्ये कर्तरि उपपदे भावे खल् मुम्। दुःखेन अनाढ्यस्याढ्यभवने।

**दुरात्मन्** त्रि० दुष्ट आत्मा अन्तःकरणं यस्य। दुष्टान्तःकरणे "यस्तु धर्मेण कार्याणि मोहात् कुर्यान्नराधिपः। अचिरात्तं दुरात्मानं वशे कुर्वन्ति शत्रवः"। "यस्तु दोषवतीं कन्यामनाख्यायोपपादयेत्। तस्य तत् वितथं कुर्यात् कन्यादातुर्दुरात्मनः" मनुः।

**दुराधन** पु० धृतराष्ट्रपुत्रभेदे। "अपराजितः पण्डितको विशालाक्षो दुराधनः" भा०आ० ६७अ० धृतराष्ट्रसुतोक्तौ

**दुराधर** पु० धृतराष्ट्रपुत्रभेदे। अपराजितः कुण्डशायी विशालाक्षो दुराधरः" भा०आ०११७अ० तत्पुत्रोक्तौ।

**दुराधर्ष** पु० दुष्टान् राक्षसान् आधर्षति दुर्+आ+धृष अच्। १श्वेतसर्षपे तत्क्षेपणे हि वेतालादीनामपसर्पणं स्मृतौ दर्शितम्। दुःखेन ईषदपि धर्षयितुमशक्यम् दुर्+आ+धृष–कर्मणि खल्। २धर्षयितुमशक्ये त्रि०। "अमर्षणो दुराधर्षो गङ्गां भागीरथीं प्रति" भा०अनु० ५८अ० "स प्रभावात् दुराधर्षो महाबलपराक्रमः" भा०व० २०२अ०। ३कुटुम्बिनीवृक्षे स्त्री राजनि०।

**दुराधार** पु० दुःखेनाधार्यते दुर्+आ–धारि–कर्मणि खल्। दुःखेन १आधारणीये २चिन्तनीये त्रि० ३महादेवे पु०। दुरन्तशब्दे दृश्यम्।

**दुरानम** त्रि० दुःखेनानम्यते दुर्+आ+नम–णिच्–कर्मणि खल्। दुःखेन आनमनीये। "स विचिन्त्य च धनुर्दुरानमम्" रघुः।

**दुराप** त्रि० दुःखेनाप्यते दुर्+आप–खल्। १दुष्प्राप्ये। "इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः" रघुः "अस्त्रं हरादाप्तवता दुरापम्" रघुः सम्बन्धविवक्षया कर्तरि षष्ठी। भावे खल्। २दुष्प्राप्तौ न०।

**दुरारिहन्** पु० दुष्टमियर्त्ति दुर्+ऋ–णिनि दुरारी दुर्गोपी असुरः तं हन्ति हन्–क्विप्। विष्णौ "दुरावासो दुरारिहा" विष्णु सं० भाष्ये चैवं व्युत्पादितम्।

दुरारुह पु० दुःखेनारुह्यतेऽसौ दुर्+आ—रुह—कर्मणि क । १बिल्वे २नारिकेलवृक्षे च । ३खर्जूर्यां स्त्री राजनि० । ४दुरारोहणीये त्रि० "सुपुष्पितः स्यादफलः फलवान् स्याद्दुरारुहः" भा०आ० १४०अ०

दुरारोह पुंस्त्री० दुःखेनारुह्यते दुर्+आ+रुह—खल् । १खर्जूरे स्त्रियां जातित्वात् ङीप् । २श्रीवल्ल्यां स्त्री राजनि० ३शाल्मलिवृक्षे स्त्री त्रिका० । ४दुरारोहणीये त्रि० "दुरारोहं पदं राज्ञां सर्वलोकनमस्कृतम्" कामन्द० भावे खल् । ५दुःखेनारोहणे पु० ।

दुरालभा(म्भा) स्त्री दुःखेनालभ्यते स्पृश्यते असौ दुर्+आ+लभ—खल् आगमविधेरनित्यत्वात् वा नुम् । (आलकुशी) १यवासायाम् राजनि० । "दुरालभा कटुस्तिक्ता सरोष्णा मधुराम्लिका । वातगुल्मप्रमेहाणां नाशिनी परिकीर्त्तिता" राजनि० । "यवासस्य गुणैस्तुल्या बुधैरुक्ता दुरालभा" भावप्र० २दुःस्पर्शनीयमात्रे त्रि० । "पूर्णश्यामा मितश्रोणी कटी सक्ता दुरालभा" सुश्रु० "तीक्ष्णवीर्यास्तु भूतानां दुरालम्भाः सकण्टकाः" भा०अनु० ६८अ० ।

दुरालाप पु० दुष्ट आलापः प्रा०स० । गालिवचने शब्दार्थ-[कल्पतरुः ।

दुराव्य न० अव—गत्यादौ भावे यत् दुष्टमाव्यं मतिः प्रा०स० । दुष्टमतौ "सुवितस्य मनामहेऽति सेतुं दुराव्यम्" ऋ० ६।४१।२ "दुराव्यं दुष्टमतिम्" भा० ।

दुराशय पु०प्रा०स० । १दुष्टे आशये 'स्फुटनिर्भिन्नदुराशयोऽधमः" माघः । दुष्ट आशयो यस्य प्रादि०ब० । २दुष्टाशययुक्ते त्रि० "उपेक्षितान् मूलमशेषमङ्ग दुराशयः कामदुघाङ्घ्रिपस्य" भाग० ३।२१।१५

दुराशा स्त्री प्रा०स० । दुष्टायामाशायाम् ।

दुरासद त्रि० दुःखेनासद्यतेऽसौ दुर्+आ+सद—कर्मणि खल् । १दुष्प्राप्ये २दुर्गम्ये "त्रिलोचनैकांशतया दुरासदः" "स बभूव दुरासदः परैः" रघुः । "कुम्भयोनिरपि यद्दुरासदम्" माघः । 'पापाढ्या दुरासदाया इवतः" नलोदयः ।

दुरित न० दुष्टमितं गमनं नरकादिस्थानप्राप्तिरस्मात् । १पापे २तद्वति त्रि० अमरः । "दुरितैरपि कर्त्तुमात्मसात् प्रयतन्ते नृपसूनवो हि यत्" रघुः "महानदीप्रवाहमिव सर्वदुरितापहरम्" काद० "कामीशाद्दोपराधः स दहतु दुरितं भास्मशीवः शराग्निः" अनर्घ०

दुरितदमनी स्त्री दुरितं दम्यतेऽनया दम—करणे ल्युट् ङीप् । १शमीवृक्षे राजनि० २पापदमनसाधनमात्रे त्रि० स्त्रियां ङीप् ।

दुरितारि त्रि० १दुरितनाशके । २जैनानां शासनदेवताभेदे च । "चक्रेश्वर्यजिता बाला दुरितारिश्च कालिका । महाकाली श्यामा शान्ता भृकुटिश्च सुतारका । अशोका मानवी चण्डा विदिता चाङ्कुशी तथा । कन्दर्पा निर्वाणबला धारिणी धरणप्रिया । नरदत्ताऽथ गान्धार्यम्बिका पद्मावती तथा । सिद्धायिका चेति जैन्यः क्रमाच्छासनदेवताः" हेमच० ।

दुरिष्ट न० दुष्टमिष्टं यज्ञः । अभिचारार्थे यज्ञे । "देवद्विजपितृद्वेष्टा रत्नदूषयिता च यः । स याति कृमिभक्ष्ये वै तमीगे च दुरिष्टकृत्" विष्णुप०

दुरिष्टि स्त्री दुष्टा इष्टिः प्रा०स० । अभिचारीये यागे "पाहि दुरिष्ट्यै" यजु०२।२० पञ्चम्यर्थे चतुर्थी ।

दुरीश पु० दुष्ट ईशः प्रा०स० निन्दिते प्रभौ

दुरीषणा स्त्री दुष्टा ईषणा प्रा०स० । शापे शब्दार्थकल्पतरुः ।

दुरु पु० पर्वतभेदे । "शृङ्गवान् मन्दरो नीलो निषधो दुरु-र्दरस्तथा" भा०अनु०१६५अ० । दर्दुरस्तथेत्येव पाठः साधुः ।

दुरुक्त न० दुष्टमुक्तं प्रा०स० । दुष्टवचने "दुरुक्तभाषाभिर्हतैः प्राप्नुवन्ति सुदुष्कृतम्" भा०अनु०५०२श्लो० ।

दुरुच्छेद त्रि० दुःखेन उच्छिद्यतेऽसौ दुर्+उद्+छिद—कर्मणि खल् । १दुर्वारे भावे खल् । २दुःखेन वारणे पु० ।

दुरुत्तर त्रि० दुःखेनोत्तीर्यतेऽसौ दुर्+उद्+तॄ—कर्मणि खल् । १दुस्तरे "दुरुत्तरे पङ्क इवान्धकारे" भट्टिः । भावे खल् । २दुःखेन तरणे पु० । दुष्टमुत्तरम् प्रा०स० । ४दुष्टे उत्तरवाक्ये न० ।

दुरुदाहर त्रि० दुःखेनोदाह्रियते दुर्+आ—हृ—कर्मणि खल् । दुःखेन वचनीये "अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः" माघः । प्रा०स० । २दुष्टे उदाहरणे पु०

दुरुधुरा स्त्री जन्मकाले चन्द्रात् द्वितीयद्वादशस्थिते रविभिन्नग्रहद्वये चान्द्रयोगभेदे तत्स्वरूपभेदफलादिकं वृहज्जा० भट्टोत्पलव्याख्यानयोर्दर्शितं यथा
"हित्वार्कं सुनफाऽनफादुरुधुराः स्वान्त्योभयस्थैर्ग्रहैः शीतांशोः कथितोऽन्यथा तु बहुभिः केमद्रुमोऽन्यैस्त्वसौ । केन्द्रे शीतकरेऽथ वा ग्रहयुते केमद्रुमो नेष्यते । केचित् केन्द्रनवांशकेषु च वदन्त्युक्तिः प्रसिद्धा न सा । त्रिंशत्सरूपाः सुनफाऽनफाख्याः षष्टित्रयं दौरुधुरे प्रभेदाः । इच्छाविकल्पैः क्रमशोऽभिनीय नीते निवृत्तिः पुनरन्यनीतिः" वृहज्जा०
"अथ सुनफानफादुरुधुराकेमद्रुमाख्यं योगचतुष्टयं

शार्दूलविक्रीडितेनाह हित्वार्कमिति । अर्कमादित्यं हित्वा त्यक्त्वा यदाऽन्यः कश्चिद्ग्रहो भौमादिकः शीतांशोश्चन्द्रात् स्थानद्वयोभयस्थो भवति द्वितीयस्थो, द्वादशस्थो, वा द्वितीयद्वादशस्थौ वा द्वौ भवतस्तदा सुनफाऽनफादुरुधुराख्यं योगत्रयं भवति एतदुक्तं भवति अर्कं हित्वा यदाऽन्योग्रहः कश्चिच्चन्द्रात् द्वितीयस्थाने भवति तदा सुनफानामयोगो भवति अथार्कं वर्जयित्वा चन्द्रात् द्वादशगो भवति कश्चित्तदा अनफानामयोगो भवति एवं चन्द्रात् द्वितीयद्वादशगौ ग्रहौ भवतस्तदा दुरुधुरानाम योगो भवति योगत्रयेऽप्यादित्यो यदि द्वितीये द्वादशे वा स्थाने भवति तदा योगभङ्गङ्करोति । किन्तु योगकर्त्तॄणां मध्ये न गण्यते । एते योगा वहुभिराचार्यैः कथिताः अन्यथा तु वहुभिः केमद्रुमः उक्तः । अस्य योगत्रयस्याभावे वहुभिराद्यैः केमद्रुमाख्योयोगोऽभिहितः एतदुक्तं भवति चन्द्राच्च द्वितीये न द्वादशे कश्चिद्ग्रहो भवति तदा केमद्रुमाख्योयोगो भवति अन्यैस्त्वत्रापीति अन्येषां गर्गादीनामिदं मतं केन्द्रे जन्मलग्नकेन्द्रे शीतकरे चन्द्रे वा भौमादिग्रहयुते भौमादिग्रहविरहितयोरपि चन्द्राद्द्वितीयद्वादशस्थानयोः केमद्रुमो न भवति केन्द्रे ग्रहयुते इत्यत्र केचिच्चन्द्रकेन्द्रमेव केवलं व्याख्यातम् तच्चायुक्तम् चन्द्रकेन्द्रे ग्रहयुते चन्द्रमसोऽपि योगोऽन्तर्भवति शीतकरे ग्रहयुत इत्येतदपार्थकं स्यात् अत्र च भगवान् गार्गिः "व्ययार्थकेन्द्रगश्चन्द्राद्विना भानुं न चेद्ग्रहः । कश्चित् स्यात् वा विना चन्द्रलग्नात् केन्द्रगतोऽथ वा । योगः केमद्रुमोनाम तदा स्याद्यत्र गर्हिताः । भवन्ति निन्दिताचारा दारिद्र्यापत्तिसंयुताः" तथा च सारावल्याम् "सुनफानफा दुरुधुराः क्रमशो योगा भवन्ति रविरहितैः । विनान्त्योभयसंस्थैः कैरववनबान्धवाद्विहगैः" एतेन "यदा योगाः केन्द्रे ग्रहवर्जितः शशाङ्कश्च । केमद्रुमोऽतिकष्टः शशिनि च सर्वग्रहादृष्टे" । अन्ये आचार्या नेच्छन्ति वराहमिहिरस्तु पुनरिच्छत्येव अभिप्रायं तस्यैव तद्वाक्यम् अन्यथा केमद्रुम इति एवसञ्ज्ञा परमतमुक्तम् अन्यैरसौ इति "केन्द्रे शीतकरेऽथवा ग्रहयुते केमद्रुमो नेष्यते" स्वल्पजातकेऽपि । तेन सुनफानफादुरुधुराऽभावे केमद्रुम उक्तः तथा च "रविवर्ज्जं द्वादशगैरनफा चन्द्राद्द्वितीयगैः सुनफा । उभयस्थितैर्दुरुधुरा केमद्रुमसंज्ञकोऽतोऽन्यः" । सत्यस्यापि सुनफानफादुरुधुराभावे केमद्रुमः तथा च "सुनफा त्वनफायोगो दुरुधुरश्चन्द्रसंस्थितक्षेत्रात् । प्राक् पृष्ठतो ग्रहेन्द्रैरुभयगतैस्तेषु रविवर्ज्जम् । केमद्रुमोऽत्र योगोऽन्यथा भवेद्यत्र गर्हितं जन्म" केचित् केन्द्रनवांशकेष्विति केचिदाचार्याः केन्द्रेषु केचिच्च नवांशकेषु तद्योगत्रयं वदन्ति यथा चन्द्राद्द्वितीयद्वादशोभयस्थैः ग्रहैः सुनफाद्या योगा व्याख्याताः तथा केचिच्छ्रुतकीर्त्तिजीवशर्मप्रभृतिभिः केन्द्रवशान्नवांशकवशाच्च व्याख्याताः एतदुक्तं भवति ताराग्रहैश्चन्द्राच्चतुर्थस्थानस्थैः सुनफा दशमस्थानस्थैरनफा चतुर्थदशमस्थितैः दुरुधुरा अतोन्यथा केमद्रुमः तथा च श्रुतकीर्त्तिः "चन्द्राच्चतुर्थैः सुनफा दशमस्थितैः कीर्त्तितोऽनफा विहगैः । उभयस्थितैर्दुरुधुरा केमद्रुमसंज्ञितोऽन्यथा योगः" केचिन्नवांशकेषु वदन्ति यत्र तत्र राशौ यद्राशिसम्बन्धिनवांशके चन्द्रमा भवति तस्माद्राशेः यो द्वितीयो राशिः तत्र यदि ताराग्रहो भवति तदा सुनफा अथ चन्द्रनवांशकराशेर्द्वादशे ताराग्रहो भवति तदाऽनफा अथ चन्द्रनवांशकराशेः द्वितीये द्वादशे च यदा ग्रहौ भवतस्तदा दुरुधुरा अतोऽन्यथा केमद्रुमः । तथा च चन्द्रनवांशकराशितोद्विद्वादशराशी यदि ग्रहरहितौ भवतः तदा केमद्रुमः तथा च जीवशर्मा "यद्राशिसंज्ञे शीतांशुर्नवांशे जन्मनि स्थितः । तद्द्वितीयस्थितैर्योगः सुनफाख्यः प्रकीर्त्तितः । द्वादशैरनफा ज्ञेया ग्रहैर्द्विद्वादशस्थितैः । प्रोक्तो दुरुधुरा योगोऽन्यथा केमद्रुमः स्मृतः" । एतैः प्रसिद्धा न चा तेषामेवेदं मतं तेषामुक्तः लोके न प्रसिद्धा तस्मात् बहुज्योतिर्विद्भिः नाङ्गीकृतमित्यर्थः । अथ सुनफानफादुरुधुराणामाकारसंख्याभिन्द्रवज्रयाह त्रिंशत्सरूपा इति सरूपाः सैकाः त्रिंशदेकत्रिंशत् सुनफाख्यायोगाः तावन्त एवानफाख्याः षष्टित्रयमशीत्यधिकं शतं दुरुधुराप्रभेदानाम् एषां पूर्ववद्विकल्पगणितम् । इच्छाविकल्पैरित्यादि । एतच्छ्लोके लोष्टुकप्रस्तारः पूर्वमेव नाभसयोगाध्याये व्याख्यातः इच्छाविकल्पैः क्रमशः परिपाट्याऽन्यत्र लोष्टुकमभिनीय शीतं निवृत्तिः कार्या पुनः भूयोऽन्यनीतिरित्यन्यत्र स्थानान्तरे चालनम् । अथ सुनफाद्यो भौमबुधगुरुसितासितैः पञ्चभिर्निष्पाद्यन्ते तस्मादिच्छाविकल्पाः पञ्च तेषां न्यासः अत्र प्राग्वत् पूर्वेण पूर्वेण गणितेन शुक्रस्थानं विनान्त्यं प्रवदन्ति संख्यामिति कृत्वा जातम् ५ ४ ३ २ १ अथवा प्राग्वत् सैव संख्या जाता । एव-
१ २ ३ ४ ५ मेकविकल्पाः पञ्च, द्विविकल्पा दश, त्रिवि-

कल्पा दश, चतुर्विकल्पाः पञ्च, पञ्चविकल्पाः एकः, एवमेकत्रिंशत् ५।१०।१०।५।१ तद्यथा द्वितीये चन्द्रात् भौमः१ बुधः२ बृहस्पतिः३ शुक्रः४ शौरः५ एवमेकविकल्पाः पञ्च। अथ द्विविकल्पाः भौमबुधौ१ भौमजीवौ२ भौमशुक्रौ३ भौमशौरी४ बुधजीवौ५ बुधशुक्रौ६ बुधशौरी७ जीवशुक्रौ८ जीवशौरी९ शुक्रशौरी१० एवं द्विविकल्पाः दश। अथ त्रिविकल्पाः भौमबुधजीवाः१ भौमबुधशुक्राः २ भौमबुधशौराः ३ भौमजीवशुक्राः ४ भौमजीवशौराः ५ भौमशुक्रशौराः ६ बुधजीवशुक्राः ७ बुधजीवशौराः ८ बुधशुक्रशौराः ९ जीवशुक्रशौराः१० एवं त्रिविकल्पा दश १०। अथ चतुर्विकल्पाः भौमबुधजीवशुक्राः१ भौमबुधजीवशौराः२ भौमजीवशुक्रशौराः३ भौमबुधशुक्रशौराः४ बुधजीवशुक्रशौराः५ एवं चतुर्विकल्पाः पञ्च ५। अथ पञ्चविकल्पः भौमबुधजीवशुक्रशौराः१ एवं पञ्चविकल्प एकः१। एवमेकत्रिंशत् ३१। सुनफायोगाः उत्पादिता अनेनैव प्रकारेण। द्वादशस्थैः अनफाभेदाः एकत्रिंशत्। अथ दुरुधराविकल्पाः एषां लोष्टुकप्रस्ताराभावात् स्वबुद्ध्या दुरुधराविकल्पैः क्रमशोऽभिनीयेति न्यायेन व्युत्पत्तिः। एको द्वितीये, द्वितीयो (अन्यः) द्वादशे, एको द्वादशे द्वितीयो (अन्यः) द्वितीये, यथा भौमबुधौ१ बुधभौमौ २। भौमजीवौ३ जीवभौमौ४ भौमशुक्रौ५ शुक्रभौमौ६ भौमशौरी७ शौरभौमौ८ बुधजीवौ९ जीवबुधौ १० बुधशुक्रौ११ शुक्रबुधौ१२ बुधशौरी१३ शौरबुधौ१४ जीवशुक्रौ१५ शुक्रजीवौ१६ जीवशौरी१७ शौरजीवौ१८ शुक्रशौरी१९ शौरशुक्रौ२०। अथैको द्वितीये द्वादशे द्वौ, द्वितीये द्वौ द्वादशे चैकः तद्यथा भौमः बुधजीवौ१ बुधजीवौ भौमः२। भौमः शुक्रबुधौ३ बुधशुक्रौ, भौमः४। भौमः, बुधशौरी५, बुधशौरी, भौमः६। भौमः जीवशुक्रौ७ जीवशुक्रौ, भौमः८। भौमः जीवशौरी९ जीवशौरी, भौमः१०। भौमः शुक्रशौरी११ शुक्रशौरी, भौमः१२। बुधः भौमजीवौ१३ भौमजीवौ, बुधः १४। बुधः भौमशुक्रौ१५ भौमशुक्रौ, बुधः१६। बुधः भौमशौरी१७ भौमशौरी, बुधः १८। बुधः जीवशुक्रौ१९ जीवशुक्रौ, बुधः२० बुधः, जीवशौरी२१ जीवशौरी, बुधः२२। बुधः शुक्रशौरी२३ शुक्रशौरी बुधः२४। जीवः भौमबुधौ२५ भौमबुधौ जीवः२६। जीवः, भौमशुक्रौ२७ भौमशुक्रौ, जीवः२८। जीवः भौमशौरी २९ भौमशौरी

जीवः३०। जीवः बुधशुक्रौ३१ बुधशुक्रौ जीवः३२। जीवः बुधशौरी३३ बुधशौरी, जीवः३४। जीवः शुक्रशौरी३५ शुक्रशौरी, जीवः३६। शुक्रः भौमबुधौ३७ भौमबुधौ, शुक्रः३८। शुक्रः भौमजीवौ३९ भौमजीवौ, शुक्रः४०। शुक्रः भौमशौरी४१ भौमशौरी, शुक्रः४२। शुक्रः बुधजीवौ४३ बुधजीवौ, शुक्रः४४। शुक्रः बुधशौरी४५ बुधशौरी, शुक्रः४६। शुक्रः जीवशौरी४७ जीवशौरी शुक्रः ४८। शौरः भौमबुधौ४९ भौमबुधौ शौरः५०। शौरः भौमजीवौ५१ भौमजीवौ, शौरः५२। शौरः भौमशुक्रौ५३ भौमशुक्रौ शौरः५४। शौरः बुधजीवौ५५ बुधजीवौ, शौरः५६। शौरः बुधशुक्रौ५७ बुधशुक्रौ, शौरः५८। शौरः जीवशुक्रौ५९ जीवशुक्रौ शौरः६०। एवमेकत्र जाताः६०। अथैको द्वितीये, द्वादशे त्रयः, त्रयो द्वितीये, द्वादशे चैकः, तद्यथा भौमः बुधजीवशुक्राः१ बुधजीवशुक्राः भौमः२। भौमः बुधजीवशौराः३ बुधजीवशौराः, भौमः४। भौमः बुधशुक्रशौराः५ बुधशुक्रशौराः, भौमः६। भौमः जीवशुक्रशौराः७ जीवशुक्रशौराः भौमः८। बुधः भौमजीवशुक्राः९ भौमजीवशुक्राः, बुधः१०। बुधः भौमजीवशौराः११ भौमजीवशौराः बुधः१२। बुधः भौमशुक्रशौराः१३ भौमशुक्रशौराः, बुधः१४। बुधः जीवशुक्रशौराः१५ जीवशुक्रशौराः बुधः१६। जीवः भौमबुधशुक्राः१७ भौमबुधशुक्राः, जीवः १८। जीवः भौमबुधशौराः१९ भौमबुधशौराः, जीवः२०। एकत्र १००। जीवः भौमशुक्रशौराः२१ भौमशुक्रशौराः, जीवः२२। जीवः बुधशुक्रशौराः२३ बुधशुक्रशौराः, जीवः२४। शुक्रः भौमबुधजीवाः२५ भौमबुधजीवाः, शुक्रः२६। शुक्रः भौमबुधशौराः२७ भौमबुधशौराः, शुक्रः२८। शुक्रः भौमजीवशौराः२९ भौमजीवशौराः, शुक्रः३०। शुक्रः बुधजीवशौराः३१ बुधजीवशौराः, शुक्रः३२। शौरः भौमबुधजीवाः३३ भौमबुधजीवाः, शौरः३४। शौरः भौमबुधशुक्राः३५ भौमबुधशुक्राः, शौरः३६। शौरः भौमजीवशुक्राः३७ भौमजीवशुक्राः, शौरः३८। शौरः बुधजीवशुक्राः३९ बुधजीवशुक्राः, शौरः४०। एवमेकत्र१२०। अथ द्वितीये एको द्वादशे चत्वारः, चत्वारो द्वितीये द्वादशे चैकः तद्यथा भौमः बुधजीवशुक्रशौराः१ बुधजीवशुक्रशौराः भौमः२। बुधः, भौमजीवशुक्रशौराः३ भौमजीवशुक्रशौराः, बुधः४। जीवः भौमबुधशुक्रशौराः५ भौमबुधशुक्रशौराः, जीवः६। शुक्रः भौमबुधजीवशौराः७ भौमबुधजीवशौराः, शुक्रः८।

सौरः भौमबुधजीवशुक्राः ९ भौमबुधजीवशुक्राः, सौरः १०। | एवमेकत्र १२०। अथ द्वौ द्वादशे, द्वावेव द्वितीये तद्यथा भौ०बु०,जी०शु०१ जी०शु०,भौ०बु०२। भौ०बु०,जी०सौ०३ जी०सौ०,भौ०बु०४। भौ०बु०, शु०सौ०५ शु०सौ०,भौ०बु०६। भौ०जी०, शु०बु०७ शु०बु०,भौ०जी०८। भौ०जी०, बु० सौ०९ बु०भौ०जी०सौ०१०। भौ०जी०, शु०सौ०११ शु० सौ०, भौ०जी०१२। भौ० शु०, बु०जी०१३ बु०जी०, भौ०शु०१४। भौ०शु०, बु०सौ०१५ बु०सौ०भौ०शु०१६। भौ०शु०, जी०सौ०१७ जी०सौ०, भौ०शु०१८। बु०जी०, भौ०सौ०१९ भौ०सौ०बु०जी०२०। एवमेकत्र १५०। भौ०सौ०,बु०शु०१ बु०शु०,भौ०सौ०२। भौ०सौ०,जी०शु०३ जी०शु०,भौ०सौ०४। बु०जी०,शु०सौ०५ शु०सौ०,बु०जी०६। बु०शु०, जी०सौ०७ जी०सौ०,बु०शु०८। जी०शु०,बु०सौ०९ बु०सौ०जी०शु०१०। एवमेकत्र१६०। द्वौ द्वितीये त्रयो द्वादशे, द्वादशे द्वौ त्रयो द्वितीये तद्यथा भौ०बु०, जी०शु०सौ०१ जी०शु०सौ०, भौ०बु०२। भौ०जी०, बु०शु०सौ०३ बु०शु०सौ०, भौ०जी०४। भौ०शु०, बु०जी०सौ०५ बु०जी०सौ०, भौ०शु०६। भौ०सौ०, बु०जी०शु०७। बु०जी०शु०, भौ०सौ०८। बु०जी०,भौ०शु०सौ०९। भौ०शु०सौ०,बु०जी०१०। एवमेकत्र १७०। बु०शु०, भौ०जी०सौ०१ भौ०जी०सौ०, बु० शु०२। बु०सौ०, भौ०जी०शु०३ भौ०जी०शु०, बु०सौ०४। जी०शु०, भौ०बु०सौ०५। भौ०बु०सौ०, जी०शु०६। जी०सौ०, भौ०बु०शु०७ भौ०बु०शु०, जी० सौ०८। शु०सौ०,भौ०बु०जी०९। भौ०बु०जी०,शु०सौ०१०। एवमेकत्र१८०।

एवं दुरुधुरायोगभेदाः शतमशीत्यधिकं प्रदर्शितम्" भट्टो०। "सम्यग्भोगसुखभुग्धनवाहनाढ्यस्त्यागान्वितो दुरुधुराप्रभवः सुभृत्यः। चेतसू मे मलिनदुःखितनीचनिःस्वाः प्रेष्याः भवन्ति नृपतेरपि वंशजाताः" इहत्जा०। अस्य पुंस्त्वमपि। "प्रचुरधनसमेतो भोगसौख्यान्वितः स्याद्गजहयरथमुख्यैर्वाहनैरन्वितश्च। बहुवितरणमज्ञाप्राप्तितायशस्क दुर्दुधुरजनितो ना भवेद्वर्गैः प्रपूर्णैः" जातकपद्धतौ पुंस्त्वोक्तेः। "दधतेव योगसुभयप्रहान्तरस्थितिकादिनं दुरुधुरास्वमिन्दु ना" माघः।

दुरुफ पु० नी०ता० उक्ते योगभेदे। "तस्मीरक्तयी दुरुफश्च योगाः स्युः षोडशैषां कथयामि सम्यक्" इत्युद्दिश्य "लग्नात् यदेऽष्टमेऽन्ये रिपुरविम्दहगो वक्रगो नीचगामी क्रूरैर्युक्तोऽस्तगो वा यदि शुभविधी क्रूरनीचारिभस्थैः। चन्द्रोऽष्टमायव्ययगततनुभागे स्थितः शुभो-ऽप्यादिपदैश्च शून्यः। क्रूरैर्वराशौ न च वीर्ययुक्तः कार्यं विधातुं न विभुर्यतोऽसौ। चन्द्रः सूर्यादुत्स्वदिशि इत्थिकाद्ये यत्र नेष्टोऽन्ये तुलायां विशेषात्। राशीशेनाइष्टमूर्तिर्न संदृष्टो ज्ञेयः शून्यमार्गः पदानः। क्षीणो भान्ते नो शुभो जन्मकाले पृच्छायां वा चन्द्र एव विचिन्त्यः। शुक्ले भौमः कृष्णपक्षेऽर्कसूनुः सुहृदृष्ट्या नूनं वीक्षते नो शुभोऽसौ। शुक्ले दिवा मन्दसुगोऽर्कसुतः शशाङ्कं कृष्णे कुजो निशि समस्तगतः प्रपश्येत्। दौषात्मतां वितनुतेऽपरथा तु सत्त्वम् प्रश्नेऽथ वा जनुषि बुद्धिमतोह्यनीयम्"।

दुरूह त्रि० दुःखेन ऊह्यते दुर्+ऊह–कर्मणि खल्। दुर्वितर्क्ये। "जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुते" गीतगो०।

दुरेवा त्रि० दुर्+इ–बा० व। दुःखेन गम्ये "प्रादेवीनीयाः सहते दुरेवाः" ऋ०५।२।९। "दुरेवाः दुःखगमनाः" भा०।

दुरोक त्रि० दुष्ट ओकः समवायोऽत्र प्रा०ब०। दुःसेवे "दुरोकमग्निरायवे शुशोच" ऋ०७।४।३ "दुरोकं दुःसेवम्" भा०

दुरोण पु० गृहे निघण्टुः। "नि दुरोणे अमृतो मर्त्यानां राजा ससाद विदथानि साधन्" ऋ०३।१।१८। २यज्ञगृहे च। "काव्यशो राजा नेषु कृत्वा दक्षस्य दुरोणे" यजु०१२।७२ "दुरोणे यज्ञगृहे" वेददी० "अभि दिवस्यायुर्दुरोणायुः" ऋ० ८।६०।१९ "दुरोणायुर्यजमानगृहस्य भिम्नायता" भा० यु–मिश्रणे बा० कु। "हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषद् तिथिर्दुरोणसत्" कठोप०।

दुरोदर पु० दुष्टम् आ समन्तादुदरमस्य। १द्यूतकारे २पणे मेदि०। ३अक्षे ४द्यूते न० अमरः। "दुरोदरच्छद्मजितां समीहते नयेन जेतुं जगतीं सुयोधनः" किरा०। "न मृगयाऽभिरतिर्न दुरोदरम्" रघुः।

दुर्ग पुंन०दुःखेन गम्यतेऽसौ दुर्+गम–ड०। (गड़) (केल्ला) प्रसिद्धे राजामात्यपर्याये १कोट्टे। तत्स्वरूपभेदादिकं मत्स्यपुराणे २१६ अ० उक्तं यथा

"एवंविधं यथालाभं राजा विषयमावसेत्। तत्र दुर्गं नृपः कुर्यात् षण्णामेकतमं बुधः। धन्वदुर्गं महीदुर्गं नरदुर्गं तथैव च। वार्क्षं चैवाम्बुदुर्गं च गिरिदुर्गं च पार्थिव!। सर्वेषामेव दुर्गाणां गिरिदुर्गं प्रशस्यते। दुर्गं च परिखोपेतं वप्राट्टालकसंयुतम्। शत-

प्रोच्चसुधैव शतघ्न्या समावृतम् । गोपुरं सकपाटञ्च तत्र स्यात् सुमनोहरम् । सपताकगजारूढो येन राजा विशेत् पुरम् । चतस्रश्च तथा तत्र कार्य्यास्त्वायतवीथयः । एकस्मिंस्तत्र वीथ्यग्रे देववेश्म भवेद्दृढम् । वीथ्यग्रे च द्वितीये च राजवेश्म विधीयते । धर्म्माधिकरणं कार्य्यं वीथ्यग्रे च तृतीयके । चतुर्थे, त्वथ वीथ्यग्रे गोपुरञ्च विधीयते । आयतञ्चतुरस्रं वा वृत्तं वा कारयेत् पुरम् । मुक्तिहीनं त्रिकोणञ्च यवमध्यं तथैव च । आयतञ्चतुरस्रं वा वृत्तं वा कारयेत् पुरम् । अर्द्धचन्द्रं प्रशंसन्ति नदीतीरेषु तद्वसन् । अन्यत्तत्र न कर्त्तव्यं प्रयत्नेन विजानता । राज्ञा कोषगृहं कार्य्यं दक्षिणे राजवेश्मनः । तस्यापि दक्षिणे भागे गजस्थानं विधीयते । गजानां प्राङ्मुखी शाला कर्त्तव्या वाप्युदङ्मुखी । आग्नेये च तथा भागे आयुधागारमिष्यते । महानसञ्च धर्म्मज्ञ ! कर्म्मशालास्तथापराः । गृहं पुरोधसः कार्य्यं वामतो राजवेश्मनः । मन्त्रिवेदविदाञ्चैव चिकित्साकर्त्तुरेव च । तत्रैव च तथा भागे कोष्ठागारं विधीयते । गवां स्थानं तथैवात्र तुरगाणां तथैव च । उत्तराभिमुखी श्रेणी तुरगाणां विधीयते । दक्षिणाभिमुखी वाथ परिशिष्टास्तु गर्हिताः । तुरगास्ते तथा धार्य्याः प्रदीपैः सार्व्वरात्रिकैः । कुक्कुटान् वानरांश्चैव मर्कटांश्च विशेषतः । धारयेदश्वशालासु सवत्सां धेनुमेव च । अजाश्च धार्य्या यत्नेन तुरगाणां हितैषिणा । गोगजाश्वादिशालासु तत्पुरीषस्य निर्गमः । अस्तं गते न कर्त्तव्यो देवदेवे दिवाकरे । तत्र तत्र यथास्थानं राजा विज्ञाय सारतः । दद्यादावसथस्थानं सर्व्वेषामनुपूर्व्वशः । योधानां शिल्पिनाञ्चैव सर्व्वेषामविशेषतः । दद्यादावसथान् दुर्गे कालमन्त्रविदां शुभान् । गोवैद्यानश्ववैद्यांश्च गजवैद्यांस्तथैव च । आहरेत भृशं राजा दुर्गे हि प्रबला रुजः । कुशीलवानां विप्राणां दुर्गे स्थानं विधीयते । न बहूनामतो दुर्गे विना कार्य्यं तथा भवेत् । दुर्गे च तत्र कर्त्तव्या नानाप्रहरणान्विताः । सहस्रघातिनो राजंस्तैस्तु रक्षा विधीयते । दुर्गे द्वाराणि गुप्तानि कार्य्याण्यपि च भूभुजा । सञ्चयश्चात्र सर्व्वेषामायुधानां प्रशस्यते । धनुषां क्षेपणीयानां तोमराणां च पार्थिव ! । शराणामथ खड्गानां कवचानां तथैव च । लगुडानां गुडानाञ्च हुडानां परिघैः सह । अश्मनाञ्च प्रभूतानां मुद्गराणां तथैव च । त्रिशूलानां पट्टिशानां कुठाराणाञ्च पार्थिव ! । प्रासानाञ्च सशूलानां शक्तीनाञ्च नरोत्तम ! । परश्वधानां चक्राणां वर्म्मणाञ्चर्म्मभिः सह । कुद्दालक्षुरवेत्राणां पीठकानां तथैव च । तुषाणाञ्चैव दात्राणामङ्गाराणाञ्च सञ्चयः । सर्व्वेषां शिल्पिभाण्डानां सञ्चयश्चात्र चेष्यते । वादित्राणाञ्च सर्व्वेषामौषधीनां तथैव च । यवसानां प्रभूतानामिन्धनस्य च सञ्चयः । गुडस्य सर्व्वतैलानां गोरसानां तथैव च । वसानामथ मज्ज्ञानां स्नायूनामस्थिभिः सह । गोचर्म्मपटहानाञ्च धान्यानां सर्व्वतस्तथा । तथैवाभ्रपटानाञ्च यवगोधूमयोरपि । रत्नानां सर्व्ववस्त्राणां लोहानामप्यशेषतः । कलायमुद्गमाषाणाञ्चणकानां तिलैः सह । तथा च सर्व्वशस्यानां पांशुगोमययोरपि । शणसर्ज्जरसं भूर्ज्जं जतुलाक्षा च टङ्कणम् । राजा सञ्चिनुयाद्दुर्गे यच्चान्यदपि किञ्चन । कुम्भाश्चाशीविषैः कार्य्या व्यालसिंहादयस्तथा । मृगाश्च पक्षिणश्चैव रक्ष्यास्ते च परस्परम् । स्थानानि च विरुद्धानां सुगुप्तानि पृथक् पृथक् । कर्त्तव्यानि महाभाग ! यत्नेन पृथिवीक्षिता । उक्तानि चाप्यनुक्तानि राजद्रव्याण्यशेषतः । सुगुप्तानि पुरे कुर्य्याज्जनानां हितकाम्यया । जीवकर्षभकाकोलमामलक्याटरूषकान् । शालपर्णीं पृश्निपर्णीं मुद्गपर्णीं तथैव च । माषपर्णीं मटौ द्वौ च सारिवे द्वे बलात्रयम् । वारा श्वसन्ती वृष्या च वृहती कण्टकारिका । शृङ्गी शृङ्गाटकी द्रोणी वर्षाभूर्द्दर्भरेणुका । मधुपर्णी विदार्य्यौ द्वे महाक्षीरा महातपाः । धन्वनः सहदेवाह्वा कटुकैरण्डकं विषः । पर्णी शताह्वा मृद्वीका फल्गुखर्ज्जूरयष्टिकाः । शुक्रातिशुक्रकाश्मर्य्यं छत्रातिच्छत्रवीरणाः । इक्षुरिक्षुविकाराश्च फाणिताद्याश्च सत्तम ! । सिंही च सहदेवी च विश्वेदेवाश्वरोधकम् । मधुकं पुष्पहंसाख्या शतपुष्पा मधूलिका । शतावरीमधूके च पिप्पलं तालमेव च । आत्मगुप्ता कट्फलाख्या दार्व्विका राजशीर्षकी । राजसर्षप धान्याकमृष्यप्रोक्ता तथोत्कटा । कालशाकं पद्मबीज गोवल्ली मधुवल्लिका । शीतपाकी कुबेराक्षी काकजिह्वोरुपुष्पिका । पर्व्वतत्रपुसौ चोभौ गुञ्जातकपुनर्नवे । कसेरुकाश्मीरी बल्या शालूककेसरम् । तुषधान्यानि सर्व्वाणि शमीधान्यानि चैव हि । क्षीरं क्षौद्रं तथा तक्रं तैलं मज्जा वसा घृतम् । नीपश्चारिष्टकाक्षोडवातामसोमवातकम् । एवमादीनि चान्यानि विज्ञेयो मधुरोगणः । राजा सञ्चिनुयात्सर्व्वं पुरे निरवशेषतः । दाडिमाम्रातकौ चैव

**दुर्वर्त्तु** त्रि॰ दुर्+वृ—कर्म्मणि तुन्। दुर्वारे "दुर्वर्त्तुर्भीमो भवति भीम उग्रम्" ऋ॰ ४।१८।८ "दुर्वर्त्तुः दुर्वारः" भा॰।

**दुर्वस** त्रि॰ दुःखेनोष्यतेऽत्र दुर्+वस—वा॰ आधारे खल्। कष्टेन वासयोग्ये वस्तुमशक्ये "मथोदयोऽयं संप्राप्तः कष्टात् परमदुर्वसः" भा॰वि॰१अ॰।

**दुर्वसति** स्त्री दुःखेन वसतिः। दुःखेनावस्थितौ "रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः" रघुः।

**दुर्वह** त्रि॰ दुःखेनोह्यतेऽसौ दुर्+वह—कर्म्मणि खल्। दुःखेन वहनीये वोढुमशक्ये। "न दुर्वहश्रोणिपयोधरार्त्ताः" कुमा॰ "अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम्" रघुः। "दुर्वहो निग्रहो दण्डो हिरण्यबहुलस्तथा" भा॰शा॰ ६१९०श्लो॰।

**दुर्वाच्** स्त्री गर्हिता वाक् प्रा॰स॰। १निन्द्ये वाक्ये दुःस्थिता वागस्य प्रा॰ब॰। २निन्द्यवचनान्विते त्रि॰ "शय्यासनमलङ्कारमन्नपानमनार्य्यताम्। दुर्वाग्भावं रतिञ्चैव ददौ स्त्रीभ्यः प्रजापतिः" भा॰अनु॰४०अ॰ "अतीव जल्पन् दुर्वाचो भवतीह विहेटकः" भा॰आ॰ ३०७६ श्लो॰।

**दुर्वाच्य** न॰ निन्द्यं वाच्यम् प्रा॰स॰। अपवादे १अकीर्त्तौ "क्रोधानिमित्तं न मुत्वा दुर्वाच्यं न भविष्यति" रामा॰सु॰ १५२४श्लो॰। २कष्टेन वाच्ये च।

**दुर्वाद** पु॰ दुष्टो वादः प्रा॰स॰। अकीर्त्तौ स्तुतिपूर्वकाप्रियवाक्ये १अपवादे जटाध॰ २निन्दितवाक्ये च।

**दुर्वान्त** न॰ दुष्टं वान्तं प्रा॰स॰। १विधानातिक्रमेण वमने दुःस्थितं वान्तमस्य प्रा॰ब॰। २दुष्टवमनयुक्ते त्रि॰। "दुर्वान्तस्य तु वसत् क्लिष्टा दोषा व्याप्य शरीरं कण्डू श्वयथुकुष्ठपीडकाज्वराङ्गमर्दनिस्तोदनानि कुर्वन्ति" सुश्रुतः।

**दुर्वार** त्रि॰ दुःखेन वार्य्यतेऽसौ दुर्+वारि—कर्मणि खल्। दुःखेन वारणीये वारयितुमशक्ये "किन्त्वायमरिदुर्वारः पाणौ पाशः प्रचेतसः" कुमा॰ "सा दुर्वारं कथमपि परित्यागदुःखं विषेहे" रघुः।

**दुर्वारण** त्रि॰ दुःखेन वारणमस्य। १दुःखेन वारणीये "संरब्ध शरानस्तान् द्रोणं दुर्वारणं रणे" भा॰द्रो॰ १८१अ॰। २भिन्ने पु॰ दुर्विषहशब्दे दृश्यम्।

**दुर्वारि** त्रि॰ दुःखेन वारिर्वारणमस्य। कम्बोजदेशीये योधभेदे "एते दुर्वारयो नाम कम्बोजा यदि ते श्रुताः" भा॰द्रो॰११२अ॰। [दुष्प्रहर्त्तौ।

**दुर्वार्त्ता** स्त्री गर्ह्या वार्त्ता प्रा॰स॰। अप्रियावेदकवार्त्तायां

**दुर्वासना** स्त्री दुष्टा वासना प्रा॰स॰। पूरयितुमशक्येच्छायाम्

**दुर्वासस्** पु॰ मुनिभेदे स च अत्रेरंशेनानसूयायामजः। तदुत्पत्तिकथा मार्कण्डेयपु॰ १६–१२ अ॰स्था तन्नामनिरुक्तिश्च यथा "निगूढनिश्चयं धर्म्मं यं तं दुर्वाससं विदुः" भा॰ अनु॰ ४७अ॰। "ममांशस्तु स्थितितवे महाभागो द्विजोत्तमः। दुर्वासा इति विख्यातः स हि त्वां याजयिष्यति" भा॰आ॰ २२२अ॰ शिववाक्यम्। तस्य रुद्रांशजत्वेन क्रोधनत्वं यथाह "दुर्वासाः क्रोधनः श्रेष्ठस्तथा दीर्घतमा मुनिः" भा॰स॰ ७अ॰ "विद्यातपसोपेतो दुर्वासा नाम तापसः। तमागतमभिप्रेक्ष्य मुनिं परमकोपनम्" भा॰व॰२६१अ॰ तस्य क्रोधशीलत्वेन विशेषणम्। दुःसाध्यं वासः गृहे वासनमस्य इति वा व्युत्पत्तिः। गृहे तदीयवासनस्य दुःसाध्यत्वात् दुर्वासस्त्वं यथोक्तं भा॰अनु॰१५९अ॰ यथा "अवसन्मे गृहे तात! ब्राह्मणो हरिपिङ्गलः। चीरवासा बिल्वदण्डो दीर्घश्मश्रुः कृशो महान्। दीर्घेभ्यश्च मनुष्येभ्यः प्रमाणादधिको भुवि। चरेन् संचरते लोकान् ये दिव्या ये च मानुषाः। इमां गाथां गायमानश्चत्वरेषु सभासु च। दुर्वाससं वासयेत् को ब्राह्मणं सत्कृतं गृहे। रोषणः सर्वभूतानां सूक्ष्मेऽप्यपकृते कृते। परिभाषामिमां मे श्रुत्वा कोऽनुदद्यात् प्रतिश्रयम्। यो मां कश्चिद्वासयीत न स मां कोपयेदिति। यस्मान्नाद्रियते कश्चित्ततोऽहं समवासयम्। स स्म भुङ्क्ते सहस्राणां बहूनामन्नमेकदा। एकदा चाल्पकं भुङ्क्ते न चैवैति पुनर्गृहान्। अकस्माच्च प्रहसति तथाऽकस्मात् प्ररोदिति। न चास्य वयसा तुल्यः पृथिव्यामभवत्तदा। अथ स्वावसथं गत्वा स शय्यास्तरणानि च। कन्याश्चालङ्कृता दग्ध्वा ततो व्यपगतः पुनः। अथ मामब्रवीद्भूयः स मुनिः संशितव्रतः। कृष्ण! पायसमिच्छामि भोक्तुमित्येव सत्वरः। तदैव तु मया तस्य चित्तज्ञेन गृहे जनः। सर्वाण्यन्नानि पानानि भक्ष्याश्चोच्चावचास्तथा। भवन्तु सत्कृतानीह पूर्वमेव प्रचोदितः। ततोऽहं ज्वलमानं वै पायसं प्रत्यवेदयम्। तं भुक्त्वैव तु स क्षिप्रं ततो वचनमब्रवीत्। क्षिप्रमङ्गानि लिम्पस्व पायसेनेति स स्म ह। अविमृश्यैव च ततः कृतवानस्मि तत्तथा। तेनोच्छिष्टेन गात्राणि शिरश्चैवाभ्यमृक्षयम्। स ददर्श तदाभ्याशे मातरं ते शुभाननाम्। तामपि स्मयमानः स पायसेनाभ्यलेपयत्। मुनिः पायसदिग्धाङ्गीं रथे तूर्णमयोजयत्। तमारुह्य रथञ्चैव निर्ययौ च गृहान्मम।

मम । स्वन्दितश्चोऽवसन् धीमान् स द्विजो रथधूर्य्य-
वत् । प्रतोदेनातुदद्वाढं रुक्मिणीं मम पश्यतः । न च
मे स्तोकमप्यासीद्दुःखमीर्ष्याकृतं तदा । तथा स राज-
मार्गेण महता निर्ययौ बहिः । तद्दृष्ट्वा महदाश्चर्य्यं
दाशार्हा जातमन्यवः । तत्राजल्पन् मिथः केचित्
समाभाष्य परस्परम् । ब्राह्मणा एव जायेरन् नान्यो
वर्णः कथञ्चन । को ह्येनं रथमास्थाय जीवेदन्यः
पुमानिह । आशीविषविषं तीक्ष्णं ततस्तीक्ष्णतरो
द्विजः । ब्रह्माशीविषदग्धस्य नास्ति कश्चिच्चिकित्सकः ।
तस्मिन् व्रजति दुर्द्धर्षे प्रास्खलद्रुक्मिणी पथि । तां
नामर्षयत श्रीमांस्ततस्तूर्णमचोदयत् । ततः परमसंक्रुद्धो
रथात् प्रस्कन्द्य स द्विजः । पदातिरुत्पथेनैव प्राद्रवद्दक्षि-
णामुखः । तमुत्पथेन धावन्तमन्वधावं द्विजोत्तमम् ।
तथैव पायसा दिग्धः प्रसीद भगवन्निति । ततो विलोक्य
तेजस्वी ब्राह्मणो मामुवाच ह । जितः क्रोधस्त्वया कृष्ण !
प्रकृत्यैव महाभुज ! । न तेऽपराधमिह वै दृष्टवानस्मि
सुव्रत ! । प्रीतोऽस्मि तव गोविन्द ! वृणु कामान् यथेप्-
सितान्" ।

दुर्विगाह त्रि० दुर्+वि+गाह–कर्म्मणि खल् । १दुःखेन गा-
हनीये २धृतराष्ट्रपुत्रभेदे पु० "दुर्मदोदुर्विगाहश्च विवित्-
सुर्विकटाननः" भा०आ०११७अ० ।

दुर्विदग्ध त्रि० दुष्टो विदग्धः प्रा०स० । गर्विते "अलोक-
वेदादुर्विदग्धं गहनत्वम्" काद० ।

दुर्विदत्र त्रि०विद–लाभे विद–ज्ञाने वा बा०अत्र विदत्रं लभ्यं
धनं ज्ञानं वा ततः प्रा०ब०। १दुर्धनके २दुर्ज्ञानके च "आ
रे मन्युं दुर्विदत्रस्य धीमहि" ऋ०१०।२५।६। "दुर्विदत्रा
निर्ऋतिर्न" ऋ०१०।३६।२।

दुर्विध त्रि० दुष्टा विधाऽस्य प्रा०ब० । दरिद्रे अमरः ।
(दयमन्तोबयो) "अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचि-
गर्वदुर्विधम्" नैष० "विविनक्ति न बुद्धिदुर्विधः" माघः ।
२खले मेदि० ३मूर्खे शब्दर० । "शास्त्रेष्वन्येषु कुधियो
विद्यमानेषु दुर्विधाः । बुद्धिमान्वीक्षिकीं प्राप्य निरर्थान्
प्रवदन्ति ते" रामा० २।१०६।२

दुर्विनय पु० दुर्+वि+नी–भावे अच् । विनयराहित्ये ।
दुर्+वि+नी–क्तिन् । दुर्विनीति तत्रार्थे स्त्री

दुर्विनीत त्रि० दुर्+वि+नी–कर्त्तरि क्त । १विनयाकर्त्तरि
विनयशून्ये २अधिक्षिताश्वे पुंस्त्री०हेमच०स्त्रियां जाति-
त्वात् ङीष् ।

दुर्विमोचन त्रि० दुःखेन विमोचनं यस्य । १दुःखेन मोच-
नीये २धृतराष्ट्रपुत्रभेदे पु० "चित्रवाङ्चित्रवर्म्मा सुवर्मा
दुर्विमोचनः" भा०आ०११७अ० । तत्पुत्रोक्तौ तु ६७अ० ।
दुर्विरोचन इति पाठान्तरम् । सोऽपि तत्पुत्रभेदे

दुर्विवाह पु०निन्दितो विवाहः प्रा०स० । ब्राह्मादिचतुष्क-
भिन्नेषु आसुरादिषु चतुर्षु विवाहेषु ब्राह्मादीनष्टौ
विवाहानुक्त्वा मनुनोक्तं यथा
"ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः । ब्रह्म-
वर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः । रूपसत्त्वगुणो-
पेता धनवन्तो यशस्विनः । पर्य्याप्तभोगा धर्मिष्ठा
जीवन्ति च शतं समाः । इतरेषु तु शिष्टेषु नृशंसानृत-
वादिनः । जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ।
अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा । निन्दितै
र्निन्दिता नृणां तस्मान्निन्द्यान् विवर्जयेत्"

दुर्विष पु०दुःस्थितो विषोऽस्य प्रा०ब०। विषजनविकारशून्ये शिवे
"दुर्द्धर्षो दुष्प्रकाशश्च दुर्विषो दुर्जयोऽजयः" भा०शा०
२८६अ० शिवनामोक्तौ । तस्यामृतमन्थनकाले विष-
पानेऽपि तज्जनविकाररहित्यात् विषविकारस्य तं
प्रति दुःस्थितत्वात्तस्य तथात्वम् । दुष्टो विषो वा पेयत्वे
नास्त्यस्य अच् वा । दुष्टविषपानाद्वा तस्य तथात्वम् ।

दुर्विषह त्रि० दुःखेन विषह्यतेऽसौ दुर्+वि+सह–कर्म्मणि
खल् । १सोढुमशक्ये दुःखेन सहनीये "सैषा दुर्विषहा
माया दैवैरपि दुरासदा" हरिवं० ४६अ० २शिवे पु०
"दुर्वारणो दुर्विषहोदुस्सहोदुरतिक्रमः" भा०शा०२८६
अ०। ३धृतराष्ट्रपुत्रभेदे "दुर्योधनो दुर्विषहो दुर्मुखो
दुष्प्रधर्षणः" भा०आ०१८६अ० तत्पुत्रोक्तौ

दुर्वृत्त न० दुष्टं वृत्तम् प्रा०स० । १निन्दिते आचरणे "दु-
र्वृत्तं धार्त्तराष्ट्राणामुक्तवान् भगवानृषिः" भा०आ०१अ०
दुःस्थं वृत्तमस्य प्रा०ब० । २दुर्जने "दुर्वृत्तवृत्तशमनं तव
देवि ! शीलम्" देवीमा० "चाटुतस्कर दुर्वृत्तमहासा-
हसिकादिभिः" याज्ञ०

दुर्वेद त्रि० दुःखेन विद्यते लभ्यतेऽसौ दुर्+विद+लाभे–क-
र्म्मणि खल् । १लब्धुमशक्ये दुःखेन लभ्ये "ये एव के च
मानवास्तेषां दुर्वेद एव यथा हृषिर्यदि वक्तां शुचि-
न विन्देदपि" शत०ब्रा० ५।१।२।१ दुष्टज्ञो वेदोऽस्य
प्रा०ब० । २वेदपाठरहिते च । "दुर्वेदा वा सुवेदा वा
प्राकृताः संस्कृतास्तथा । ब्राह्मणा नावमन्तव्या भस्म-
च्छन्ना इवाग्नयः" भा०व०१९८अ०

वहार पु० दुष्टो व्यवहारः प्रा०स० । दुष्टव्यवहारदर्शिते राजनीत्यादिनाऽवलम्ब्यनियमीति व्यवहारे तच्छब्दे दृश्यम् ।

**दुर्र्जित** न० गर्हितं अर्जितम् प्रा०स०। निन्दितगतौ "दुर्व्याहृताच्छङ्कमाना दुःस्थिता दुरवेक्षितात् । दुरासिताद् दुर्व्रजितादिङ्गिताध्यासितादपि" भा०व०२२२अ०

**दुर्ह(णा)न** त्रि०दुःखेनाहन्यतेऽसौ दुर्+हन–कर्मणि खल् । हन्तुमशक्ये दुःखेन हन्तव्ये "प्रकल्प्यति च तस्यार्थौ निशुम्भे दुर्हने हते" भट्टिः वेदे तु णत्वम् । "मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत्" ऋ०१।३८।६ "त्वं नो अस्या इन्द्र ! दुर्हणायाः" ऋ०१।१२१।१४

**दुर्हणायु** त्रि० दुष्टं हननमिच्छति क्यच् दुर्हणाय–उन् वेदे णत्वम् । दुष्टहननेच्छौ "श्रियं यद्दुर्हणायुवम्" ऋ०४।३०।८। "दुर्हणायुवं दुष्टहननमिच्छन्तीम्" भा० छान्दस उवङ् ।

**दुर्हणु** त्रि० दुःस्थो हनुरस्य प्रा०ब० दुर्+हन–उन् वा, वेदे णत्वम् । १दुःखेन हननीये २दुष्टहनुयुक्ते च "तदा रभस्व दुर्हणो !" ऋ० १०।१५५।२। लोके तु दुर्हनु इत्येव दुष्टहनुके त्रि० ।

**दुर्हल(लि)** त्रि०दुष्टो हलिरस्य वा अच्‌समा०। दुष्टहलियुक्ते

**दुर्हित** त्रि० निन्दितो हितः प्रा०स० । विरोधिलक्षणया शत्रौ "न दुर्हितः स्यादग्ने न पापया" ऋ०८।१९।२६

**दुर्हुत** न० निन्दितं हुतम् प्रा०स०। अफलजनके होमे "सदैव याचमानेषु तथा दम्भान्वितेषु च । एतेषु दक्षिणा दत्ता दावाग्नाविव दुर्हुतम्" भा०शा०१८अ०

**दुर्हृणायु** त्रि० दुष्टं हृणीयते क्रुध्यति लज्जते वा दुर्+हृणी+क्रोधे लज्जायाञ्च कण्ड्वा० यक् तत उन् अल्लोपयलोपौ पृषो० वर्णव्यत्यासे ईकारस्याकारः, कण्ड्वा० वा नि०। १दुष्टक्रोधने २दुष्टं लज्जमाने च । "दुर्हृणायुस्तिरश्चित्तानि वसवो जिघांसति" ऋ०७।५९।८ "दुर्हृणायुरप्योभन क्रुध्यन्" भा० "ऋतस्य शिमीवतो भामिनो दुर्हृणायून्" ऋ०१।८४।१६

**दुर्हृत्** त्रि० दुष्टं हृदयमस्य प्रा०ब० "सुहृद्दुर्हृदौ मित्रामित्रयोः" पा० निपा० । १अमित्रे शत्रौ । दुःखितं हृदयम् प्रा०ब०। २दुःखितहृदये त्रि० "अश्मसारमयं नूनं हृदयं मम दुर्हृदः" भा०व० ११२अ०। तस्य भावः युवा०अण् द्विपदवृद्धिः दौर्हार्द दुष्टान्तःकरणत्वे शत्रुत्वे च न० ।

**दुर्हृद्ग** त्रि० दुःखं हृदयेन गच्छति अवगमेन न निपा० । १दुष्टान्तःकरणयुक्ते । दुष्टं हृदयम् प्रा०स० । २दुष्टे मनसि न० ।

**दुल** उत्क्षेपे (दोलान) चुरा०उभ० सक० सेट् । दोलयति ते अदूदुलत् । "नारी पदद्वयं स्थाप्य कान्तस्योरुद्वयोपरि । कटिं चेद्दोलयेदाशु बन्धः कन्दर्पसञ्ज्ञकः" रतिमञ्जरी "आन्दोलत् च दोलने" कविकल्पद्रुमः । अस्य वा चुरादित्वमपि । दुल–कि "दुलिः अस्या दुली नितत्नीरभ्रयन्ती" तैत्ति० ४।४।५।१ दुलीति उत्क्षिपन्तीत्यर्थः ।

**दुलि** पु० दुल–कि । १कमठभेदे शब्दार्थचि०। २कच्छपस्त्रियां स्त्री वा ङीप् । ३उत्क्षेपके त्रि०।

**दुलिदुह** पु० दिलीपनृपपितरि अनमित्रसुते "अनमित्रसुतो राजा विद्वान् दुलिदुहोऽभवत् । दीलिपस्तनयस्तस्य रामस्य प्रपितामहः" हरिवं० १५अ० [शब्दार्थचि०।

**दुल्लल** त्रि० दु+क्विप् दुतं ललति लल–अच् । रोमशे

**दुवस्** परिचरणे उपतापे च कण्ड्वा० नाम० यक् पर० सक० सेट । दुवस्यति अदुवस्यीत् "अनेहसः स्तुभ इन्द्रो दुवस्यति" ऋ० ३।५१।२ "याभिर्धियं जिन्वथ दुवस्यथः" ऋ० १।११२।१५ "समिद्भिरग्निं नमसा दुवस्यन्" ऋ०२।१।१२

**दुवस्** न०दुवस् परिचरणे कण्ड्वा०दुवस्य–क्विप् अल्लोपयलोपौ। १हविषि २परिचरणे च "एभिरग्ने दुवोगिरोविश्वेभिः" ऋ०१।१४।८ "दुवः परिचर्य्याम्" । दुव इच्छति क्यच् वा अनङ् दुवस्यति "स त्वा भरिषो गरिषो दुवस्यसम्" ऋ०४।४०।२। दुवः परिचरणमिच्छन्तः दुवस्याः तान् सीदन्ति दुवस्यसम्" भा० कर्मणि ल्युट् अनङ्भावे पक्षे अल्लोपयलोपौ दुवसन परिचरणीये "स्योनासो न दुवसनासः" ऋ०४।६।१० "दुवसनासः परिचरणीयाः" भा०

**दुवस्य** त्रि०नाम०दुवस्य–शक्यार्थे यत् अल्लोपयलोपौ। "परिचर्य्यार्हे "आ यद्दुवस्याद्दुवसे न कारुः" ऋ० १।१६५।१४। "दुवस्यात् परिचर्य्यार्हात् दुवसे परिचरणाय" भा०

**दुवस्यु** त्रि० दुवः परिचरणमिच्छति क्यच् "क्याच्छन्दसि" पा० उन् । परिचरणेच्छायुक्ते "गोमन्तूर्णति पर्यप्य दुवस्युः" ऋ०१०।१००।१२ वेदे क्वचिदस्य स्त्रियामुवङ् । "स न ईशानया सह देवा अग्ने दुवस्युवा" ऋ०८।१०२।२

**दुवस्वत्** त्रि० दुवो हविः परिचरणं वाऽस्यास्ति मतुप् मस्य वः सान्तत्वात् न पदकार्यम् । १हविर्युक्ते २परिचरणयुक्ते च "अवस्युरसि दुवस्वान्" यजु०५।३२ "सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा" ९।३५ "दुवस्वान्नध्वर्यौ" १८।४

**दुवोयु** त्रि॰ दुवः परिचर्य्यामिच्छति क्यचि वेदे वा पदकार्य्यम् उन्। परिचरणेच्छौ। "स तु श्रुधि श्रुत्या यो दुवोयुः" ऋ॰ ६।३६।५। "दुवोयुरकदीयं परिचरणमात्मन इच्छन्" भा॰ पक्षे दुवस्यु तत्रार्थे

**दुश्चर** त्रि॰ दुःखेन चर्य्यते दुर्+चर–कर्म्मणि खल्। चरितुमशक्ये १दुःखेन चरणीये "चरतः किल दुश्चरं तपः" रघुः "स्थाने तपो दुश्चरमेतदर्थम्" कुमा॰ "अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम्" मनुः। दुःखेन दुष्टं वा चरति चर+अच्। १शल्लुके हारा॰ २भल्लूके पुंस्त्री॰ राजनि॰।

**दुश्चरित** न॰ दुष्टं चरितम् प्रा॰स॰। १दुष्कृते पापे "इह दुश्चरितैः केचित् केचित् पूर्वकृतैस्तथा। प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्य्ययम्"। "यथा महाह्रदं प्राप्य क्षिप्तं लोष्टं निमज्जति। तथा दुश्चरितं सर्वं वेदे त्रिवृति मज्जति" मनुः। दुःखेन चरितम्। २कष्टेन कृते त्रि॰ दुष्टं चरितं यस्य प्रा॰ब॰। ३तद्युक्ते त्रि॰।

**दुश्चर्म्मन्** पु॰ दुःस्थितं चर्म्म यत्र प्रा॰ब॰। १स्वभावतोऽनावृतमेढ्रे रोगभेदे। "हेमहारी तु कुनखी दुश्चर्म्मा गुरुतल्पगः" याज्ञ॰। २कोठरोगे राजनि॰।

**दुश्चारित्र** न॰चरित्रमेव स्वार्थे अण् चारित्रं दुष्टं चारित्रम् प्रा॰स॰। दुष्टे चरित्रे पापे। दुःस्थितं चारित्रमस्य प्रा॰ब॰। १दुष्टचरित्रयुक्ते त्रि॰ "शूद्रो राजन्! भवति ब्रह्मबन्धुर्दुश्चारित्रोयश्च धर्म्मादपेतः" भा॰शा॰६३अ॰।

**दुश्चिकित्स्य** त्रि॰ दुर्+कित–स्वार्थे सन् कर्म्मणि यत्। दुःखेन चिकित्सनीये प्रतिकार्य्ये रोगे। सुश्रुतोक्ताः ते च रोगा असाध्यशब्दे ४४८पृ॰ दर्शिताः।

**दुश्चिक्य** न॰ लग्नात् तृतीये राशौ "त्रित्रिकोणश्च नवमं दुश्चिक्यं स्यात् तृतीयकम्" ज्यो॰त॰

**दुश्च्यवन** पु॰ दुःसहं च्यवनं चालनमस्य दुःसहच्यवनः शिवो येन वा प्रा॰ब॰, दुर्+च्यु–ल्यु, "छन्दसि गत्यर्थेभ्यः" पा॰ युच् वा। इन्द्रे अमरः "युत्कारेण दुश्च्यवनेन धृष्णुना" ऋ॰ १०।१०२।२ "दुश्च्यवनेनाच्यैरविचाल्येन" भा॰ बहुकालानन्तरं स्वस्थानात् पतनात् तस्य तथात्वम्। एकैकमन्वन्तरे हि चतुर्दश इन्द्रा भवन्तीति एकसप्ततिमहायुगस्य मन्वन्तरकालस्य चतुर्दशोभागः किञ्चिदधिकपञ्चसहस्रयुगात्मकस्तत्कालस्ततोऽनन्तरं तस्य पतनात् तथात्वम्। चतुर्दश इन्द्राश्च कल्पभेदेन भिन्ननामानः इन्द्रशब्दे ८४५पृ॰ दर्शिताः। अयनेन शिवेनाभिभूतत्वात् तस्य तथात्वम् "अव्ययतश्च शक्रस्य वज्रेण प्रहरिष्यतः। सवज्रं स्तम्भयामास तं बाहुं परिघोपमम्" भा॰अनु॰ १६०अ॰ "बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत् प्रभुः" कल्किनाथष्टतपुराणम्।

**दुश्च्याव** त्रि॰ दुःखेन च्याव्यतेऽसौ दुर्+च्यु–णिच् कर्म्मणि खल्। १दुःखेन च्यावनीये। २महादेवे पु॰ "दुश्च्यावश्च्यवनो जेता हन्ता ब्रह्मद्विषां हरः" भा॰अ॰२४अ॰

**दु(दुः)श्रव** न॰ दुःखेन श्रूयतेऽसौ दुर्+श्रु–खल् वा रेफस्य उत्वम्। श्रुतिदुःखावहे परुषवर्णयुक्ते काव्यदोषभेदे "दुःश्रवं त्रिविधाश्लीलानुचितार्थप्रयुक्तता" इत्युपक्रमे परुषवर्णतया श्रुतिदुःखावहत्वं दुःश्रवत्वमिति सा॰द॰ लक्षयित्वा यथा "कार्त्तार्थ्यं यातु तन्वङ्गी" इत्युदाहृतम्। तस्य चापरनाम श्रुतिकटुरिति चन्द्रालोके उक्तम् "भवेच्छ्रुतिकटुर्वर्णैः श्रवणोद्वेजने पटुः"। अत्र स्वघटकवर्णस्यैव परुषत्वेन तद्घटितकाव्यस्य तथात्वं "पदे पदांशे वाक्येऽर्थे सम्भवन्ति रसेऽपि ते" सा॰द॰ सामान्यतो दोषाणां पञ्चधोक्तौ तेनेऽपि श्रुतिकटुदोषस्य पदतदंशवाक्येष्वेव सम्भवः इत्येव विशेषः।

**दुष** वैकृते दिवा॰पर॰अक॰ अनिट्। दुष्यति इरित् अदुषत् अदुक्षत् दुदोष दोष्टा दोक्ष्यति। "श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति" मनुः। "मेदं प्रजापते रेतोऽदुषत्" ऐत॰ब्रा॰ ३।३३ "राङ्कवे पट्टसूत्रे च सूचीभिन्नं न दुष्यति" स्मृतिः। वैकृतञ्च यस्य यथास्वरूपं तद्वैपरीत्यं, यथा हेतोः साध्यानुमापकत्वं तद्वैपरीत्ये दुष्टत्वम् अशुद्धत्वञ्च। यथा मलादिना वस्त्रादेरशुद्धत्वम्। अशुद्धिश्च स्वरूपतः यथा मालिन्यादिना, शास्त्रविध्युल्लङ्घने दुरदृष्टजनकत्वेन वा। यथा नीलीवस्त्रादिधारणादेः शास्त्रनिषिद्धत्वात् तद्धारणे दुरदृष्टोत्पत्तेः तस्य दुष्टत्वम्। एवमन्यत्राप्यूह्यम् "दुषधातोरिशब्दाकं दोषसम्पत्तये गुणाः" उद्भटः दोषः। दुष्टः। "अनेकदोषदुष्टोऽपि कायः कस्य न वल्लभः" पञ्चत॰ दोषी। णिच्। दूषयति चित्तविकारे तु दोषयति दूषयति वा चित्तम्। "न च किञ्चिदेवांशं काव्यस्य दूषयन्तः श्रुतिकटादयो दोषाः, किं तर्हि सर्वमेव काव्यम्" सा॰द॰। "दोषोविचारसुलभो यदि दूष्यते तद् व्याख्या मम प्रथममेव न दूषणीया" काव्यप्र॰व्या॰ महेश्वरः "यः कौतुके पुरुषं स्नापयित्वा पश्चादेनं दूषयते स बालः" भा॰स॰ ६२ अ॰ "यथा क्रतुषु विप्राणां सोमपानं न दूषितम्" कुला॰

र्वतनम् । दूषयन् दूषणीयः दूषितः दूषयित्वा संदूष्य । उपसर्गपूर्वकः तत्तदुपसर्गद्योत्यार्थयुक्तविकारे

**दुष्कर** त्रि॰ दुःखेन क्रियते दुर्+कृ—कर्मणि खल् । कर्त्तु-मशक्ये १दुःखेन करणीये "अपि यत् सुकरं कर्म तद-प्येकेन दुष्करम्" मनुः "सुग्धे ! दुष्करमेतदित्यतितरा-मुक्ता सहासं बलात्" अमरुश॰ २आकाशे न॰ सङ्गार्थ-कत्वतः तस्याजन्यत्वेन दुष्करत्वात् । भावे खल् । ३दुः-खेन करणे न॰ ।

**दुष्कर्मन्** न॰ दुष्टं कर्म प्रा॰स॰ १पापे । दुष्कर्मभिस्र नहुषो नाशं यास्यति दुर्मतिः" भा॰उ॰ १२अ॰ "दुष्कर्मजान्नृणां रोगा यान्ति चैव क्रमात् शमम् । जपैः सुरार्चनैर्हो-मैर्दानैस्तेषां चयोभवेत्" शातातपः । दुःस्थितं कर्मास्य प्रा॰ब॰ २पापकर्मकारके त्रि॰"ततो वसति दुष्कर्मा नरके शाश्वतीः समाः" भा॰उ॰१२अ॰ ।

**दुष्काल** पु॰ दुष्टः कालः प्रा॰स॰ । निन्दिते काले । यस्य यः कालोविहितस्तस्य ततो वैलक्षण्ये कालस्य दुष्टता २प्रलये च । दुःसहो कालः कलनमस्य प्रा॰ब॰ । ३शिवे "अकालश्चातिकालश्च दुष्कालः कालएव च" भा॰शा॰ २८६ अ॰शिवनामोक्तौ ।

**दुष्कुल** न॰ दुष्टं कुलम् प्रा॰स॰ १निन्दिते कुले "अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि" मनुः । दुःस्थं कुलमस्य प्रा॰ब॰ । २निन्दितकुलजाते त्रि॰ "मदमूर्खताभिमाना दुष्कुलतैश्वर्यसंयुक्ताः" मा॰द॰ दुष्कुले भवः यत् ख । दुष्कुलीन, ढक् दौष्कुलेय निन्द्यकुलभवे त्रि॰

**दुष्कृत** न॰ दुष्टं कृतम् प्रा॰स॰ । १पापे "दातुर्यत् दुष्कृतं किञ्चित् तत्सर्वं प्रतिपद्यते । निपानकर्त्तुः स्नात्वा तु दुष्-कृतांशेन लिप्यते" मनुः २तज्जनके कर्मणि च "यथा यथा मनस्तस्य दुष्कृतं कर्म गर्हति" मनुः तदस्यास्ति इनि । दुष्कृतिन् तद्युक्ते "पुनःपुनर्दुष्कृतिनं निनिन्द" रघुः ।

**दुष्कृति** स्त्री॰दुष्टा कृतिरस्य प्रा॰ब॰। दुष्कर्मकारके "पादस्प-र्शस्तु रक्षांसि दुष्कृतीमवधूननम्" मनुः प्रा॰स॰। २पापे स्त्री

**दुष्क्रीत** त्रि॰ दुष्टं क्रीतम् प्रा॰स॰ । रूपसंख्यादिकमपरीक्ष्य क्रीते क्रीतानुशयशब्दे दृश्यम् "क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं मन्यते क्रयी" नारदः । [अमरः ।

**दुष्खदिर** पु॰दुष्टः खदिरः प्रा॰स॰। कालस्कन्दे क्षुद्रखदिरभेदे

**दुष्ट** त्रि॰ दुष—क्त । १दुर्वृत्ते २अधमे विश्वः । ३दोषान्विते च दोषशब्दे पक्षतावच्छेदकव्यभिचारादीनामन्यतमयुक्ते ४हेतौ । ५पित्तादिदोषयुक्ते ज्ञानकारणे नेत्रादौ यथा कथञ्चित् ६दोषयुक्ते च त्रि॰ ७कुष्ठे न॰ (कुड़) ख्याते गन्धद्र॰। "त्याज्यो दुष्टः प्रियोऽप्यासीत्" रघुः "दुष्टः शब्दः स्वरतो वर्णतो वा" महाभाष्यधृता श्रुतिः ।

**दुष्टचारिन्** त्रि॰ दुष्टं चरति चर—णिनि । दोषयुक्तकर्म-कारिणि "अथ यत्नेनमासीनं शङ्केरन् दुष्टचारिणः" भा॰वि॰४अ॰ ।

**दुष्टगज** पु॰ नित्यकर्म॰ । गम्भीरवेदिनि गजे हेमच॰ ।

**दुष्टनु** त्रि॰ दुष्टा तनुरस्य प्रा॰ब॰ वेदे षत्वम् । दुष्टदेह-युक्ते "सुधा किल त्वा दुष्टनो ! जजिरानृत्म न श्रुत्यः" ऋग्॰ ४।७।२ लोके तु दुस्तनु इत्येव तत्रार्थे

**दुष्टयोग** पु॰ कर्म॰। १वैधृतिव्यतीपातादि योगे तस्य स्नानदा-नाद्यतिरिक्तकर्मसु वर्ज्यत्वमशुभसूचकत्वञ्च सू॰सि॰नाना-स्थाने उक्तं यथा

"तुल्यांशुजालसम्पर्कात् तयोस्तु प्रवहाहतः । तद्-दृक्क्रोधभवो वह्निर्लोकाभावाय जायते । विनाश-यति पातोऽस्मिन् लोकानामसकृद् यतः । व्यतीपातः प्र-सिद्धोऽयं संज्ञाभेदेन वैधृतिः । स कृष्णो दारुणवपु र्लोहिताक्षो महोदरः । सर्वानिष्टकरो रौद्रो भूयो भूयः प्रजायते । आद्यन्तकालयोर्मध्यः कालोज्ञेयोऽति दारुणः । प्रज्वलज्ज्वलनाकारः सर्वकर्मसु गर्हितः । एकायनगतं यावदर्कन्दोर्मण्डलान्तरम् । सम्भवस्तावदेवास्य सर्वकर्मविनाशकृत् । व्यतीपातत्रयं घोरं गण्डा-न्तत्रितयं तथा । एतद् भसन्धित्रितयं सर्वकर्मसु वर्जयेत्" २अरिष्टसूचके गोचरविलग्नादिस्थग्रहयोगभेदे च

**दुष्ट(स्त)र** त्रि॰ दुःखेन तीर्यतेऽसौ कर्मणि खल् वेदे सुषामादेराकृतिगणत्वात् षत्वम् । "वर्त्तिर्यं महतः पतृ-सु दुष्टरम्" ऋ॰१।५४।१४ लोके तु न षत्वम् "तितीर्षु-र्दुस्तरं मोहादुडुपेनास्मि सागरम्" रघुः ।

**दुष्टरक्तदृक्** त्रि॰ दुष्टा रक्ता च दृगस्य । पित्तादिदोषजरक्त-नेत्रके । "दोषितः स्त्रीप्रसङ्गेन जायते दुष्टरक्तदृक्" शातातपेन तत्कर्मपाक उक्तः ।

**दुष्टरीतु** पु॰ दुर्+तृ—तुन् वेदे इट् दीर्घश्च षत्वम् । दुःखेन तरणीयेऽहिंस्ये "तुविग्रये वह्नये दुष्टरीतवे" ऋ॰२।२।१ लोके तु दुस्तर्तु इत्येव ।

**दुष्टवृष** पु॰कर्म॰। शक्तत्वेऽपि धुर्वहे वृषे (गड़िया) ख्याते हेमच॰। [शब्दे दृश्यम् ।

**दुष्टव्रण** पु॰ नित्यक॰। अचिकित्स्यनीये व्रणभेदे छिन्नीय-

**दुष्टसाक्षिन्** पु॰ कर्म॰ । नारदाद्युक्ते असाक्षित्वप्रयोजकदोष

युक्तं साक्षिषु । साक्षिणोदोषाश्च नारदेनोक्ताः यथा "स्वस्थानाद्दोषदुष्टत्वादस्वस्थ इव लक्ष्यते । स्थानात् स्थानान्तरं गच्छेदेकैकस्यानुधावति । कासत्यकस्माच्च भृशमभीक्ष्णं निःश्वसित्यपि । विलिखत्यवनीं पद्भ्यां बाहू वाससी धूनयेत् । भिद्यते मुखवर्णोऽस्य ललाटं स्विद्यते तथा । शोषमागच्छतश्चोष्ठावूर्द्धं तिर्य्यक् च वीक्षते । त्वरमाण इवाबद्धमपृष्टो बहु भाषते । कूटसाक्षी स विज्ञेयस्तं पापं विनयेद्भृशम्" । अबद्धमसम्बद्धम् । विनयेच्छिक्षयेद् यथा कौटसाक्ष्यान्न बिभेतीत्यर्थः । न तु दण्डयेदित्यर्थः । प्राकृतवैकृतिकविकारविवेकस्य दुःशकत्वात् सम्भावनामात्रेण च दण्डनस्यान्याय्यत्वादिति मिता० उक्तम् । मदनरत्ने त्वाविद्धमिति पठित्वा आकुलमिति व्याख्यातम् । याज्ञवल्क्यावपि "मन्त्रिभिः साक्ष्यसामर्थ्याद्दुष्टलक्षणं ग्रान्तिर्य्यक्प्रेक्षते समन्तादेवावलोकयति । अकस्मान्मूत्रं पुरीषं विसृजति देशाद्देशं गच्छति पाणिना पाणिं पीडयति नखान्निकृन्तति मुखमस्य विवर्णतामेति प्रस्विद्यति चास्य ललाटञ्च चक्षुर्न च वाचं प्रतिपूजयत्यकस्माद्धसति, प्रशंसति पुनः पुनरन्यमपवदति वक्रनिरीक्षते मस्तकं परामृशति शिरः प्रकम्पयत्योष्ठौ निर्भुजति सृक्किणी परिलेढि अतिविचितः कर्मस्वप्यहृत्स्वपि भ्रुवौ संहरति तूष्णीं ध्यायति पूर्वोत्तरविरुद्धं व्याहरति एवमादिदुष्टलक्षणं क्रुद्धस्य च स्वामिनोऽन्यत्र प्रकृतिधीत्वादिति" अकस्मादिति तूष्णीमिति च यथायोगमनेकत्र सम्बन्धनीयम् । अन्यत्र प्रकृतिधीत्वादिति । प्रकृत्या स्वभावात् धीरन्तिर्य्यक्प्रेक्षणादिधर्मो यस्य स तथोक्तस्ततोऽन्यत्रैतानि दुष्टलक्षणानि, एते अवान्तरवैलक्षण्यस्य दुर्ज्ञेयत्वादवधानेन परीक्ष्य वस्तुतत्त्वानुसरणमाचरणीयमिति सूचितम्" वीरमि०

मुनिवाक्ये अन्येऽपि साक्षिदोषा असाक्षिलक्षणोक्त्या वीरमि० भङ्ग्यादर्शिता यथा

मनुः "नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः । न दृष्टदोषाः कर्त्तव्या न व्याध्यार्त्ता न दूषिताः । न साक्षी नृपतिः कार्य्यो न कारुककुशीलवौ । न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः । नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्म्मकृत् । न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः । नार्त्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः । न श्रमार्त्तो न कामार्त्तो न क्रुद्धो नापि तस्करः" इति । "अत्र सर्व्वविशेषणैरसत्यवचनसम्भावना विस्मरणादिसम्भावनानिमित्तमुपलक्ष्यते । अतएव वृद्धविकलेन्द्रियविकर्म्मकृत्तस्करादीनां गोवृषन्यायेन पुनरुपादानम् । अत्र बहवः श्लोकाः स्पष्टार्थाः । अन्ये मेधातिथ्यनुसारेण विव्रियन्ते । अर्थसम्बन्धिन उत्तमर्णाधमर्णाद्याः उत्तमर्णोऽधमर्णवचनेन पराजीयमानस्तदानीमेव रोषाविष्टोऽधमर्णादर्थं प्रसह्यादातुं प्रवर्त्तेतेति तच्चिन्तानुवृत्तिरधमर्णस्य तदनुगुणकौटसाक्ष्यहेतुत्वेन सम्भाव्यते । उत्तमर्णो निर्धनेऽधमर्णे स्वसाक्षितया धनं प्राप्य स्वधनं तदर्पयिष्यतीति बुद्ध्या तदनुगुणवादी सम्भाव्यते । तथार्थः प्रयोजनं तत्सम्बन्धिनो वादिप्रतिवादिनोरन्यतरस्माद् येषां प्रयोजनं सिषाधयिषितन्तेऽप्युपकारगन्धाद् साक्ष्यार्हा इत्यादि । सर्व्वत्र कौटसाक्ष्यसम्भावनोन्नेया । दृष्टदोषा अन्यत्र कृतकौटसाक्ष्याः । व्याध्यार्त्ता वचनविसंवादापादकव्याधिपीडावन्तः । दूषिता अभिशस्ताः । नृपतेरसाक्षित्वमकृताभिप्रायेणातो न प्राक्तननारदोक्तिविरोधः । लिङ्गस्थोऽपत्यादिः । सङ्गेभ्यो विनिर्गतः परित्यक्तः पित्रादिगुरुजनसंसर्गात् इष्टानुपसेवनादस्याऽसत्यसम्भावना । आध्यधीनो बन्धकीकृतः तस्य तदायत्तावधवर्त्तित्वात् । वक्तव्यो निन्द्यावदन् विकर्म्मकृत् अधर्माभीरुः । वृद्धविकलेन्द्रिययोर्वाग्द्वैकल्यभावहेतुकेन्द्रियवैकल्येन भेदः । आर्त्तः शोकेन । नारदोऽपि "दासनैःकृतिकाश्रद्धेयवृद्धस्त्रीबालचाक्रिकाः । मत्तोन्मत्तप्रमत्तार्त्तकितवग्रामयाजकाः । महापथिकसामुद्रवणिक्प्रव्रजितातुराः । व्यङ्गैकश्रोत्रियाचारहीनक्लीवकुशीलवाः । नास्तिकव्रात्यदाराग्नित्यागिनोऽयाज्ययाजकाः । एकस्थालीसहायारिचरज्ञातिसनाभयः । प्राग्दृष्टदोषशैलूषविषजीव्यहितुण्डिकाः । गरदाग्निदकीनाशशूद्रापुत्रोपपातिनः । क्लान्तसाहसिकश्रान्तनिर्धूतान्त्यावसायिनः । भिन्नवृत्तासमावृत्तजडतैलिकमूलिकाः । भूताविष्टनृपद्विष्टवर्षनक्षत्रसूचकाः । अघशंस्यात्मविक्रेतृहीनाङ्गभगवृत्तयः । कुनखी श्यावदन् श्वित्री मित्रध्रुक्शठशौण्डिकाः । ऐन्द्रजालिकलुब्धोग्रश्रेणीगणविरोधिनः । वधकश्चित्रकृत् मद्यो पतितः कूटकारकः । कुहकः प्रत्यवसितस्तस्करो राजपुरुषः । मनुष्यपशुमांसास्थिमधुक्षीराम्बुसर्पिषाम् । विक्रेता ब्राह्मणश्चैव द्विजो वार्द्धुषिकश्च यः । च्युतः स्वधर्म्मात् कुलिकः सूचको हीनसेवकः । पिता विवदमानश्च भेदकृन्नवाधिपः । अन्येष्वादिषु तु वर्गेषु वाचिवेदुद्वेष्वप्रतामिवात् । तत्र तेभ्यो नं साक्ष्यं

स्यादुद्देशारः सर्व एव ते"। नैकृतिकः परापकारशीलः। चाक्रिकशौल्किकः। प्रमत्तः सदाऽनवहितः। महापथिको महापथगामी। सामुद्रवणिग्वहित्रवाही। एकः श्रोत्रियो द्वयोरननुमतः। एकः, श्रोत्रिय इति पृथग्वा प्रायशोक्तं च प्रागेव तत्। अपरार्केण तु युग्मकेति पठित्वा युग्मो द्वाविति व्याख्यातम्। एकस्थालीसहाय एकपाकभोजीति। सहायस्यतरसाहाय्यकारी, मिश्रचण्डेश्वरौ। मदनरत्नाकरस्तु एकस्थाल्योः सहाय इति विशेषणद्वयं पृथक्कृत्य एकस्थाली स्थाल्यधिकरणकः पाकोऽलक्ष्यते। स एको यस्य त्वेकस्थालीति व्याचख्यौ। समासान्तविधेरनित्यत्वादेकस्थालीत्यत्र "महाजनेति" पा॰ न कप्। अर्द्धपिप्पलीत्यादिवत् तुल्य इति च समादधे। चारिचरः भूतपूर्वः चरः। भूतपूर्वे चरट्। कल्पतरौ त्वसधर इति पठित्वा सधर इति व्याख्यातम्। ज्ञातयः सगोत्राः सनाभयो मातुलतत्सुतमातृष्वस्रियादयः। शैलूषः स्त्रीणां नर्तयिता। कुशीलवस्तु रङ्गोपजीवी नट इति भेदः। विषजीवी विषक्रयजीवीति मदनरत्ने। विषशस्त्रोपजीवीति रत्नाकरे। अहितुण्डिकः सर्पक्रीडोपजीवी व्यालग्राही। कीनाशः कर्षकः क्षुद्रो वा। कृपण इति तु मदनरत्ने। उपपातिन उपपातकीति कल्पतरुः। मदनरत्ने तूपपातक इति पठितम्। उप समीपं पातकं यस्येति विग्रहस्तु पातकयुक्त इति व्याख्यातम्। क्लान्तोऽतिश्रमः श्रान्तोऽनवरतकर्मकारीति मदनरत्ने। श्रमान्त इति पठित्वाऽयोग्यकर्मकारीति रत्नाकरे। निर्धूता बान्धवैस्त्यक्त इति मदनरत्ने। ग्रामराजकुलश्रेण्यादिभिर्निःसारित इति रत्नाकरे। मौलिकः लोकभयशून्य इति भवदेवः। मूलं विप्रलम्भस्तत्कारीति तु युक्तम्। अपरार्केण तु पौपिक इति पठित्वा पौपिकः पूपादिविक्रयीति व्याकृतम्। वर्षसूचको वर्षशकुनवेदी। नक्षत्रसूचको ज्यौतिषिकः। अघशंसी परकीयपापप्रकाशकः। हीनाङ्ग उचितपरिमाणान्यूनाङ्गः। व्यङ्गस्तु खञ्जकुण्ठ्यादिरिति भेदः। भगवृत्तिर्भार्यादास्यादिसम्भोगशुल्कोपजीवी यद्वा स्वभगमर्शनजीवीति मदनरत्नरत्नाकरयोः। कुहको दाम्भिकः। प्रत्यवसितः प्रव्रज्यादिच्युतः। कुलिको राज्ञा व्यवहारपरिच्छेदकतया [illegible]ः। अस्य च साक्षित्वकरणे निषेधो, विधिस्तु [illegible] इति कल्पतरुः। मदनरत्ने तु कुलं ग्रामादिगणस्तदधिकारी कुलिक इति व्याख्यातम्। सूचको राज्ञा परदोषान्वेषणपूर्वकं तन्निवेदने नियुक्तः। भेदको मित्रादिप्रीतिभङ्गकर्त्ता। श्रेण्यादिभिन्नत्यस्यायमर्थः। येषु श्रेण्यादिषु यस्यैकोऽपि द्वेष्यतां गतस्तामाप्तस्तदीयविवादे तच्छ्रेण्यादिनिविष्टाः सर्व एव न साक्षिणस्तस्य द्वेषादुद्देशारः सर्वेऽपि न इति तच्छ्रेण्यान्तर्गतैकद्वेष्यनुरोधकृतवैरनिर्यातनार्थमन्यथावादित्वसम्भवात्। अतएव नारदः "बालोऽज्ञानादसत्यात् स्त्री पापाभ्यासाच्च कूटकृत्। विब्रूयाद्बान्धवः स्नेहाद्वैरनिर्यातनादरिरिति"। कात्यायनः "तद्वृत्तिजीविनो ये च तत्सेवाहितकारिणः। तद्बन्धुसुहृदो भृत्या आप्तास्तु न साक्षिणः। मातृष्वसृसुताश्चैव पितृष्वसृसुतास्तथा। मातुलस्य सुताश्चैव सोदर्यसुतमातुलाः। एते सनाभयः प्रोक्ताः साक्ष्यन्तेषु न योजयेत्। कुल्याः सम्बन्धिनश्चैव श्यालो भगिनीपतिः। पिता बन्धुः पितृव्यश्च श्वशुरो गुरवस्तथा"। तथा बृहस्पतिः "मातुः पिता पितृव्यश्च भार्याभ्रातृमातुलौ। भ्राता सखा च जामाता सर्ववादेष्वसाक्षिणः। परस्त्रीपानसक्ताश्च कितवाः सर्वदूषकाः। उत्क्रान्ताः साहसिका नास्तिकाश्च न साक्षिणः" इति। अत्र मातृष्वस्रादिशब्दानां सम्बन्धिशब्दत्वादर्थिप्रत्यर्थिनोरन्यतरस्य एतादृशसम्बन्धिनो न साक्षिणः सम्बन्धिनि स्नेहादन्यत्र वैरसम्भवादिति ध्येयम्। याज्ञवल्क्ये "शुल्कगुल्माधिकृतौ दूतो वेष्टिताम्बराः स्त्रियोगुरुकुलवासिनः परिव्राजकवानप्रस्थनिर्ग्रन्थाः शिल्पिनः व्यालग्राहिणः" इति अन्येऽसाक्षिणः इति प्रकृतम्। शुल्काधिकृतः शुल्कग्रहणस्थानाधिकारी। गुल्मः स्वस्थाननिवेशितः पदातिसङ्घस्तदधिकृतः। वेष्टिताम्बराः उद्धतवेषोद्धव्याद्यभिभूता या इतरे प्रसिद्धा व्याख्यातराश्च। अनेन प्रपञ्चेन लोभादिकमसाक्षित्वनिमित्तमेव व्यक्तीकृतम्। यथाह मनुः "लोभान्मोहाद्भयात् क्रोधान्मैत्र्यात्कामात्तथैव च। अज्ञानाद्बालभावाच्च साक्षी वितथ उच्यते" इति।

**दुष्ठु** अव्य॰ दुर्+स्था—कु सुषामा॰ षत्वम्। १निन्दायाम् अमरः। २अविनीते त्रि॰ उणादिको॰ ततः उद्गात्रा॰ भावे अण्। दौष्ठव अविनये न॰।

**दुष्पतन** न॰ दुष्टं पतत्यनेन दुर्+पत—करणे ल्युट्। १अपशब्दे त्रिका॰। अपशब्दप्रयोगस्य दुरदृष्टजनकतया पतनहेतुत्वात् तथात्वम्। "नापभाषितवै न म्लेच्छितवै म्लेच्छो ह वा नाम यदपशब्दः" इत्यादिश्रुत्या हि अपशब्दप्रया-

तस्य निषिद्धत्वेन तत्प्रयोगस्य पापजनकत्वं सूचितम्। भावे ल्युट्। २दुःखेन पतने न०।

**दुष्पत्र** पु० दुःखकं पत्रमस्य प्रा०ब०। चोरनामगन्धद्रव्ये अमरः

**दुष्पद** त्रि० दुःखेन पद्यते दुर्+पद्–कर्मणि खल्। दुःखेन प्राप्ये प्राप्तुमशक्ये "श्रुतो लि चक्रेण रथ्या दुष्पदा वृणक्" ऋ० १।५३।८ 'दुष्पदा दुष्पदेन प्राप्तुमशक्येन चक्रेण" भा० तृतीयास्थाने छान्दस आच्।

**दुष्पराजय** त्रि० दुःखेन पराजीयतेऽसौ दुर्+परा+जि कर्मणि खल्। १जेतुमशक्ये दुःखेन जेतव्ये २धृतराष्ट्रपुत्रभेदे पु० "उग्रश्रवा उग्रसेनः सेनानीर्दुष्पराजयः" भा०आ० ११७अ० तत्पुत्रोक्तौ।

**दुष्परिग्रह** त्रि० दुःखेन परिगृह्यतेऽसौ दुर्+परि+ग्रह–कर्मणि खल्। १परिग्रहीतुमशक्ये "लोकाधाराः श्रियो राज्ञां दुरापा दुष्परिग्रहाः" कामन्द०। प्रा०स०। २निन्द्यभार्य्यायाञ्च। दुःस्थितः परिग्रहो भार्य्या यस्य प्रा०ब०। ३दुष्टभार्य्यके पु०

**दुष्परिहन्तु** त्रि० दुर्+परि+हन–खलर्थे तुन्। १दुःखेन नाशयितव्ये २दुष्परिहार्य्ये च "यच्छता नो दुष्परिहन्तु शर्म्म" ऋ०२।२३।६ "दुष्परिहन्तु हन्तुमशक्यम्" भा०

**दुष्पर्श** त्रि० दुर्+स्पृश–कर्मणि खल् वा विसर्गलोपः। १दुःखेन स्पर्शनीये स्प्रष्टुमशक्ये २दुरालभायां स्त्री अमरः तदर्थे पु० भरतः।

**दुष्पान** त्रि० दुःखेन पीयतेऽसौ "आतो युच्" पा० खलर्थे कर्मणि युच्। दुःखेन पेये १पातुमशक्ये। भावे युच्। २दुःखेन पाने न०।

**दुष्पुरुष** पु० प्रा०स०। निन्द्ये पुरुषे ततः ब्राह्मणा० स्वार्थे भावे कर्मणि वा ष्यञ्। दौष्पुरुष्य तदर्थे पु० तद्भावे तत्कर्मणि तु न०।

**दुष्पूर** त्रि० दुर्+पूरि–कर्मणि खल्। १पूरयितुमशक्ये दुःखेन पूरणीये। "काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः" गीता २अनिवार्य्ये च "कामरूपेण कौन्तेय! दुष्पूरेणानलेन च" गीता

**दुष्प्रकाश** त्रि० दुष्टः प्रकाशः प्रा०ब०। विरोधिलक्षणया अन्धकारे "पापस्य लोको निरयो दुष्प्रकाशो नित्यं दुःखशोकभूयिष्ठमेव" भा०शा० ७३अ०।

**दुष्प्रकृति** त्रि० दुःस्था प्रकृतिरस्य प्रा०ब०। १दुष्टस्वभावे "त्वं तु दुष्प्रकृतिर्मूढो महायुद्धेष्वकोविदः" भा०क० ४०अ०। प्रा०स०। २निन्द्यायां प्रकृतौ निन्द्ये स्वभावे स्त्री

**दुष्प्रजस्** त्रि० दुःस्था प्रजाऽस्य असिच् समा०। १निन्द्यप्रजायुक्ते। प्रा०स०नासिच्। दुष्प्रजा २निन्द्यप्रजायां स्त्री

**दुष्प्रज्ञान** त्रि० दुःखेन प्रज्ञायतेऽसौ दुर्+प्र+ज्ञा–खलर्थे कर्मणि युच्। १ज्ञातुमशक्ये। दुष्टं प्रज्ञानं प्रा०स०। २निन्द्ये ज्ञाने न० "दुष्प्रज्ञानेन निरयाः बहवः समुदाहृताः" भा०शा० १२७अ०।

**दुष्प्रधर्ष** त्रि० दुष्करः प्रधर्षोऽस्य प्रा०ब०। १धर्षयितुमशक्ये दुःखेन धर्षणीये "मा दुष्प्रधर्षा मनसाऽन्यहिंस्रैः" रघुः। २दुरालभायां ३खर्जूर्याञ्च स्त्री राजनि०। ४धृतराष्ट्रपुत्रभेदे पु० "दुर्मुखो दुष्प्रधर्षश्च विवित्सुर्विकटः समः" भा०आ० ६४अ०। तत्र दुष्प्रहर्षश्चेति पाठान्तरम् भा०आ० ६४अ० तत्पुत्रोक्तौ तथोक्तेः

**दुष्प्रधर्षण** त्रि० दुर्+प्र+धृष–भाषायां युच्। १दुःखेन धर्षणीये धर्षयितुमशक्ये। "विन्दानुविन्दौ दुर्धर्षः सुबाहुर्दुष्प्रधर्षणः" भा०आ० ६७ उक्ते २धृतराष्ट्रपुत्रभेदे पु० ३वार्त्ताक्याम् स्त्री अमरः गौरा० ङीष्।

**दुष्प्रधर्षिणी** स्त्री दुष्प्रधर्षोऽस्त्यस्याः इनि ङीप्। १कण्टकार्य्यां राजनि० २वृहत्याम् भावप्र०।

**दुष्प्रवृत्ति** स्त्री प्रा०स०। दुष्टायां प्रवृत्तौ वार्त्तायां "तेषां शूर्पणखैवैका दुष्प्रवृत्तिहराऽभवत्" रघुः।

**दुष्प्रवेश** त्रि० दुष्करः प्रवेशोऽत्र प्रा०ब०। १दुःखेन प्रवेश्ये प्रवेष्टुमशक्ये "महर्द्धिगणसम्बाधं ब्राह्म्या लक्ष्म्या समन्वितम्। दुष्प्रवेशं महाराज! नरैर्धर्मबहिष्कृतैः" भा०व० १४५अ०। २कन्थारीवृक्षे स्त्री राजनि०।

**दुष्प्रहर्ष** त्रि० दुष्करः प्रहर्षोऽस्य प्रा०ब०। १दुष्करप्रहर्षयुक्ते २धृतराष्ट्रपुत्रभेदे पु० "दुर्मदो दुष्प्रहर्षश्च विवित्सुर्विकटः समः" भा०आ० ६७अ०। तत्पुत्रोक्तौ

**दुष्म(ष्य)न्त** पु० १पौरवे भरतपितरि राजभेदे "उपदानवी सुतान् लेभे चतुरस्त्वैलिकात्मजान्। दुष्मन्तमथ सुष्मन्तं प्रवीरमनघं तथा। दुष्मन्तस्य तु दायादो भरतो नाम वीर्य्यवान्। स सर्वदमनो नाम नागायुतबलो महान्। चक्रवर्त्ती सुतो जज्ञे दुष्मन्तस्य महात्मनः। शकुन्तलायां भरतो यस्य नाम्ना स्म भारताः। दुष्मन्तं प्रति राजानं वागुवाचाशरीरिणी। माता भस्त्रा पितुः पुत्रो येन जातः स एव सः। भरस्व पुत्रं दुष्मन्त! माऽवमंस्थाः शकुन्तलाम्। रेतोधाः पुत्र उन्नयति नरदेव! यमक्षयात्। त्वञ्चास्य धाता गर्भस्य सत्यमाह शकुन्तला" हरिवं० ३२अ०। अस्य शकुन्तलापरिवेदनकथा शकुन्तलाशब्दे दृश्या

तुर्वसुवंश्यमरुत्तकन्यायां सम्मतायां संवर्त्तैः जाते नृपभेदे तत्कथा हरिवं० ३२अ० । तुर्वसुवंशवर्णने यथा "आविक्षितो राजा मरुत्तः कथितस्तव । अनपत्योऽभवद्राजा यज्वा विपुलदक्षिणः । दुहिता सम्मता नाम तस्यासीत् पृथिवीपतेः ॥ दक्षिणार्थं तु सा दत्ता संवर्त्ताय महात्मने । दुष्मन्तं पौरवञ्चापि लेभे पुत्रमकल्मषम् । एवं ययातेः शापेन जरासंक्रमणे तदा । पौरवं तुर्वसोर्वंशः प्रविवेश नृपोत्तम ॥ दुष्मन्तस्य तु दायादः करुत्थामः प्रजेश्वरः" । तस्यापत्यम् इञ् दौष्मन्ति भरते करुत्थामे च नृपभेदे

**दु(दुः)स्थ** त्रि० दुर्+स्था—क वा विसर्गलोपः । दुःखेन स्थिते "कल्पान्तदुःस्था वसुधा तथोहे" भट्टिः १कुकुटे २कुक्कुरे च पुंस्त्री शब्दार्थचि० स्त्रियां जातित्वात् ङीष् ।

**दु(दुः)स्पृष्ट** न० दुष्टं स्पृष्टम् प्रा०स० वा विसर्गलोपः । जिह्वाग्रादिना वर्णोच्चारणस्थानस्य ईषत्स्पर्शरूपे आभ्यन्तरे वर्णोच्चारणप्रयत्ने तदस्यास्ति कारणत्वेन अच् । २लकारोच्चार्यवर्णे च "अचोऽस्पृष्टा यणस्त्वीषत् नेमस्पृष्टाः शलस्तथा" "दुस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव च" पाणिनिशिक्षा । लृकारस्य लकारादित्वेन दुस्पृष्टत्वमिति आकरे स्थितम् । [अदुहत् । दुदोह दुहितः ।

**दुह** बधे भ्वा०पर०सक०सेट् । दोहति दरित् अदोहीत्

**दुह** दोहने अन्तःस्थितद्रवद्रव्यस्याकर्षणेन बहिर्निःसारणे उभ०अदा०द्विक०अनिट् । दोग्धि दुग्धे दुह्यात् अधोक् अदुग्ध । अधुक्षत् अदुग्ध अधुक्षन्त अधुक्षाक्षि अदुह्महि दुदोह । दुदोहिथ दुदुहिव दुदुहे । दुह्यात् धोक्ष्यति ते । दोग्धव्यं दुह्यं दोह्यम् । दोग्धा दोहनं दुग्धम् । दोग्धुम् दुग्ध्वा संदुह्य । "यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे । भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम्" कुमा० "यः पयो दोग्धि पाषाणम्" "पयोघटोध्नीरपि गा दुहन्ति" भट्टिः एककर्मविवक्षायाम् अस्यैककर्मकत्वमपि "दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्" मनुः "दुग्ध्वा पयः पत्रपुटे मदीयम्" रघुः । निःसारणमात्रे च "दुग्धेऽस्मै सर्वं कामं यो वाचो दोहः" छा०उ० "न कर्मफलमाप्नोति योऽधर्मं दोग्धुमिच्छति" भा०व० ११६५श्लो० "यत्र धर्मदुघा भूमिः सर्वकामदुघा सती । दोग्धि स्माभीप्सितानर्थान् प्रजानामस्य सर्वदा" भाग० ४।१६।७ दुग्धवति । अस्य गौणकर्मणि लकारादि "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः" इत्युक्तेः । "तेषु तेषु तु पात्रेषु दुह्यमाना वसुन्धरा" हरिवं० ८१ श्लो० अस्य कर्मकर्त्तरि गौणकर्मणः कर्त्तृत्वविवक्षायाम् केवलं तङ् न यक् । गौःपयो दुग्धे । वा चिण् । अदोहि अधुक्षत अदुग्ध सि०कौ०

**दुहादि** पु० गौणे कर्मणि लकारविधानार्थे धातुसमूहे स च "दुह्याच्पच्दण्ड्रुधिप्रच्छि चिञ्ब्रूशासुजिमथ्मुषाम् । कर्मयुक् स्यादकथितं तथा स्यात् नीहृकृष्वहाम्" व्या० कारिकायां पठितः दुहप्रभृतिः मुषपर्यन्तः धातुसंघः । अस्य कस्यापि कारकसंज्ञाऽप्राप्तौ प्रधानकर्मोपयोगिनः कर्मसंज्ञा "दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ । ब्रुविशासि गुणेन च यत् सचते तदकीर्त्तितमाचरितं कविना" महाभाष्यकृतोक्तेः । [उदा०।

**दुहि** पु० दुह—धातुनिर्देशे इक् । दुहधातौ दुहादिशब्दे

**दुहितुःपति** पु० ६त० षष्ठ्या वा अलुक् स० । जामातरि पक्षे लुक् । दुहितृपतिरप्यत्र ।

**दुहितृ** स्त्री दुह—दह वा तृच् । "नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ" उणा० नि० । स्वसृन्यस्त्रियां स्त्रीपन्नतौ ऋदन्तत्वेऽपि स्वस्रादित्वात् न ङीप् । तृजन्तत्वाभावात् सर्वनामस्थाने परे न वृद्धिः दुहितरौ दुहितरः इत्यादि प्रियादिषु पाठात् अस्मिन् शब्दे परे पूर्वस्थितस्य उक्तपुंस्कस्त्रीलिङ्गस्य विशेषणशब्दस्य न पुंवत् जातादुहितृकः । "मातुर्दुहितरः शेषमृणात् ताभ्य ऋतेऽन्वयः" याज्ञ० । "मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्" मनुः । कन्याशब्देऽस्याः तद्दानपात्रफलादिकमधिकमुच्यते ।

"कृत्वा परीक्षां कान्तस्य वृणोति कामिनी वरम् । वराय गुणहीनाय वृद्धाय ज्ञानिने तथा । दरिद्राय च मूर्खाय रोगिणे कुत्सिताय च । अत्यन्तकोपयुक्ताय चात्यन्तदुर्मुखाय च । जडाय चैव मूर्खाय क्लीवतुल्याय पापिने । ब्रह्महत्यां लभेत् सोऽपि यः स्वकन्यां ददाति च । शान्ताय गुणिने चैव यूने च विदुषेऽपि च । वैष्णवाय सुतां दत्त्वा दशवाजीफलं लभेत्" । कन्याविक्रये दोषो यथा "यः कन्यापालनं कृत्वा करोति विक्रयं यदि । विपत्तौ धनलोभेन कुम्भीपाकं स गच्छति । कन्यामूत्रपुरीषञ्च तत्र भक्षति पातकी । कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्दश । मृतश्च व्याधयोनौ च स लभेज्जन्म निश्चितम् । विक्रीणीत

दूणाशसेति” काव्या०श्री०२२। ८।७६। “उसरस्तृतीयः सम्प्रदायः द्विनामा भवति सङ्कृच्छिरस्य दूणाशं दूणाशश्च द्वितीयं नाम” संध० । तस्य च तथात्वविधायकत्वात् अर्थ० अपि तथात्वम् ।

दूत त्रि० दु-गतौ “दुतनिभ्यां दीर्घश्च” उणा०त कित् दीर्घश्च दू—परितापे कर्त्तरि क्त वा दीर्घान्तस्य न नत्वम् “दुग्वोदीर्घश्च” पा० सूत्रेण दुनोतेरेव नत्वदीर्घयोर्विधानात् । १सन्देशहरे अमरः । २उपतप्ते च

“चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः” माघः तत्र साधारणदूतलक्षणं तद्भेदाश्च सा०द० उक्ता यथा निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः । कार्य्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः” तत्र कार्यप्रेष्यो दूत इति लक्षणम् । तत्र “उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् । सुश्लिष्टं कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः” उभयोरिति येन प्रेषितो यदन्तिकं प्रेषितश्च । “मितार्थभाषी कार्यस्य सिद्धिकारी मितार्थकः” ।

नृपतिदूतलक्षणं युक्तिकल्पतराबुक्तं यथा

“परेङ्गितज्ञः परयाम्वाङ्ग्याप्यर्थस्यापि तत्त्ववित् । षट्प्रोत्पन्नमतिर्धीरो दूतः स्यात् पृथिवीपतेः । दूतञ्चैव प्रकुर्वीत सर्वशास्त्रविशारदम् । इङ्गिताकारचेष्टाज्ञं शुचिं दक्षं कुलोद्गतम् । अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् । वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते । दूत एव हि सन्धत्ते भिनत्त्येव हि संहतान् । निसृष्टार्थो१ मितार्थश्च२ तथा शासनहारकः३ । दूतास्त्रयोऽमात्यगुणैः समैः पादार्द्धवर्जितैः । निसृष्टार्थं कार्यवशात् शासनं तु करोति यः१ । मितार्थः२ कार्यमात्रोक्तौ स कुर्य्यादुत्तरोत्तरम् । यथोक्तवादी सन्देशहारको लेखहारकः३ । तत्र दूतो व्रजन्नेव चिन्तयेदुत्तरोत्तरम् । वार्त्ताविशेषं भूपाय कथयेत् वाक्यवेश्मनि । दूतो हि न लिखेत् किञ्चित् निर्णेता वा विनिर्णयम् । पृच्छ्यमानोऽपि न ब्रूयात् स्वामिनः क्वापि वैशसम्” कामन्द० शास्त्रे च राजदूततद्भेदचरलक्षणं चोक्तं यथा “कृतमन्त्रस्तु मन्त्रज्ञो मन्त्रिणां मन्त्रसम्मतम् । यातव्यायं प्रहिणुयाद्दूतं दूत्याभिमानिनम् । प्रगल्भः स्मृतिमान् वाग्मी शास्त्रे शस्त्रे च निष्ठितः । अभ्यस्तकर्मा नृपतेर्दूतो भवितुमर्हति । निसृष्टार्थो१ मितार्थश्च२ तथा शासनहारकः३ । सामर्थ्यात्पादतो हीनो दूतस्तु त्रिविधः स्मृतः । स भर्तुः शासनात् गच्छेत् सम्यगुत्तरोत्तरम् । स्वराष्ट्रपरराष्ट्राणामिति चेति च चिन्तयन् । अन्तःपालांस्तु कुर्वीत मित्राण्याटविकांस्तथा । अन्यस्थलानि मार्गांश्च विद्यात् स्वबलसिद्धये । नाविज्ञातः पुरं शत्रोः प्रविशेच्च न संसदि । कालमीक्षेत कार्यार्थमनुज्ञातश्च निष्पतेत् । सारवत्ताञ्च राष्ट्रस्य दुर्गं तद्गुप्तिमेव च । छिद्रं शत्रोर्विजानीयात् कोषमित्रबलानि च । उद्यतेष्वपि शस्त्रेषु यथोक्तं शासनं वदेत् । रागापरागौ जानीयात् प्रकृतीनाञ्च भर्त्तरि । भृत्यपक्षस्य चापायं कुर्य्यादनतिलक्षितः । पृच्छ्यमानोऽपि न ब्रूयात् स्वस्वामिप्रकृतिच्युतिम् । ब्रूयात् प्रश्रितया वाचा सर्वं वेद भवानिति । फलेन साम्ना कृच्छ्रेण कर्म्मणा च महीयसा । कुर्य्याच्चतुर्विधं स्तोत्रं पक्षयोरुभयोरपि । विद्याशिल्पोपदेशेन संश्लिष्योभयवेतनैः । भृत्यपक्षञ्च जानीयात्तद्वत्तस्य विचेष्टितम् । तीर्थाश्रमाश्रयस्थाने शास्त्रविज्ञानहेतुना । तपस्विव्यञ्जनोपेतैः स्वचरैः सह संवसेत् । सन्तापं कुलमैश्वर्यं त्यागसत्यानसौष्ठवम् । अनुद्धतां भद्रताञ्च भर्त्तुर्भेद्येषु दर्शयेत् । सहेतानिष्टवचनं कामक्रोधञ्च वर्जयेत् । नान्यैः शयीत, भावं स्वं रक्षेद्दिद्यात्परस्य च । काले व्रजति मेधावी न खिद्येतात्मसिद्धये । निरुध्यमानस्तु बुध्येत कालं नाना च लोभनैः । एतस्माद्धेतुतस्तु गच्छतस्तु न तत्र पृथिवीपतेः । पश्यति व्यसनं किञ्चित्स्वयं वा कर्त्तुमिच्छति । स्वान्तःप्रकोपमथ वा विनेतुं नीतिवित्तमः । सख्यादेः संग्रहं कर्त्तुं स्वदुर्गे दुर्गसत्क्रियाम् । स्वपक्षाभ्युदयाकाङ्क्षी देशकालावुदीक्षते । तत्र यात्रास्वयं चित्तमाश्वास्यैव समीक्षते । यात्राकालक्षयार्थी वा तत्र चार्यं विलम्बते । काले विक्षिप्यमाणे तु तर्कयेदिति पण्डितः । कार्य्यकालविपत्तिञ्च व्यक्तां ज्ञात्वा विनिष्पतेत् । तिष्ठन् वार्त्ताविशेषार्थान् भर्त्तुः सर्वान्निवेदयेत् । रिपोः शक्तुपरिच्छेदः सुहृद्बन्धुविभेदनम् । दुर्गकोषबलज्ञानं भृत्यपक्षोपसंग्रहः । राष्ट्रात् व्यपेतपालानामात्मसात्करणं तथा । युद्धापसारभूमीनां दूतकर्मेति कथ्यते । दूतेनैव नरेन्द्रस्तु कुर्वीतारिविकर्षणम् । स्वपक्षे च विजानीयात् परदूतविचेष्टितम् । तर्केङ्गितज्ञः स्मृतिमान् लघुलङ्घपरिक्रमः । क्रियायासहश्चो दक्षश्चरः स्यात् प्रतिपत्तिमान् । तपस्विलिङ्गिनो धूर्त्ताः पण्यशिल्पोपजीविकाः । चराचरेषु चरिताः पिबन्तो जगतां मतम् । निर्गच्छेयुर्विशेयुश्च सर्ववार्त्ताविदोऽन्वहम् । चराः सकाशात् पतेस्तद्दूर-

तरं हि ते। स्वल्पं स्वल्पप्रचारेण पश्येद्वै विनिचेष्टितम्। स्वपन्नपि च जागर्त्ति चारचक्षुर्महीपतिः। विवस्वानिव तेजोभिर्नभस्वानिव चेष्टितैः। राजा चरैर्जगत् सर्वं व्याप्नुयाल्लोकसम्मतैः। चारचक्षुर्नरेन्द्रः स्यात्सम्पतेत्तेन भूयसा। अनेनासम्पतन्मोह्यात्पतत्यन्धः समेऽपि हि। सर्वसम्पत्समुदयं सर्वाश्चाविचेष्टितम्। चारेण द्विषतां विद्यात्तद्देशप्रार्थनानि च। प्रकाशश्चाप्रकाशश्च चरस्तु द्विविधः स्मृतः। अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूत उच्यते। चारेण प्रचरेद्राजा स्थलेष्वर्च्चिगिराध्वरे। दूते सन्धानमायाते चरचर्य्या प्रतिष्ठिता। तीक्ष्णः प्रव्रजितश्चैव सत्री वनग एव च। एते ज्ञेयास्तु सञ्चाराः सर्वे नान्योन्यवेदिनः। संस्थानवन्तः संस्थाश्च कार्य्याः कार्य्यप्रसिद्धये। तिष्ठेयुः पार्श्वे सञ्चाराः परिचर्य्योपयायिनः। बालः स्थविरो लिङ्गी भिक्षुकोऽध्यापकस्तथा। संस्थाः स्युश्चारसंस्थित्यै दत्तदायाः शुभाशयाः। सर्वत्रैव तु सञ्चारास्तिष्ठेयुश्चित्तवेदिनः। स्वपक्षे परपक्षे च यो हि वेद चिकीर्षितम्। जाग्रदपि सुषुप्तोऽसौ न भूपः प्रतिबुध्यते। कारणाकारणक्रुद्धान् बुध्येत स्वपरिग्रहे। पापानकारणक्रुद्धांस्तूष्णीं दण्डेन साधयेत्। ये तु कारणतः क्रुद्धास्तान् वशीकृत्य संवसेत्। शमयेद्दानमानाभ्यां छिद्रञ्च परिपूरयेत्। अणुनापि विजायते छिद्रेण बलवत्तरम्। निःशेषं मज्जयेद्राष्ट्रं पोतपात्रमिवोदकम्। जडमूकान्धबधिरषण्ढाः षड्ङ्गकास्तथा। किराता वामनाः कुब्जास्तद्विधा ये च कारकाः। भिक्षुकाश्चारणा दास्यो नानाकार्य्यकलाविदः। अन्तःपुरगतां वार्त्तामाहरेयुरलक्षिताः। छत्रव्यजनभृङ्गारयानवाहनधारिणः। सम्भाषान्ते बहिर्यान्तीं विदुरन्ये च तद्विधाः। सूदव्यञ्जनकर्त्तारस्तल्पका व्ययकास्तथा। प्रसाधका भोजकाश्च गात्रसंवाहका अपि। जलताम्बूलकुसुमगन्धभूषणदायकाः। कर्त्तव्याश्च सदा ह्येते ये चान्येऽभ्यासवर्त्तिनः। स्वभावाभिमुखैर्लेखैराकारैरिङ्गितैरपि। ससञ्चरेयुरव्यग्राश्चराश्चर्य्याः परस्परम्। समापिबन्तो जगतां मतानि जलानि भूमेरिव सूर्य्यपादाः। अनेकशिल्पाध्ययनप्रवीणाश्चराश्चरेयुर्बहुलिङ्गरूपाः। येन प्रकारेण परानुमेयात् परापरस्य स्वभिविहेतोः। तथात्मनि स्वस्थमतिस्तु तज्ज्ञैर्विबुध्यमानं परतो हि विद्यात्"। २प्रेष्यमात्रे त्रि०। ततः भावे कर्मणि च "दूतवणिग्भ्याञ्च" पा० यत्। दूत्य तद्भावे तत्कर्मणि च "दूत्यसद्भावकर्म्मणोः" अमरः। कामन्द० वाक्ये उदा० स्वार्थे ष्यञ् दौत्य तत्रार्थे "न प्रयाति च दौत्येन" हितो० "द्वितां क्षमेद्दौत्यपथः क्षितीक्षतः" नैष०। शिक्षुर्णिष्टपरिभाषया दूतीयस्मादपि यत् ष्यञ् च। दूत्य दौत्य दूतीनां कर्म्मणि भावे च। स्वार्थे क। दूतक तत्रार्थे स्त्रियां कापि अत इत्वम् दूतिका दूत्याम्। भावे क्त। ४उपतापे न०। [पुष्पत्रां शब्दच०।

**दूतघ्नी** स्त्री दूतं खेदं हन्ति हन—टक् ङीप्। कदम्ब

**दूति** स्त्री दु—बा० ति दीर्घश्च उज्ज्वलद०। प्रेषणायां स्त्रियां "तां कामिनो दूतिमुदाहरन्ति" वर्णविवेकः वा ङीप् दूती तत्रार्थे "उत्तिष्ठ दूति! यामो यामो यातस्तथापि नायातः" सा०द० "रतिदूतिपदेषु कोकिलाम्" कुमा० "प्रतिकृतिरचनाभ्यो दूतिसंदर्शिताभ्यः" "तेन दूतिविदितं निषेदुषा" रघुः दूतीभेदलक्षणे सा०द०उक्तं "दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी। बाला प्रव्रजिता कारुः शिल्पिन्याद्याः स्वयं तथा। कला कौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः। माधुर्य्यं नर्म्मविज्ञानं वाग्मिता चेति तद्गुणाः। एता अपि यथौचित्यादुत्तमाधममध्यमाः"

**दून** पु० दु—उपतापे क्त "दुग्वोर्दीर्घश्च" पा०तस्य नः दीर्घश्च। मुग्ध० दू—खेदे औदित्वात् तस्य नः। १अध्वश्रान्ते २उपतप्ते ३दुःखिते च "पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंस!" नैष०।

**दू(र्)** स्त्री दैप् शुद्धौ बा० क्कु। प्राणरूपे देवताभेदे "सा वा एषा देवता दूर्नाम दूरं ह्यस्या मृत्युर्दूरं ह वा अस्मान्मृत्युर्भवति य एवं वेद" शत०ब्रा० १४।४।१० "उपासक शरीरस्था प्राणरूपा देवता दूर्नाम दूरित्येवं ख्याताऽतः शुद्धा" भा० अत्र शुद्धेति विशेषणात् दैपधातो रूपमिति सूचितम्। ब्राह्मणे तु दूरसम्बन्धात् तन्निरुक्तिरुक्ता तथा च दूरं करोति मृत्युमुपासकस्य दूर+तत्करोत्यर्थे णिच् बा० न दशादेशः क्विप् णिलोपः रान्तोऽयमिति तु युक्तम्।

**दूर** त्रि० दुर्+इण—"दुरीणो लोपश्च" उणा० रक् धातोरिकारलोपे रेफे परे पूर्वाणो दीर्घः। १विप्रकृष्टे महसान्तरेण स्थिते दैशिकपरत्वयुक्ते अमरः। "दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते" भाषा० "दूरत्वमन्तिकत्वञ्च दैशिकं परत्वमपरत्वं बोध्यम् तदुभयोरसाधारणं बीजं दिगेव" सि०मु०। अतिदूरत्वञ्च प्रत्यक्षप्रतिबन्धकं यथाह

"अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्। सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्च" सा॰का॰ "अनुपलब्धिरिति वक्ष्यमाणं विभज्य ते तत्न्यायेनानुपलब्धनीयम् यथा उत्पतन् वियति पतत्त्री अतिदूरतया सन्नपि प्रत्यक्षेण नोपलभ्यते" त॰कौ॰। "त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे" शकु॰ "न खलु दूरगतोऽप्यतिवर्त्तते महमसाविति बन्धुजनोदितैः" माघः। भावप्राधान्यात् २दूरत्वे च "दूरान्तिकार्थेभ्यो द्वितीया च" पा॰ असत्त्ववचने प्रातिपदिकार्थे एभ्यो द्वितीया स्यात् पञ्चमीतृतीये स्तः" सि॰कौ॰ "ग्रामस्य दूरं दूरात् दूरेण वा। असत्त्ववचने इत्यनुवृत्तेर्नेह दूरः पन्थाः" सि॰कौ॰ "रामात्कुरङ्गस्य यो दूरम्" सुग्धबो॰ "नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः" सा॰द॰ "मा तस्य कर्मनिर्वृत्तैः दूरं पश्चात् कृता फलैः" रघुः "दूरादपि क्रतुषु यज्वभिरिज्यते यः" माघः "दूरेण ह्यवरं कर्म बुद्धियोगात् धनञ्जय!" गीता "स्तुतिभ्योऽच्युत! रिच्यन्ते दूरेण चरितानि ते" रघुः एतच्छब्दयोगे पञ्चमी षष्ठी च। "दूरं ग्रामस्य ग्रामाद्वा" सि॰कौ॰ अतिशायने इष्ठन् दवादेशे दविष्ठ ईयसुन् दवीयस् अतिशयेन दूरस्थिते त्रि॰ ईयसुनि स्त्रियां ङीप्। "तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते" माघः। दूरं करोति दूर+णिच् वादेशः दवयति। "दवयदतिरयेण प्राग्नमुर्वीविभागम्" भट्टिः।

**दूरङ्गम** त्रि॰ दूरं गच्छति गम–बा॰ वेदे खच् मुम् च। दूरगामिनि "दूरङ्गमं ज्योतिषां ज्योतिरेकम्" यजु॰३४।१। लोके तु ड दूरगः ... ।

**दूरत्व** न॰ दूरस्य भावः त्व। दैशिके परत्वे तच्च भ्रमविशेषे कारणम् यथोक्तं "दोषोऽप्रमाया जनकं प्रमायास्तु गुणो भवेत्। पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः" भाषा॰ "कचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः" सि॰मु॰।

**दूरदर्शन** पुंस्त्री॰ दूरात् पश्यति दृश–ल्यु। १गृध्रे राजनि॰ जातित्वात् स्त्रियां ङीष्। २पण्डिते पु॰ दृश–भावे ल्युट्। ३दूरतोवीक्षणे न॰। दूरतो दृश्यतेऽनेन दृश–करणे ल्युट्। ४दूरवीक्षणे यन्त्रभेदे (दूरवीन)

**दूरदर्शिन्** त्रि॰ दूरात् पश्यति कार्योत्पत्तेः प्राक् पश्यति जानाति वा दृश–णिनि। १दूरदर्शके २पण्डिते पु॰ अमरः ३गृध्रे पुंस्त्री॰ त्रिका॰ स्त्रियां ङीप्।

**दूरदृश्** त्रि॰ दूरात् पश्यति दृश–क्विन्। १दूरदर्शिनि २पण्डिते पु॰ हेमच॰ ३गृध्रे पु॰ हेमच॰। क्विन्नन्तत्वात् कवि पदान्ते च कुः।

**दूरमूल** पु॰ दूरपर्य्यन्तं मूलमस्य। मुञ्जतृणे (मुँज)। राजनि॰

**दूरवेधिन्** पु॰ दूरात् वेधो लक्ष्यस्य साध्यतया इनि। दूरात् लक्ष्यभेदके

**दूरापात** त्रि॰ दूरमापतति आ+पत–कर्त्तरि अच् बा॰ ण। दूरपातिनि अस्त्रे णिनि दूरापातिन् तत्रार्थे हेमच॰।

**दूरूढा** स्त्री दुर्+रुह–क्त रेफे परे पूर्वाणो दीर्घः। दुष्टतया रूढे जाते क्षुद्ररोगशब्दे २१८ पृ॰ दृश्यम्।

**दूरेअमित्र** पु॰ दूरे अमित्रः शत्रुर्यस्य वेदे सप्तम्याः अलुक् प्रकृतिभावः। एकोनपञ्चाशन्मरुन्मध्ये मरुद्भेदे। ते च यजु॰ १७अ॰।१ मन्त्रादौ ८॰ मन्त्रान्ते शुक्रज्योतिश्चेत्यादयो दर्शिताः। "अग्निमित्रश्च दूरेअमित्रश्च गणः" इत्य॰

**दूरेत्य** त्रि॰ दूरे भवः त्यप्। दूरभवे

**दूरेपाक** त्रि॰ दूरे पचति पच–ण न्यङ्क्वा॰ कुत्वम् सप्तम्या अलुक् स॰। दूरे पाचके स्त्रियां टाप्। तत्रैव गणे स्त्रीत्वेनापि निर्देशात् लिङ्गविशिष्टपरिभाषाया अनित्यत्वं ज्ञापितम्। [पाचके।

**दूरेपाकु** त्रि॰ पच–उण् न्यङ्क्वा॰ कुत्वम् अलुक् स॰। दूरे-

**दूरेरितेक्षण** त्रि॰ दूरे ईरितमीक्षणं येन। दूरपर्य्यन्तप्रेरितदर्शने केकरे (टेरा) शब्दमाला।

**दूरोह** पु॰ दुःखेन रुह्यतेऽसौ दुर्+रुह–कर्मणि खल् रेफे परे पूर्वाणो दीर्घः। दुःखेन रोहणीये रोढुमशक्ये आदित्ये लोके तस्य निष्कामज्योतिष्टोमादियज्ञप्रयासजातज्ञानेन साध्यरोहणत्वात् दूरोहत्वम्। "असौ वै दूरोहो योऽसौ तपतीति" ऐत॰४।२॰ श्रुतेस्तस्य तथात्वम्। २दुरारोहमात्रे त्रि॰।

**दूरोहण** त्रि॰ दुःखकरमारोहणमस्य प्रा॰ब॰। आदित्ये दूरोहशब्दे तस्य तथात्वं दृश्यम् २छन्दोभेदे न॰। "असौ वा आदित्यो दूरोहणं छन्दः" इति श्रुतिः। "दूरोहणं छन्दः" यजु॰१०।५ छान्दसं क्लीबत्वम्। ३दुरारोहणीये त्रि॰ दुःखेन रोहणं वा। ४दुःसाध्ये रोहणे ५तच्छन्दस्कमन्त्रसाध्याभ्यासभेदे च यथोक्तं आश्व॰श्रौतसूत्रे

"हंसः शुचिषदिति पच्छोऽर्धर्चशस्त्रिपदा चतुर्थं मनयानमुक्त्वा प्रणुत्यावस्येत्। पुनस्त्रिपदाऽर्धर्चशः पच्छश्च सप्तमम्" ८।२।१४ "एतावच्चमित्थं शंसेत्। प्रथमं पच्छः द्वितीयमर्धर्चशः। तृतीयं त्रिभिः पादैरवसाय उत्तमेन पादेन प्रणुत्य चतुर्थमनयानमुक्त्वा प्रणवेनाव स्येत्। एतदारोहणम्। अथावरोहणम्। पुनस्त्रि-

२४भयाननायाः "कृष्णा भयानना दंष्ट्रोद्दंष्ट्रोपास्थिविभूषणा । याम्ये स्यात् शिखरं शूलं घर्घरं लेलिहान्यतः"।
२५सर्वज्ञायाः "त्रिशूलपट्टभृद्वामे मुण्डं डमरुकं शयम् । त्रिभागा भाजनं द्वाभ्यां सर्वज्ञा प्रेतगाऽसिता" ।
२६तरलायाः "जानुक्षिप्तौ करौ कृत्वा छद्यन्ती तरलायते । शूलडमरुहस्ता च गोधास्था तरलाऽसिता" ।
२७तारायाः "तारा तारगुणैर्युक्ता कौशिकस्था सितेतरा । धत्ते शवाङ्के सौम्ये शूलमुद्गरमन्यतः" ।
२८ऋग्वेदायाः "कृष्णा पद्मस्थिता दक्षे ज्ञानमुद्राक्षमालिनी । ऋग्वेदं वामतो धत्ते पुस्तकञ्च कमण्डलुम्" ।
२९हयाननायाः "रौद्रा कृष्णा तुरङ्गास्था कबन्धस्था हयानना । मुण्डशूर्पधरा याम्ये सौम्ये संहारिकाङ्कभृत्" ।
३०रक्षसंग्राह्याः "छिन्नहस्ता शवारूढा सारा स्थूला जटाधरा । खट्वाङ्गं डमरुं सौम्ये शूलोत्पले बिभ्रती ततः । शवस्था रससंग्राही नृत्यन्ती जटिलाऽसिता । कुशूलान् चक्रकङ्कालान् बिभ्रती चर्मवासिनी" ।
३१शबरायाः "सर्वेन्द्रनाहजामत्ता वरिष्ठा शबराऽलिभा । वामे करोपधानासिधरा उल्काधरान्यतः" ।
३२तालुजिह्विकायाः "स्फटिकाभा गरुत्मस्था सुकान्ता तालुजिह्विका । शङ्खखेटकहस्ताग्रा याम्ये स्वस्तिकखड्गभृत्" ।
३३रक्ताक्ष्याः "रक्ताक्षी वाहमारूढा रक्तपाना शशिप्रभा । गदाखड्गधरा याम्ये वामे पाशकपालभृत्"। [द्वयम् ।
३४सुपर्णिकायाश्च पाक्यं मुद्रितपुस्तके पतितं मयटीपिकायां
३५विद्युज्जिह्वायाः "विद्युज्जिह्वाऽसिता क्रूरा मध्ये गौरकपालिनी । चक्रस्था चक्रकर्तरीधारिणी दक्षिणे करे" ।
३६करङ्किण्याः "प्राहस्था चामरच्छत्रभृद्दन्तिद्वयसंयुता । कुम्भपाशधरा श्वेता क्रोधयुक्ता करङ्किणी" ।
३७मेघनादायाः "मेघनादा तु चन्द्राभा खड्गखेटकधारिणी । जाम्बूनदा घनारूढा तडिन्मण्डलसन्निभा" ।
३८प्रचण्डोग्रायाः "प्रचण्डोग्रा तु नक्रस्था याम्येऽस्याः कर्त्तरीफलम् । कपालं मुण्डमन्यत्र शङ्खिनी स्फटिकप्रभा" ।
३९कालकर्ण्याः "शुक्ला द्वयासना रौद्रा बिभ्रत्यजाक्षसूत्रकम् । कालकर्णी जगत्ख्याता कर्णिकारविभूषणा" ।
४०चन्द्रावल्याः "चन्द्रावली तु हेमाभा हेमसिंहासनस्थिता । याम्येऽक्षमाला मालाभृत् शेषेऽब्ज-ध्वजधारिणी" ।
४१चन्द्रहासायाः "चन्द्रहासा स्थिता गौरी वेदाक्षा दोर्द्वयोः क्रमात् । कमण्डल्वङ्कुशव्यग्रा सन्ध्यानाशाङ्कुशान्विता" ।
४२वरप्रदायाः "कर्त्तरीमभयं याम्ये धत्ते श्वेता वरप्रदा । हंसदंष्ट्रसमारूढा पूर्णपात्रधरान्यतः" ।
४३प्रपञ्चिकायाः "फलस्रगन्विता याम्ये कुन्त-कुण्डीधरान्यतः । रौक्ममाला प्रपञ्चाख्या गौरी विश्वप्रपञ्चिका ।
४४प्रलयान्तायाः "मर्कटस्था प्रलयान्ता बिभ्रती करयोर्द्वयोः । खादन्त्याम्रफलं हृष्टा गौराङ्गी वानरानना" ।
४५शिशुवक्त्रायाः "शिशुवक्त्रा मृगारूढा पिङ्गाभा याम्यसौम्ययोः । भिन्दीपालकखेटाभ्यां पाशाविभ्राम्य संयुता ।
४६पिशाच्याः "काकास्था श्येनगा गौरी पिशाची रक्तमण्डिता । कङ्काल-कर्त्तरीखड्गं बिभ्रती याम्यसौम्ययोः" ।
४७पिशिताशायाः "फल-तूणधरा वामे सौम्ये-शस्त्रासिधारिणी । खड्गस्था बभ्रुवर्णा स्यात् पिशिताशातिदुर्बला" ।
४८लोलुपायाः "भ्रमन्ती लोलुपा पीना खरस्था याम्यसौम्ययोः । खड्गडमरुकर्त्तरीः पाशञ्चैव तु बिभ्रती" ।
४९धमन्याः "धमनी पुष्पकस्था स्यात् गौरी यक्षगणान्विता । गदापट्टिशभृत्सौम्ये स्थूलतोमरिणी ततः" ।
५०तपन्याः "तपनी सर्पगा गौरी वराङ्गी पन्नगानना । स्वकर्णयानयोर्भोगे न्यस्तहस्तोग्ररूपिणी" ।
५१वामन्याः "पीता महासुगा सा स्यात् वामनी बिभ्रती करे । कुठारं लगुडं वामेऽक्षमालां पनसन्ततः" ।
५२विकृताननायाः "शूलभिन्दलुलापास्था सिंहाकृष्टशरीरिणी । जिह्वे द्वे बिभ्रती चैव चतुर्दोर्विकृतानना" ।
५३वायुवेगायाः "शङ्खपूरणिका द्वाभ्यां ढक्काभयधरा द्वयोः । द्विसिंहरथसंस्था स्यात्तालाभा वायुवेगिका" ।
५४बृहत्कुक्ष्याः "मार्गस्थिता बृहत्कुक्षिः सौम्ये मुण्डकपालभृत् । गौरी महातनुर्याम्ये कर्त्तरीपट्टिकाधरा" ।
५५विकृतायाः "उष्ट्रस्था विकृता गौरी भयकम्पितानना । तूणञ्च डमरुं याम्ये सौम्ये खड्गार्द्धमस्तकम्" ।
५६विश्वरूपिकायाः "खेटक खड्गभृद्वामे गदा-चक्राम्बुजभृत्ततः । वनमालावती पीता तार्क्ष्यस्था विश्वरूपिका" ।
५७यमजिह्वायाः "मुसलं मुद्गरं याम्ये परशुम्बन्धनं ततः । बिभ्रती यमजिह्वा स्यात् कराला महिषस्थिता" ।
५८जयन्त्याः "नृत्यन्ती खरगा श्वेता याम्ये डमरुतूणभृत् । सदैत्यशैलखण्डोग्रा जयन्ती वामहस्तयोः" ।
५९दुर्जयायाः "श्वारूढा दुर्जया श्वेता रौद्री भूतगणावृता । खड्गकुन्तोद्यतकरा दुर्गकाननवासिनी" ।

६०यमान्तिकायाः “बध्नत् खेटिनौ दोर्भ्यां चतुर्दोर्भ्यां सव्यसोव्ययोः। शूलपाशधरा याम्ये धनुःशक्तिकराव्यतः। प्रकटास्थातिघोरास्या घोरवर्णा यमान्तिका”।

६१विडाल्याः “मार्ज्जारस्या विडाली च विडालाक्षी भवेत् स्त्रिया”।

६२रेवत्याः “वामे तूणञ्च खट्वाङ्गं शूलं दक्षे च बिभ्रती। तथा पिशाचवक्त्रोग्रा कपालस्था च रेवती”।

६३पूतनायाः “कुशूलयष्टिमद्वामे भिन्दीपालकपालभृत्। कुक्कुटाभा पूतना स्त्र्यक्षा विकृतास्या शवस्थिता”।

६४विजयान्तिकायाः “कर्त्तरीशूलभृद्याम्ये वामे मुण्डकपालिनी। श्वेतवर्णा वृषारूढा विजया विजयप्रदा”।

२ ब्रह्मणः विष्णुधर्मोत्तरात् “ब्रह्माणं कारयेद्विद्वान् देवं सौम्यं चतुर्भुजम्। बद्धपद्मासनन्तुष्टं तथा कृष्णाजिनाम्बरम्। जटाधरं चतुर्वक्त्रं सप्तहंसरथस्थितम्। वामे न्यस्तेतरकरस्तस्यैवन्दोर्युगं भवेत्। एतस्मिन् दक्षिणे पाणावक्षमाला तथा शुभा। कमण्डलुं द्वितीये च सर्वाभरणधारिणम्। सर्वलक्षणयुक्तस्य शान्तिरूपस्य पार्थिव!। पद्मपत्रदलाग्राभं ध्यानसंमीलितेक्षणम्। सन्दीयाङ्कारयेद्देवं चित्रे वा वास्तुकर्म्मणि”।

आदित्यपुराणे तु “पद्मपत्रासनस्थश्च ब्रह्मा कार्य्यश्चतुर्म्मुखः। सावित्री तस्य कर्त्तव्या वामोत्सङ्गगता तथा”।

प्रजापतेः “आदित्यवर्णं धर्म्मज्ञ! साक्षमालाकरं तथा। रूपं पूर्व्वोदितं कार्य्यं रूपमन्यज्जगत्पतेः”।

लोकपालब्रह्मणः “हंसयानेन कर्त्तव्यो न कार्य्यश्च चतुर्म्मुखः। ब्रह्मास्त्रमपरं रूपं सर्व्वकार्य्ये प्रजापतेः। अक्षसूत्रं पुस्तकञ्च धत्ते पद्मं कमण्डलुम्। चतुर्व्वक्त्रा तु सावित्री श्रोत्रियाणां गृहे स्थिता”।

विश्वकर्म्मणः “विश्वकर्म्मा तु कर्त्तव्यः सुरसूत्रधरः प्रभुः। सन्दंशपाणिर्द्विभुजस्तेजोमूर्त्तिधरो महान्”।

धर्म्मस्य “चतुर्व्वक्त्रश्चतुष्पादश्चतुर्बाहुः सिताम्बरः। सर्व्वाभरणवान् श्वेतो धर्म्मः कार्य्यो विजानता। दक्षिणे चाक्षमाला च तस्य वामे च पुस्तकम्। मूर्त्तिमान् व्यवसायस्तु कार्य्यो दक्षिणभागतः। वामभागे ततः कार्य्यो वृषः परमरूपवान्। कार्य्यौ पद्मकरौ मूर्ध्नि विन्यस्तौ तु तथा तयोः”।

ऋग्वेदस्य विश्वकर्म्मशास्त्रात् “ऋग्वेदः श्वेतवर्णः स्यात् द्विभुजो रासभाननः। अक्षमालाधरः सौम्यः प्रीतश्चाध्ययनोद्यतः”।

सामवेदस्य “नीलोत्पलदलाभासः सामवेदो हयाननः। अक्षमालान्वितो दक्षे वामे कम्बुधरः स्मृतः”।

यजुर्वेदस्य “अजास्यः पीतवर्णः स्यात् यजुर्व्वेदोऽक्षसूत्रधृक्। वामे कुलिशपाणिस्तु भूतिदो मङ्गलप्रदः”।

अथर्व्ववेदस्य “आथर्व्वणाभिधो वेदो धवलो मर्कटाननः। अक्षसूत्रञ्च खट्वाङ्गं बिभ्राणोऽयं जयप्रियः”।

शिक्षायाः “शिक्षा शुभ्राभयकरा ज्ञानमुद्रान्विता शुभा। साक्षसूत्रा सकुण्डीका द्विभुजा दक्षपङ्कजा”।

कल्पस्य “कल्पस्तु कुन्दाभासो वायसास्यो महोदरः। दण्डी कुण्डीधरोऽजस्रो मेखलाकुण्डलान्वितः”।

व्याकरणस्य “सितं व्याकरणं ज्ञेयं मयूरास्यं घटोदरम्। वीणाकजान्वितं दिव्यं दिव्यवस्त्रविभूषितम्”।

निरुक्तस्य “इन्दुवर्णनिभं शान्तं बकवक्त्रं कृशोदरम्। पाशपङ्कजहस्तं च साक्षसूत्रं सपुस्तकम्। नरुक्तमिति निर्णीतं छन्दोनिर्णीयतेऽधुना”।

छन्दसः “जपाकुसुमसंकाशं छन्दो ज्ञेयं विपश्चिता। चकोरास्यमपाङ्गन्तु शक्तिं बिभ्रच्छिखान्विताम्। खोटकुण्डलकोपेतं प्रवालकृतकुण्डलम्”।

ज्योतिषस्य “ज्योतिषं तु विडालास्यमिन्द्रगोपनिभं शुभम्। अक्षसूत्रं कजं बिभ्रद्धस्तयोर्दक्षवामयोः”।

मीमांसायाः “सोमकान्तिसमाभासं मीमांसाशास्त्रमुत्तमम्। अक्षसूत्रं दधद्दक्षे सुधापूर्णघटं करे”।

न्यायस्य “अतसीपुष्पसङ्काशो न्यायो ज्ञेयो विपश्चिता। सिंहास्यो दक्षिणे शूलं ध्वजं वामकरे दधत्”।

धर्म्मशास्त्रस्य “धर्म्मशास्त्रं सितं शान्तं चाजवक्त्रं कजासनम्। सक्ताजपाशभृद्दक्षे तथाङ्कुशन्तु वामतः”।

पुराणस्य “पुराणं चम्पकाभासं शुकवक्त्रं चतुर्द्दलम्। अक्षसूत्रं द्वये ज्ञेयं नानाभरणभूषितम्”।

इतिहासस्य “इतिहासः कजाभासः शूकरास्यो महोदरः। अक्षसूत्रं घटं बिभ्रत् पद्मजाभरणान्वितः”।

धनुर्व्वेदस्य “पीतवर्णो धनुर्व्वेदः पिकवक्त्रो महातनुः। रत्नमालावलिं धत्ते मस्तके भूषिता जटा”।

आयुर्व्वेदस्य “आयुर्व्वेदो हरित्राभो वानरास्यो विशालदृक्। अक्षसूत्रं सुधाकुम्भं बिभ्रदारोग्यदो भयम्”।

नृत्यशास्त्रस्य “नृत्यशास्त्रं सितं रम्यं मृगवक्त्रं जटाधरम्। अक्षसूत्रं त्रिशूलञ्च बिभ्राणञ्च त्रिलोचनम्”।

पञ्चरात्रस्य “पञ्चरात्राभिधं शास्त्रं धवलं वृषभाननम्। अक्षसूत्रं फलं धत्ते वनमालाविभूषितम्”।

पाशुपतस्य “शास्त्रं पाशुपतं शुभ्रं व्याघ्रवक्त्रं कृशोदरम्। कपालधरं भीमं व्याघ्रचर्म्माम्बरावृतम्”।

पातञ्जलस्य "पातञ्जलाभिधं रक्तं सर्पवक्त्रं चतेजसम्। अ-
ञ्जलिं पृदाकुञ्च धारयन् कुण्डलान्वितम्"। (पृदाकुः
सर्पः)।

साङ्ख्यस्य "साङ्ख्यं तत् कपिलं बभ्रुवक्त्रं स्वच्छतनुन्दिनम्।
जाप्यदण्डधरं दीर्घनखलोमजटाधरम्"।

अर्थशास्त्रस्य "अर्थशास्त्रं भवेद्गौरं सारिकावदनं शुभम्।
अक्षसूत्रं फलं बिभ्रद्दक्षहारं कमण्डलुम्"।

प्रसङ्गाद्वेदादीनामधिदेवताः तत्रोक्ताः प्रदर्श्यन्ते विष्णुधर्मो-
त्तरात् "ऋग्वेदस्तु स्मृतो ब्रह्मा यजुर्वेदस्तु वासवः।
सामवेदस्तथा विष्णुः शम्भुश्चाथर्वणो भवेत्। शिक्षा प्र-
जापतिर्ज्ञेयः कल्पो ब्रह्मा प्रकीर्त्तितः। सरस्वती व्या-
करणं निरुक्तं वरुणः प्रभुः। छन्दो विष्णुस्तथैवाग्नि-
र्ज्योतिषं भगवान् रविः। मीमांसा भगवान् सोमो
न्यायदेवः समीरणः। धर्म्मश्च धर्म्मशास्त्राणि पुरा-
णञ्च तथा मनुः। इतिहासः प्रजाध्यक्षो धनुर्वेदः श-
तक्रतुः। आयुर्वेदस्तथा साक्षाद्देवो धन्वन्तरिः प्रभुः।
कलावेदो मही देवी नृत्यशास्त्रं महेश्वरः। सङ्कर्षणः
पञ्चरात्रं रुद्रः पाशुपतं तथा। पातञ्जलमनन्तश्च सा-
ङ्ख्यञ्च कपिलो मुनिः। अर्थशास्त्राणि सर्वाणि धना-
ध्यक्षः प्रकीर्त्तितः। कलाशास्त्राणि सर्वाणि कामदेवो
जगद्गुरुः। अन्यानि यानि शास्त्राणि यत् कर्म्माणि
प्रचक्षते। स एव देवता तस्य शास्त्रं कार्य्यञ्च देववत्"।

ऋषीणाम् मयसंग्रहे "उदासीना सोपवीताः कमण्डल्वक्षसू-
त्रिणः। जटिलाः श्मश्रुलाः शान्ताः आसीना ध्यानतत्
पराः। सप्तर्षयो वसिष्ठश्च कार्य्यो भार्य्यासमन्वितः। गौत-
मश्च भरद्वाजो विश्वामित्रश्च कश्यपः। जमदग्निर्वसिष्ठोऽत्रिः
सप्त वैवस्वतेऽन्तरे। मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः
क्रतुः। प्रचेताश्च वसिष्ठश्च भृगुर्नारद एव च। जटिलाः
श्मश्रुलाः शान्ताः कृशा धमनिसन्तताः। कुशमालाधराः
कार्य्या मुनयो द्विभुजा दश"।

नारदस्य "नारदो देवगन्धर्वः साक्षसूत्रकमण्डलुः। सेव्यो वै
वीणया वामभुजमूलोपगूढया"।

मुनीनाम् भविष्योत्तरात् "प्रकृत्या काञ्चनं कृत्वा यथा शक्त्या
तु शोभितम्। पुरुषाकृतिं प्रशान्तञ्च जटामञ्जुल-
धारिणम्। कमण्डलुकरं शिष्यैर्वृन्दैश्च परिवारितम्।
कृत्वा ब्रूयाद्विधिज्ञस्तं दर्भहस्तं वरं मुनिम्"।

भृगूणाम् "कर्त्तव्याः शक्ररूपेण भृगवो नाम देवताः। भुवनो
भावनश्चैव सुजन्यः सुजनस्तथा। क्रतुः स्वः सुनाम
च्यजश्च व्यसनस्तथा। प्रसवश्चाव्ययश्चैव दक्षो द्वादशक-
स्तथा। भृगवो नामनिर्दिष्टा देवा द्वादश यज्ञियाः"।

अङ्गिरसः "जीवरूपेण कर्त्तव्या देवाश्चाङ्गिरसस्तथा।
आत्मा ह्यायुर्मनो दक्षः परप्राणस्तथैव च। हविष्मांश्च
गविष्ठश्च ऋतः सत्यश्च तेजसः"।

विष्णोः विष्णुधर्म्मोत्तरात् "देवदेवं यथा विष्णुं कारयेद्गरु-
डस्थितम्। कौस्तुभोद्भासितोरस्कं सर्व्वाभरणधारिणम्।
सजलाम्बुदसच्छायं पीतदिव्याम्बरं तथा। मुखानि
चास्य चत्वारि बाहवो द्विगुणास्तथा। सौम्येन्दु-
वदनं पूर्वं नारसिंहन्तु दक्षिणम्। कपिलं पश्चिमं
वक्त्रं तथा वाराहमुत्तमम्। तस्य दक्षिणहस्तेषु बाणा-
रिमुसलाभयम्। चर्म्मशौरधराविन्दुशोभे च वनमा-
लिनः। कार्य्याणि विष्णोर्ध्वंसं ! वामहस्तेष्वनुक्रमात्"।
(अरि, चक्रं इन्दुः शङ्खः)।

लोकपालविष्णोः "एकवक्त्रो द्विबाहुश्च गदाचक्रधरः प्रभुः।

वासुदेवस्य "एकवक्त्रश्चतुर्बाहुः सौम्यरूपः सुदर्शनः। पीता-
म्बरश्च मेघाभः सर्व्वाभरणभूषितः। कण्ठेन शुभदे-
शेन कम्बुतुल्येन राजता। वराभरणयुक्तेन कुण्डलो-
त्तरभूषिणा। अङ्गदी बद्धकेयूरो वनमालाविभूषणः।
उरसा कौस्तुभं बिभ्रत् किरीटं शिरसा तथा। शिरः-
पद्मस्तथैवास्य कर्त्तव्यश्चारुकर्णिकः। पुष्टश्लिष्टायतभुज-
स्ताम्रताम्रनखाङ्गुलिः। मध्येन त्रिवलीभङ्गशोभितेन सु-
चारुणा। स्त्रीरूपधारिणी क्षोणी कार्य्या तत्पादम-
ध्यगा। तत्करस्थाङ्घ्रियुगलो देवः कार्य्यो जनार्द्दनः।
तालान्तरपदन्यासः किञ्चित्किञ्चिद्दक्षिणः। अनुद्धता
मही कार्य्या देवदर्शितविस्मिता। देवस्य कटिवासेन कार्य्यो
ऊ स्ववलम्बिना। वनमाला च कर्त्तव्या देवजान्ववल-
म्बिनी। यज्ञोपवीतं कर्त्तव्यं नाभिदेशमुपागतम्।
उत्फुल्लकमलं पाणौ कुर्य्याद्देवस्य दक्षिणे। वामपाणि-
गतं शङ्खं शङ्खाकारन्तु कारयेत्। दक्षिणे तु गदा
देवी तनुमध्या सुलोचना। स्त्रीरूपधारिणी सुभ्रू
सर्व्वाभरणभूषिता। पश्यन्ती देवदेवेशं कार्य्या चामरधा-
रिणी। कुर्य्यात्तन्मूर्ध्नि विन्यस्तं देवहस्तन्तु दक्षिणम्।
वामभागगतश्चक्रः कार्य्यो लम्बोदरस्तथा। सर्व्वाभरण-
संयुक्तो वृत्तविस्फारितेक्षणः। कर्त्तव्यश्चामरकरो देव-
वीक्षणतत्परः। कुर्य्यात् देवकरं वामं विन्यस्तं तस्य
मूर्द्धनि।

सङ्कर्षणस्य "वासुदेवस्वरूपेण कार्य्यः सङ्कर्षणः प्रभुः। स तु

शुक्लवर्णः कार्य्यो नीलवासा यदूत्तम ! । गदास्थाने च मुषलं चक्रस्थाने च लाङ्गलम् । कर्त्तव्यौ तनुमध्यौ तु सुरूपौ रूपसंयुतौ" ।

प्रद्युम्नस्य "वासुदेवस्वरूपेण प्रद्युम्नश्च तथा भवेत् । स तु दूर्व्वाङ्कुरश्यामः सितवासा विधीयते । चक्रस्थाने भवेच्चापो गदास्थाने तथा शरः । तथाविधौ तौ कर्त्तव्यौ यथा तु शरचापकौ" ।

अनिरुद्धस्य "एतद्वैव तथा रूपमनिरुद्धस्य कारयेत् । पद्मपत्राभवपुषो रक्ताम्बरधरस्य तु । चक्रस्थाने भवेच्चर्म्म गदास्थानेऽसिरेव च । चर्म्म स्याच्छङ्खरूपेण प्रांशुः खड्गो विधीयते । चक्रादीनां स्वरूपाणि किञ्चित्पूर्व्वं प्रदर्शयेत् । रथ्याद्यायुधरूपाणि चक्रादीन्येव यादव ! । वामपार्श्वगताः कार्य्या देवानां प्रवराध्वजाः । सुपताकायुता राजन् ! यदिस्यात्ते यथेरितम्" ।

लक्ष्मीनारायणयोः विश्वकर्म्मशास्त्रात् "लक्ष्मीनारायणौ कार्य्यौ संयुक्तौ दिव्यरूपिणौ । दक्षिणस्था विभोर्म्मूर्त्तिर्लक्ष्मीमूर्त्तिस्तु वामतः । दक्षिणः कण्ठलग्नोऽस्या वामो हस्तः सरोजभृत् । विभोर्व्वामकरो लक्ष्म्याः कुचभागस्थितः सदा । सर्व्वावयवसंपूर्णा सर्व्वालङ्कारभूषिता । सुरुनेत्रकपोलाढ्या रूपयौवनसंयुता । सिद्धिः कार्य्या समीपस्था चामरग्राहिणी शुभा । कर्त्तव्यं वाहनं सव्ये देवाधोभागगं सदा । शङ्खचक्रधरौ तस्य द्वौ कार्य्यौ पुरुषौ पुरः । वामनौ हारकेयूरकिरीटमणिभूषणौ । उपासकौ समीपस्थौ प्रभोर्भ्रूक्षिप्तमानसौ । रचनां योगपट्टस्य विधायाञ्जलिमास्थितौ" ।

योगेश्वरस्य सिद्धार्थसंहितायाम् "पद्मासनसमासीनः किञ्चिन्मीलितलोचनः । योगाग्रे दत्तदृष्टिश्च श्वेतपद्मोपरिस्थितः । वामदक्षिणगौ हस्तौ उत्तानावेकभागगौ । तत्करद्वयपार्श्वस्थे पङ्कजे शङ्खमहागदे । ऊर्द्ध्वकरद्वये तस्य पाञ्चजन्यः सुदर्शनः । योगस्वामी स विज्ञेयः पूज्यो योगाधियोगिभिः" । [त्रिमूर्त्तिशब्दे २८७८ पृ० दर्शितानि चतुर्विंशतिमूर्त्तीनां लक्षणानि विष्णुधर्म्मोत्तरे उक्तानि चतुर्विंश-] हंसमत्स्यकूर्म्माणाम् "हंसो मत्स्यस्तथा कूर्म्मः कार्य्यास्तद्रूपधारिणः । शृङ्गी मत्स्यस्तु कर्त्तव्यो देवदेवो जनार्द्दनः" ।

वराहस्य "ऐश्वर्य्यसन्निरुद्धश्च वराहो भगवान् हरिः । ऐश्वर्य्यशक्त्या दंष्ट्राग्रसमुद्धृतवसुन्धरः । नृवराहोऽथ वा कार्य्यः शेषोपरिस्थितः प्रभुः । शेषश्चतुर्भुजः कार्य्यः चारुरत्नफणान्वितः । ह्लादोत्फुल्लनयनो देवदर्शनतत्परः । कर्त्तव्यौ क्षीरसंयुक्तौ करौ तस्य यादव ! । सर्पभोगश्च कर्त्तव्यस्तथैव रचिताञ्जलिः । आलीढस्थानसंस्थानस्तत्पृष्ठे भगवान् भवेत् । वामार्ल्लीनता तस्य योषिद्रूपा वसुन्धरा । नमस्कारपरा तस्य कर्त्तव्या द्विभुजा शुभा । यस्मिन् भुजे धरा देवी तस्य शङ्खकरो भवेत् । अन्ये तस्य कराः कार्य्याः पद्मचक्रगदाधराः । हिरण्याक्षशिरश्छेदचक्रोद्यतकरोऽथ वा । हतोद्धृतहिरण्याक्षः प्रसन्नो भगवान् भवेत् । नृसिंहत्वमनैश्वर्य्यं हिरण्याक्षं विदुर्बुधाः । ऐश्वर्य्येणाविभागेन स निरस्तोऽरिमर्द्दनः । नृवराहोऽथ वा कार्य्यो ध्याने कपिलवत् स्थितः । द्विभुजस्त्वथ वा कार्य्यः पिण्डनिर्वपनोद्यतः । यज्ञक्रोडस्वरूपेण यज्ञदानवमर्द्दनः । नृवराहो वराहश्च कर्त्तव्यः क्ष्माविदारणः" ।

नरसिंहस्य "स एवं भगवान्विष्णुर्नरसिंहवपुर्द्धरः । ध्यानविधिः स एवोक्तः परमज्ञानवर्द्धनः । पीनस्कन्धकटिग्रीवः कृशमध्यः कृशोदरः । सिंहाननो नरेहश्च नीलवासाः प्रभान्वितः । आलीढस्थानसंस्थानः सर्व्वाभरणभूषितः । ज्वालामालाकुलमुखो ज्वालाकेशरमण्डलः । हिरण्यकशिपोर्व्वक्षःपाटयन्नखरैः खरैः । नीलोत्पलाभः कर्त्तव्यो देवजानुगतस्तथा । हिरण्यकशिपुर्दैत्यस्तत्त्वज्ञानं विदुर्बुधाः" ।

वामनस्य "कर्त्तव्यो वामनो देवः सङ्कटैर्गात्रपर्व्वभिः । पीनगात्रश्च कर्त्तव्यो दण्डी चाध्ययनोद्यतः । दूर्व्वाश्यामश्च कर्त्तव्यः कृष्णाजिनधरस्तथा" ।

त्रिविक्रमस्य "सजलाम्बुदसङ्काशस्तथा कार्य्यस्त्रिविक्रमः । दण्डपाशधरः कार्य्यः शङ्खचक्रगदाधरः । शङ्खचक्रगदापद्माः कार्य्यास्तस्य सरूपिणः । निर्द्दिष्टास्ते न कर्त्तव्याः शेषं कार्य्यन्तु पूर्व्ववत् । ऊर्द्ध्ववदनः कार्य्यो देवो विस्फारितेक्षणः" ।

परशुरामस्य "कार्य्यस्तु भार्गवो रामो जटामण्डलदुर्द्दशः । हस्तेऽस्य परशुः कार्य्यः कृष्णाजिनधरस्य तु" ।

रामादीनाम् "रामो दाशरथिः कार्य्यो राजलक्षणलक्षितः । भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महायशाः । तथैव सर्व्वे कर्त्तव्याः किन्तु मौलिविवर्जिताः" ।

कृष्णस्य "कृष्णश्चक्रधरः कार्य्यो नीलोत्पलदलच्छविः । इन्दीवरधरा कार्य्या तस्य वामे तु रुक्मिणी" ।

बलभद्रस्य "क्षीरपाण्डुरवर्णश्च कार्य्यो मुषली चैव कुण्डली । श्वेतोऽतिनीलवसनो मदाद्घूर्णितलोचनः" ।

प्रद्युम्नस्य "चापबाणधरः कार्य्यः प्रद्युम्नश्च सुदर्शनः । राजन्निन्द्रमणिश्यामः श्वेतशाखा मदोत्कटः" ।

कामस्य "कामदेवस्तु कर्त्तव्यो रूपेणाप्रतिमो भुवि । अष्टबाहुः प्रकर्त्तव्यः शङ्खपद्मविभूषणः । चापबाणकरश्चैव मदादञ्चितलोचनः । रतिः प्रीतिस्तथा शक्तिर्मदशक्तिस्तथोज्ज्वला । चतस्रस्तस्य कर्त्तव्याः पत्न्यो रूपमनोहराः । चत्वारश्च करास्तस्य कार्य्या भार्य्यास्तनोपगाः । केतुश्च मकरः कार्य्यः पञ्चबाणमुखो महान्" ।

अनिरुद्धशाम्बयोः "कर्त्तव्यश्चानिरुद्धोऽपि खड्गचर्म्मधरः प्रभुः । शाम्बः कार्य्यो गदाहस्तः सुरूपश्च विशेषतः । शाम्बानिरुद्धौ कर्त्तव्यौ पद्माभौ रक्तवाससौ" ।

देवक्याः "पद्मपत्राग्रगौराभा कर्त्तव्या देवकी तथा" ।

यशोदायाः "मधूकपुष्पसच्छाया यशोदापि सदा भवेत्" ।

गोपालस्य "गोपालप्रतिमां कुर्य्यात् वेणुवादनतत्पराम् । बर्हापीडां घनश्यामां द्विभुजामृजुसंस्थिताम्" ।

बुद्धस्य "काषायवस्त्रसंवीतः स्वर्णसंवर्णचीवरः । पद्मासनस्थो द्विभुजो ध्यायी बुद्धः प्रकीर्त्तितः" ।

कल्किनः "खड्गोद्यतकरः क्रुद्धो हयारूढो महाबलः । म्लेच्छोच्छेदकरः कल्की द्विभुजः परिकीर्त्तितः" ।

नरनारायणहरिकृष्णानाम् "दूर्व्वाश्यामो नरः कार्य्यो द्विभुजश्च महाबलः । नारायणश्चतुर्बाहुर्नीलोत्पलदलच्छविः । तयोर्म्मध्ये तु बदरी कार्य्या फलविभूषिता । बदर्य्यामथवा कार्य्यावक्षमालाधरावुभौ । अष्टचक्रे स्थितौ याने भूतयुक्ते मनोरमे । कृष्णाजिनधरौ दान्तौ जटामण्डलधारिणौ । पादेन चैकेन रथस्थितेन पादेन चैकेन च जानुगेन । कार्य्यो हरिश्चात्र नरेण तुल्यः कृष्णोऽपि नारायणतुल्यमूर्त्तिः" ।

हयग्रीवस्य "मूर्त्तिमान् पृथिवीहस्तन्यस्तपादः सितच्छविः । नीलाम्बरधरः कार्य्यो देवो हयशिरोधरः । विन्द्यात् सङ्कर्षणांशेन देवो हयशिरोधरः । कर्त्तव्योऽष्टभुजो देवः तत्करेषु चतुर्ष्वथ । शङ्खं चक्रं गदां पद्मं साकारं कारयेद्बुधः । चत्वारश्च कराः कार्य्या वेदानां देहधारिणाम् । देवेन मूर्ध्नि विन्यस्ताः सर्व्वाभरणधारिणः" ।

कपिलस्य "प्रद्युम्नं विद्धि वैराग्यं तु कापिलीं तनुमाश्रितः । मध्ये तु करकः कार्य्यस्तस्योत्सङ्गगतः परः । दोर्युगं चापरं तस्य शङ्खचक्रधरं भवेत् । पद्मासनोपविष्टश्च ध्यानसम्मीलितेक्षणः । कर्त्तव्यः कपिलो देवो जटामण्डलमण्डितः । वायुसंरोधपीनांसः श्मश्रुचरबद्धः । मृगाजिनधरो राजन् ! ब्रह्मसूत्रोपवीतवान् । विभुर्म्मन्मथछायापङ्कविकासंस्थितः प्रभुः । वैराग्यभावेन महानुभावो ध्यानस्थितः सम्यगर्थं पठन्नपि । ध्यायंस्तथास्ते भुवनस्य गोप्ता सांख्यप्रवक्ता पुरुषः पुराणः" ।

व्यासस्य "कृशः कृष्णतनुर्व्यासः पिङ्गलोऽतिजटाधरः । सुमन्तुर्जैमिनिः पैलो वैशम्पायन एव च । तस्य शिष्याश्च कर्त्तव्याश्चत्वारः पारिपार्श्विकाः" ।

वाल्मीकेः "गौरस्तु कार्य्यो वाल्मीकिस्तेजोमण्डलदुर्दृशः । तपस्यभिरतः शान्तो न कृशो न च पीवरः" ।

दत्तात्रेयस्य "वाल्मीकिरूपं सकलं दत्तात्रेयस्य कारयेत्" ।

धन्वन्तरेः "धन्वन्तरिः सुकर्त्तव्यः सुरूपः प्रियदर्शनः । करद्वयगतश्चास्य सामृतः कलसो भवेत् ।

जलशायिनः "जलमध्यगतः कार्य्यः शेषपन्नगतल्पगः । फणापुञ्जमहारत्नदुर्न्निरीक्ष्यशिरोधरः । देवदेवस्तु कर्त्तव्यस्तत्र सुप्तश्चतुर्भुजः । तथापरश्च कर्त्तव्यः शेषभोगाङ्कसंस्थितः । एकपादोऽस्य कर्त्तव्यो लक्ष्म्युत्सङ्गगतः प्रभोः । तथापरश्च कर्त्तव्यस्तत्र जानौ प्रसारितः । कर्त्तव्यो नाभिदेशस्थस्तथा तस्यापरः करः । तथैवान्यः करः कार्य्यो देवस्य तु शिरोधरः । सन्तानमञ्जरीधारी तथैवास्यापरो भवेत् । नाभीसरसिसम्भूते कमले तस्य यादव ! । सर्व्वपुष्पमयो देवः प्राग्वत्कार्य्यः पितामहः । नालसंस्थौ च कर्त्तव्यौ पद्मस्य मधुकैटभौ । स्वरूपधारीणि भुजङ्गमस्य कार्य्याण्यथास्त्राणि तथा समीपे । एतत्तथाग्रे यदुपुङ्गवोक्तं देवस्य रूपं परमस्य तस्य" ।

गरुडस्य विष्णुधर्म्मोत्तरात् "तार्क्ष्यो मरकतप्रख्यः कौशिकाकारनासिकः । चतुर्भुजस्तु कर्त्तव्यो वृत्तनेत्रमुखस्तथा । स्कन्धोरुजानुचरणः पक्षद्वयविभूषितः । प्रभासंख्यानसौवर्णकलापेन विराजितः । छत्रन्तु पूर्णकुम्भञ्च करयोस्तस्य कारयेत् । करद्वयन्तु कर्त्तव्यं तथा विरचिताञ्जलि । यदास्य भगवान् पृष्ठे तदा कुम्भधरौ करौ । न कर्त्तव्यौ तु कर्त्तव्यौ देवपादधरौ शुभौ । किञ्चिल्लम्बोदरः कार्य्यः सर्व्वाभरणभूषितः" ।

रुद्रस्य "देवदेवं महादेवं वृषारूढन्तु कारयेत् । तस्य वक्त्राणि कार्य्याणि पञ्च यादवनन्दन ! । सर्व्वाणि सौम्यरूपाणि दक्षिणं विकटं मुखम् । कपालमालिकं भीमं जगत्संहारकारकम् । त्रिनेत्राणि तु सर्व्वाणि वदनं तत्परं विना । जटाकलापे कुर्व्वीत तस्य चन्द्रकला भवेत् । तस्योपरि-

शूलाङ्कुशौ चैव कौमुदीं जपमालिकाम् । घण्टाकपाल-खट्वाङ्गं तर्जनीं कुण्डिकां धनुः । परशुं पट्टिशं चैव वामोर्द्धादिकरादधे" ।

८त्र्यम्बकस्य "त्र्यम्बकोऽपि दधच्चक्रं डमरुं मुद्गरं शरम् । शूलाङ्कुशाक्षमालाश्च दक्षोर्द्धादिक्रमेण हि । गदाख-ट्वाङ्गपात्राणि कार्मुकं तर्जनीघटौ । परशुं पट्टिशं चेति वामोर्द्धादिकरादधे" ।

९सुरेश्वरस्य "सुरेश्वरोऽपि डमरुं चक्रं शूलाङ्कुशावपि । शरञ्च मुद्गरं चापं दक्षबाहुष्वधे स्थिति । पङ्कजं परशुं घण्टां पट्टिशं तर्जनीं धनुः । खट्वाङ्गं कारयेत्तत्र वामेऽष्टकरपङ्क्तिषु" ।

१०जयन्तस्य "जयन्तो दशमो रुद्रोऽप्यङ्कुशं चक्रमुद्गरौ । शूला-क्षिडमरुं बाणमस्त्रं यमे स्थिति । गदा-खट्वाङ्ग-परशुं कपालं शक्तिं तर्जनीम् । धनुः कुण्डी-मयोर्द्धादि वामबाहुष्वधे दधत्" ।

११अपराजितस्य "अथापराजितो दक्षे तोमरं खड्गमङ्कु-शम् । शूलाक्षिचक्रडमरुमक्षमालां दधत् क्रमात् । शक्तिं खेटं गदां पात्रं तर्जनीं पट्टिशध्वजम् । घण्टाञ्च-रतथाथ धारयन्नूर्द्ध्वादितः । अजैकपादहिर्बुध्न्यः विरूपाक्षश्च रैवतः । हरश्च बहुरूपश्च त्र्यम्बकश्च सुरे-श्वरः । रुद्रा एकादश प्रोक्ता जयन्तश्चापराजितः" ।

स्कन्दस्य विष्णुधर्मोत्तरात् "कुमारः षण्मुखः कार्यः शिख-ण्डकविभूषणः । रक्ताम्बरधरः कार्यो मयूरवरवाहनः । कुक्कुटश्च तथा घण्टा तस्य दक्षिणहस्तयोः । पताका वैजयन्ती च शक्तिः कार्या च वामयोः" ।

भैरवस्य "अथातो रूपनिर्माणं वक्ष्येऽहं भैरवस्य तु । लम्बो-दरन्तु कर्त्तव्यं वृत्तपिङ्गललोचनम् । दंष्ट्राकरालवदनं फुल्लनासापुटन्तथा । कपालमालिनं रौद्रं सर्वतः सर्प-भूषणम् । त्रासयन्तञ्च देवीं पर्वतनन्दिनीम् । गजचर्मोत्तरच्छदम् । बहुभिर्बाहु-भिर्युक्तं सर्वायुधविभूषणम् । कुर्यात् शक्तिप्रतीकाशैस्तथा नीलमणैः शुभैः । सौम्योक्तमिदं रूपं भैरवस्य प्रकी-र्त्तितम्" ।

महाकालस्य "महाकालस्य कथितमेतद्धि भैरवं शुभम् । देवीत्रासनकश्चास्य करे कार्यश्च पन्नगः । न चास्य पु-रतः कार्या देवी पर्वतनन्दिनी । शुक्रा न कार्याश्च तथा न रक्ता कदापि तौ मातृगणप्रधाने । कार्यं तथा वत् परिवर्हणस्य गणाश्च कार्या बहुरूपरूपाः" ।

नन्दिनः "नन्दी कार्यस्त्रिनेत्रस्तु चतुर्बाहुर्महाभुजः । सि-न्दूराभश्चतुर्णायो व्याघ्रचर्मपरिच्छदः । त्रिशूलभिन्दि-पालौ च करयोस्तस्य कारयेत् । शिरोगतं तृतीयन्तु तर्जयन्तं तथापरम् । आलोकयानं कर्त्तव्यं दूरादागमि-र्मञ्जनम्" ।

वीरभद्रस्य "अनेनैव तु रूपेण वीरभद्रं विदुर्बुधाः" ।

अवरस्य विश्वकर्मशास्त्रात् "अवरस्त्रिपादः कर्तव्यस्त्रिनेत्रैर्नवने-त्रिभिः । भस्मप्रहरणो दक्षिणबाहुर्व्याकुलेक्षणः" ।

१वसूनां विश्वकर्मशास्त्रात् तत्र धरस्य "अथातः संप्रवक्ष्यामि वसुरूपाणि ते जय ! । पद्मास्य-मालिके तस्य दक्षवामक-रद्वये । शक्ती दधानोऽयं धराख्यो वसुरादिमः" ।

२ध्रुवस्य "मालां पुष्करबीजोत्थां चक्रं शक्तिं कमण्डलुम् । दक्षाधरादिविन्यासेन यस्य स्युः स ध्रुवो मतः" ।

३सोमस्य "मुक्ताफलकृतामाला पङ्कजं शक्तिरङ्कुशः । स वसुः कीर्तितो वत्स सोमनामेति वै बुधैः" ।

४आपस्य "सव्यवामोर्द्धगौ यस्य करौ स्तः शक्तिसंयुतौ । खे-टाङ्कुशान्वितौ चाधः स भवेदापसंज्ञकः" ।

५अनिलस्य "अक्षमालोपवीतस्तु स्रुचिशक्तिकरावधः । यस्य स्तः सोऽनिलाख्यः स्याच्छुभदः पञ्चमो वसुः" ।

६नलस्य "स्रुवाक्षमालिके दक्षे वामे शक्तिकपालभृत् । सव्यो-र्द्धादिक्रमाद्युयोऽसौ नलाख्यस्तु वसुः स्मृतः" ।

७प्रत्यूषस्य "खट्वाङ्गधरः सव्ये शक्तिखेटकरोऽन्यतः । प्रत्यूषाख्यो वसुश्चायं सप्तमः परिकीर्तितः" ।

८प्रभासस्य "सव्ये दण्डकपालोऽसौ वामे तु स्रुचिशक्तिकः । शुभदः कीर्तितश्चायं प्रभासो-वसुरष्टमः । एते सर्वे समाख्याता नवकाञ्चनसन्निभाः । धरो ध्रुवश्च सोमः स्या-दापश्चैवानिलो नलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः" ।

द्वादशादित्यानाम् "शृणु वत्स ! प्रवक्ष्यामि सूर्यभेदांस्तु ते जय ! । यावत् प्रकाशकः सूर्यो जायते मूर्तिभिर्यथा" ।

१धातुः "दक्षिणे पौष्करी माला करे वामे कमण्डलुः । पद्माभ्यां शोभितकरा सा धात्री प्रथमा स्मृता" ।

२मित्रस्य "शूलं वामकरे चास्याः दक्षिणे सोम एव च । मैत्री नाम त्रिनयना कुशेशयविभूषिता" ।

३अर्यम्णः "प्रथमे तु करे चक्रं तथा वामे च कौमुदी । मूर्त्तिरार्यमणी ज्ञेया सपद्मैः पाणिपल्लवैः" ।

४रुद्रस्य "अक्षमाला करे सव्ये चक्रं वामे प्रतिष्ठितम् । सा मूर्त्ती रौद्री ज्ञातव्या प्रधाना पद्मभूषिता" ।

५वरुणस्य "चक्रं तु दक्षिणे यस्या वामे पाशः सुशोभनः । सा वारुणी भवेन्मूर्त्तिः पद्मद्वयकरद्वया" ।
६सूर्य्यस्य "कमलञ्च तु दक्षिणतो माला चाक्षमयी भवेत् । सा भवेत् सम्मता सूर्य्यमूर्त्तिः पद्मविभूषिता" ।
७भगस्य "यस्या दक्षिणतः शूलं वामहस्ते सुदर्शनः । भगमूर्त्तिः समाख्याता पद्महस्ता शुभा जय !" ।
८विवस्वतः "अथ वामकरे माला त्रिशूलं दक्षिणे स्मृतम् । विवस्वन्मूर्त्तिरेषा स्यात् पद्मलाञ्छनलाञ्छिता" ।
९पूष्णः "पूषाख्यस्य भवेन्मूर्त्तिर्द्विभुजा पद्मलाञ्छिता । सर्व्वपापहरा ज्ञेया सर्व्वलक्षणलक्षिता" ।
१०सवितुः "दक्षिणे तु गदा यस्या वामे चैव सुदर्शनः । पद्मरूपा तु सावित्री मूर्त्तिः सर्व्वार्थसाधनी" ।
११त्वष्टुः "स्रुवं च दक्षिणे हस्ते वामे होमजकालिकाम् । मूर्त्तिस्त्वाष्ट्री भवेत् सा स्यात् पद्मरुद्धकरद्वया" ।
१२विष्णोः "सुदर्शनकरा सव्ये पद्महस्ता तु वामतः । यथा स्यात् द्वादशी मूर्त्तिर्विष्णोरमिततेजसः । धाता मित्रोऽर्य्यमा रुद्रो वरुणः सूर्य्य एव च । भगो विवस्वान् पूषा च सविता दशमः स्मृतः । एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते" ।
मरुताम् "अथातः संप्रवक्ष्यामि रूपाणि मरुतां तव" ।
१श्वसनस्य "अक्षमालाब्जे दक्षे वामे कुण्डीध्वजान्वितः । श्वसनाख्यो भवेदेवं साधकानां सुसिद्धिदः" ।
२स्पर्शनस्य "चक्राक्षमालिकापात्रध्वजयुक् स्पर्शनाभिधः" ।
३वायोः "कपालध्वजपाशाब्जधारको वायुनामकः" ।
४मातरिश्वनः "मातरिश्वा कपालाब्जध्वजपात्रकरो मतः" ।
५सदागतेः "ध्वजाक्षसूत्रपात्राब्जं बिभ्राणः स्यात् सदागतिः ।
६महाबलस्य "ध्वजासिखेटपात्राणि धारयंस्तु महाबलः" ।
७बलवर्द्धनस्य "ध्वजपाशकपालाब्जैः संयुतो बलवर्द्धनः" ।
८पृषदश्वस्य "पात्राक्षसूत्रपाशाब्जधारकः पृषदश्वकः" ।
९गन्धवहस्य "अक्षसूत्रगदाकम्बुध्वजी गन्धवहाभिधः" ।
१०गन्धवाहकस्य "कपालध्वजपात्राब्जहस्तको गन्धवाहकः" ।
११अनिलस्य "पाशसूत्राक्षसूत्राब्जध्वजहस्तोऽनिलो मतः" ।
१२आशुगस्य "अक्षमालासुनीलाब्ज-ध्वज-कम्बुधराशुगः" ।
१३सुखस्य "ध्वजबाणधनुःकुण्डीकरयुक् सुखको भवेत्" ।
१४कर्करस्य "ध्वजाब्जपात्रसूत्राणि धारयेत् कर्कराभिधः" ।
१५समीरणस्य "अब्जाक्षमालिकापात्रध्वजहस्तः समीरणः" ।
१६समीरकस्य "ध्वजपात्रघटाब्जानि बिभ्राणस्तु समीरकः" ।
१७अनुत्तमस्य "अक्षपात्रध्वजाब्जानि सुपक्ष बिभ्रदनुत्तमः" ।
१८मारुतस्य "अक्षमालाध्वजाब्जानि धारयन् मारुताभिधः" ।
१९नागयोनिजस्य "पद्माक्षसूत्रपाशाब्जसंयुतो नागयोनिजः" ।
२०जगत्प्राणस्य "ध्वजसुण्डाक्षपात्री स्याज्जगत्प्राणाभिधः स्मृतः" ।
२१पवनस्य "ध्वजसूत्रकपाशाब्जसंयुतः पवनाभिधः" ।
२२वातस्य "खट्वाङ्गध्वजखेटानि बिभ्राणो वातसंज्ञकः" ।
२३प्रभञ्जनस्य "ध्वजाक्षखड्गपात्राणि धारयंस्तु प्रभञ्जनः" ।
२४पवस्य "अक्षसूत्रध्वजाब्जाहिपाणियुक् पवनामकः" ।
२५नभस्वतः "शूलाब्जध्वजपात्राणि नभस्वानिति धारयन्" ।
२६अतिबलस्य "ध्वजाङ्कुशाक्षसूत्राणि बिभ्राणोऽतिबलो मतः" ।
२७तरस्विनः "सध्वजाम्बुजपात्राङ्कुशस्तरस्वी नाम कीर्त्तितः" ।
२८द्रावणस्य "टङ्कसुण्डध्वजाब्जानि धारयन् द्रावणो मतः" ।
२९दैत्यघ्नकस्य "ध्वजाक्षतर्ज्जनीपात्रपाणियुग् दैत्यघ्नकः" ।
३०गात्रजाड्यस्य "अक्षमालाकुठाराब्जध्वजयुग्गात्रजाड्यकः" ।
३१अधरस्य "घण्टाब्जध्वजसूत्राणि धारयन्नधराभिधः" ।
३२जर्द्दहः "बोधिपल्लवसूत्राब्जध्वजहस्तः सदोर्द्दहकः" ।
३३गतिरोधनस्य "अक्षसूत्रध्वजाशोकपात्रयुक् गतिरोधनः" ।
३४पाणिकस्य "पाणिको नाम विज्ञेयो बाणाब्जध्वजसुण्डयुक्" ।
३५साधकस्य "ध्वजाक्षघटपात्राणि धारयन् साधको मतः" ।
३६विश्वपूरकस्य "बीजपूरध्वजाब्जाक्षसंयुतो विश्वपूरकः" ।
३७जगदाश्रयस्य "घण्टाक्षध्वजमालाभिः संयुतो जगदाश्रयः" ।
३८विश्वातिरिक्तस्य "विश्वातिरिक्तको नाम ध्वजलाञ्छनपाशयुक्" ।
३९कृजागरस्य "अक्षमालाकजे घण्टाध्वजौ बिभ्रत् कृजागरः" ।
४०विश्वोदरस्य "विश्वोदरो भवेदेष शङ्खशूलघटध्वजी" ।
४१व्यग्रकस्य "व्यग्रको नाम विज्ञेयो खड्गबाणधनुर्द्धटी" ।
४२तीव्रकस्य "श्रीफलाब्जाक्षपात्राणि धारयंस्तीव्रको मतः" ।
४३शुभकस्य "शक्तिसुण्डध्वजपाशी शुभकोऽयं प्रकीर्त्तितः" ।
४४बीजवर्द्धनस्य "अक्षसूत्रध्वजपाशपात्रयुक् बीजवर्द्धनः" ।
४५भद्रजयस्य "ध्वजपाश-कपालाब्जैर्युतो भद्रजयो मतः" ।
४६पुष्करोद्भवस्य "टङ्कपाश-ध्वजाब्जानि धारयन् पुष्करोद्भवः ।
४७अक्षिनीपतेः "पलाशपत्रपाशाब्जध्वजहस्तोऽक्षिनीपतिः" ।
४८व्यक्तमूर्त्तेः "अम्बु-बीज-ध्वजा-ब्जाक्षपाणियुग् व्यक्तमूर्त्तिकः" ।
४९विश्वगस्य "परिघाक्षध्वजाब्जानि धारयन् विश्वगो मतः । सर्व्वे चतुर्भुजा ज्ञेया युवानः कुञ्चितभ्रुवः । सव्योर्द्ध्वादुत्तरोर्द्ध्वं क्रमेणायुधधारिणः । रक्ताम्बरा महावीर्याः सर्व्वभूषणभूषिताः । मृगवाहा मृगारूढाः सर्व्वे ते शबलांशुकाः । इति तेऽत्र समाख्याता शुभदास्तु मरुद्गणाः । संख्ययैकोनपञ्चाशत् सर्व्वरोगापनुत्तये" । स्कन्दपुरा०

साध्यानां ब्रह्माण्डपुराणे "साध्याः पद्मासनगताः कमण्डलु-
लसत्करिणः । धर्मसुता महात्मानो द्वादशामरपूजिताः"
विष्णुधर्मोत्तरे "मनोऽनुमन्ता प्राणश्च नरयानश्च वीर्यवान् ।
चित्तिर्हयो, नयश्चैव हंसो नारायणस्तथा । प्रभवो वि-
भुश्चैव साध्या द्वादश जज्ञिरे" ।
अश्विनोः "पद्मपत्रसवर्णाभौ पद्मपत्रसमाम्बरौ । द्विभुजौ देव-
भिषजौ कर्तव्यौ देहसंयुतौ । सर्वाभरणसम्पन्नौ विशे-
षाद्वारुलोचनौ । तयोरौषधयः कार्या दिव्या दक्षिण-
हस्तयोः । वामयोः पुस्तके कार्ये दर्शनीये तथा नृप ! ।
एकस्य दक्षिणे पार्श्वे वामे चान्यस्य यादव ! । नारीयुगं
प्रकर्तव्यं सुरूपञ्चारुदर्शनम् । तयोश्च नामनी प्रोक्ते
रूपसम्पत् तथाकृतिः । मधूकपुष्पसङ्काशा रूपसम्पत् प्रकी-
र्तिता । आकृतिः कथिता लोके शरकाण्डनिभा तथा ।
रक्तभाण्डकरे कार्ये चन्द्रशुक्लाम्बरे तथा" ।
रेवन्तस्य "हयस्थः सूर्यवत् कार्यो रेवन्तश्च तथा प्रभुः" ।
यक्षाणां मयसंग्रहे "तुन्दिला द्विभुजाः कार्या निधि-
हस्ता मदोत्कटाः । गदी वैश्रवणः प्रोक्तो नृपालस्त-
दमो वरः । सिद्धार्थो मणिभद्रश्च सुमना नन्दनो
यशाः । कण्डूतिः पाञ्चकः शङ्खो मणिमान् पद्म-
रामकौ । सर्वभोजी पिङ्गाक्षश्चतुरो मन्दराश्रयः ।
शुभ्रचन्द्रप्रद्योतमेघवर्णजयावहाः । द्युतिमान् केतुमान्
श्रेतोमौलिमान् विजयाकृतिः । पद्मवर्ण-महापाश-प-
ञ्चदन्ताः सुदर्शनाः । पूर्णमास-हिरण्याक्ष-गतजिह्व
बलाहकाः । बलार्कविपुलौ पद्मनाभः कुमुदशीरकौ ।
सुगन्ध दत्यमी यक्षास्तेषां राजा धनाधिपः" ।
राक्षसादीनां मयदीपिकायाम् "रक्तवस्त्रधराः कृष्णा
मत्स्यदीर्घाः सदंष्ट्रिकाः । कर्त्तिखट्वाङ्गहस्ताश्च राक्षसा
घोररूपिणः । हेतिः प्रहेतिः यज्ञघ्नः शङ्कुश्च शनिब-
न्धनः । विद्युत्सर्जनतुण्डादपौरुषेयसुकेशिनः । उग्र-
माल्योत्क्रमौ प्रोक्ताः प्रधाना राक्षसाः शिव । भूता-
स्तथैव दानाश्च दीर्घश्मश्रुः पिशाचकाः" ।
गन्धर्वरूपमाह विश्वकर्मा "वरदो भक्तलोकानां किरीटी
कुण्डली गदी । कार्यस्तु रूपी गन्धर्वो वीणावाद्य-
रतस्तथा" ।
वासुकेस्तत्रैव "अनन्तो रक्तकायश्च सितपङ्कजमालिकः । शत-
सहस्रभोगोऽहिः शिरःकुवलयान्वितः" ।
तक्षकादिनागरूपमाह मयः "श्वेतदेहश्च कर्तव्यः स्फुरन्मौ-
क्तिकसन्निभः । रक्ताङ्कः स्वस्तिकोपेतः शतेशाङ्कयुतो
महान् । कृष्णः कर्कोटक कण्ठे शुक्लरेखात्रयान्वितः ।
रक्तपद्मनिभः पद्मः शिरःशुक्लः सविद्रुमः । शङ्खवर्णो
महापद्मो मस्तके कृष्णशूलधृक् । हेमाभः शङ्खपालः
स्यात् सितरेखाधरो गले । कुलिको रक्तदेहस्तु चन्द्रा-
र्द्धकृतमस्तकः । द्विजिह्वा वाङ्मयत्सप्तफणामणिसम-
न्विताः । अक्षसूत्रधराः सर्वे कुण्डलापुच्छसंयुताः ।
एकभोगास्त्रिभोगाश्च द्रोतव्यालाः सुतार्थिनः" ।
पितॄणाम् विष्णुधर्मोत्तरे "कुशपद्मविष्टरस्थाः पितरः पिण्ड-
पाणिनः" । ते च वायुपुराणोक्ता यथा
"आभास्वरा बर्हिषदो अग्निष्वात्तास्तथैव च । क्रव्यादाः
सोमपाश्चैव आज्यपाश्च सुकालिनः" ।
विश्वदेवानाम् "क्रतुर्दक्षो वसुः सत्यः कालको धुरिलोचनौ ।
पुरूरवा माद्रवाश्च विश्वे देवा दश स्मृताः । विदेहास्तु
प्रकर्तव्या दक्षिणे वाणपाणयः । कर्तव्या वामभागे
तु शरासनपरायणाः" ।
प्रहरणादिस्वरूपाण्यपि तत्र विश्वकर्मोक्तानि यथा
"षट्त्रिंशदङ्गुलो खड्गशक्ती तालाधिकौ मतौ । शूल-
पाशौ पद्मशङ्खौ तालमात्रौ प्रकीर्तितौ । गदा द्वि
ताला पाशश्च गोलकोऽष्टप्रमाणतः । वाणो द्वितालको
दण्डो द्विगुणो द्वादशाङ्गुलः । कपालं पङ्कजं चर्म पाशं
खड्गोऽङ्गुलो मतः । डमरुस्तुलना घण्टा छुरिका
षोडशाङ्गुला । वज्रं तत् पुरुषस्थूलं पट्टिशोऽतिदृढो
बली । शक्तिस्तु योषिदाकारा लोहिताङ्गी दृकान्विता ।
दण्डोऽपि पुरुषः कृष्णो घोरो लोहितलोचनः ।
खड्गश्च पुरुषः श्यामशरीरः क्रुद्धलोचनः । पाशः
सप्तफणः सर्पपुरुषः पुच्छसंयुतः । ध्वजस्तु पुरुषः पीतो
व्यात्तास्यो महाबलः । गदा पीतप्रभा कन्या सुपीन-
जघनस्तना । त्रिशूलं पुरुषो दिव्यः भ्रूः श्यामकले-
वरः । शङ्खोऽपि पुरुषो दिव्यः शुक्लाङ्गः शुभलोचनः ।
हेतिर्बकृतिश्च सा स्त्री भिन्दिः श्यामतनुः पुमान् । शरः
स्यात् पुरुषो दिव्यो रक्ताङ्गो दिव्यलोचनः । चक्रः स्त्री
पद्मरक्ताभा मूर्ध्नि पूरितचापभृत् । एवमस्त्राणि भूतानि
जानीयात् परमेश्वरे । शस्त्राणां चैव सर्वेषां मूर्ध्नि स्वायु-
धलाञ्छनम् । भुजौ द्वौ तु प्रकर्तव्यौ लाञ्छनौ सदा
बुधैः" ।
धर्मज्ञानवैराग्यैश्वर्याणाम् "धर्मं ज्ञानं च वैराग्यमैश्वर्यं च
तथैव हि । सितरक्तपीतकृष्णसिंहरूपाः प्रकीर्तिताः" ।
पृथ्व्याः विष्णुधर्मोत्तरे "शुक्लवर्णा मही कार्या दिव्याभर-

सभूषिता । चतुर्भुजा सौम्यवपुश्चन्द्रांशुसदृशाम्बरा । रत्नपात्रं शस्यपात्रं पात्रमोषधिसंयुतम् । पद्मं करे च कर्त्तव्यं भुवो यादवनन्दन ! । दिग्गजानां चतुर्णाञ्च कार्या पृष्ठगता तथा । सर्वौषधियुता देवी शुक्लवर्णा ततः स्मृता” ।

लवणोदस्य “लवणोदः प्रकर्त्तव्यो द्विभुजः सर्वसिद्धये । धत्तेऽक्षमालिकां दक्षे वामे पात्रं तु रत्नभृत् । सोत्तरीयो यवनी च पाटलाभः सुवस्त्रधृक् । वह्निःपवित्रपाणिस्तु लाभदो भूतिसम्भृतः” ।

क्षीरोदस्य “क्षीरोदः श्वेतवर्णस्तु द्विभुजो रत्नकुण्डलः । मकरस्थोऽम्बुजं दक्षे वामे तु कलशं दधत्” ।

दधिमण्डोदस्य “दधिमण्डोद एवात्र विज्ञेयो वारिजासनः । दण्डं शङ्खं च बिभ्राणो द्विभुजोऽसौ जटायुतः” ।

घृतोदस्य “घृतोदः कपिलो ज्ञेयः कुलीरस्थो जटाधरः । कपोतपीतं पात्रञ्च घटं बिभ्रत्तु दोर्द्वये” ।

इक्षूदस्य “इक्षुदोऽत्र प्रकर्त्तव्यो गोमूत्रसदृशच्छविः । दर्दुरस्थो घटं दण्डं बिभ्राणो नीलकुण्डलः” ।

सुरोदस्य “सुरोदो गण्डकान्तस्थो ज्ञेयो गोमेदसन्निभः । मुद्गरं कुण्डिकां बिभ्रत् द्विभुजो भूतिवर्द्धनः” ।

स्वादूदस्य “स्वादूदो मौक्तिकाभासो दर्दुरस्थो सुवेशधृक् । मुक्तास्रजं पात्रे च धारयन् सर्पभूषणः । वैदूर्यसदृशाः सर्वे द्विभुजाः कलशान्विताः । पङ्कजस्थाः प्रकर्त्तव्याः देवतास्नपनाय तु” ।

द्वीपादीनाम् विष्णुधर्म्मोत्तरात् “द्वीपपर्व्वतगाः सर्वे कामरूपधरा यतः । प्रेक्षायुधान्विताः कार्य्याः स्वस्वचिह्नधरा नराः” ।

दिशाम् “पूर्व्वा१ गजगता बाला रक्तवर्णा तु दिग् भवेत् । पङ्कजस्था प्रतिज्ञेया करेणुकृतहस्तका । वृहद्वक्षा वृहत्काया पद्माभा पूर्व्वदक्षिणा२ । रथस्था दक्षिणा३ पीता तथा स्यात् प्राप्तयौवना । उष्ट्रगा कृष्णपीता च तरुणी याम्यपश्चिमा४ । यौवनाद्विच्युता कृष्णा पश्चिमा५ तुरगस्थिता । व्याघ्ररूपस्थिता नीला मृगगा तदनन्तरा६ । श्वेता नरगता वृद्धा तथा भवति चोत्तरा७ । अतिवृद्धा वृषस्था च शुक्ला पूर्व्वोत्तराद भवेत् । अधस्तात्९ पृथिवीतुल्या चोर्द्ध्वा१० गगनसन्निभा” ।

१दिक्पतीनाम् तत्रेन्द्रस्य “चतुर्द्दन्ते गजे शक्रः श्वेतः कार्य्यः सुरेश्वरः । वामोत्सङ्गगता कार्य्या तस्य भार्य्या शची नृप ! । नीलवस्त्रा सुवर्णाभा सर्व्वाभरणभूषिता । तिर्य्यग् ललाटकस्थाक्षः कर्णैश्च विभूषितः । चतुर्भुजः कार्य्यो द्विभुजा च तथा शची । पद्माङ्कुशौ च कर्त्तव्यौ वामदक्षिणहस्तयोः । वामं शचीपृष्ठगतं द्वितीयं वज्रसंयुतम् । वामे शच्याः करे कार्य्या रम्याः सन्तानमञ्जरी । दक्षिणं पृष्ठविन्यस्तं देवराजस्य कारयेत्” ।

२अग्नेः “रक्तं जटाधरं वह्निं कारयेद्धूम्रवाससम् । ज्वालामालाकुलं सौम्यं त्रिनेत्रं श्मश्रुधारिणम् । चतुर्बाहुं चतुर्दंष्ट्रं देवेशं वायुसारथिम् । चतुर्भिश्च शुकैर्युक्ते धूमचिह्नरथे स्थितम् । वामोत्सङ्गगता स्वाहा शक्रस्येव शची भवेत् । रत्नपात्रकरा देवी वह्नेर्दक्षिणहस्तयोः । ज्वालात्रिशूले कर्त्तव्ये त्वक्षमाल्यश्च वामके” ।

३यमस्य “सजलाम्बुदसच्छायः तप्तचामीकराम्बरः । महिषस्थश्च कर्त्तव्यः सर्व्वाभरणवान् यमः । नीलोत्पलाभां धूम्रोर्णां वामोत्सङ्गे च कारयेत् । धूम्रोर्णा द्विभुजा कार्य्या यमः कार्य्यश्चतुर्भुजः । दण्डखड्गावुभौ कार्य्यौ यमदक्षिणहस्तयोः । ज्वाला त्रिशूला कर्त्तव्या त्वक्षमाला च वामके । दण्डोपरि मुखं कार्य्यं ज्वालामालाविभूषणम् । धूम्रोर्णादक्षिणः) हस्तो यमपृष्ठगतो भवेत् । वामे तस्याः करे कार्य्यं मातुलाङ्गं सुदर्शनम् । पार्श्वे तु दक्षिणे तस्य चित्रगुप्तं तु कारयेत् । आपोच्यवेशं स्वाकारं द्विभुजं सौम्यदर्शनम् । दक्षिणे लेखनी तस्य वामे पत्रं तु कारयेत् । वामे पाशधरः कार्य्यः कालो विकटदर्शनः” ।

४निर्ऋतेः “विरूपाक्षो विवृत्ताक्षः प्रांशुदंष्ट्रोज्ज्वलाननः । ऊर्द्ध्वकेशो खरस्थश्च द्विबाहुर्भीषणाननः । कर्णेन कृष्णरक्ताङ्गः कृष्णाम्बरधरस्तथा । सर्व्वाभरणवान् दंष्ट्रासङ्गदंष्ट्रधरस्तथा । भार्य्याश्चतस्रः कर्त्तव्या देवी च निर्ऋतिस्तथा । कृष्णाङ्गी कृष्णवदना पाशहस्ता तु वामतः” ।

५वरुणस्य “सप्तहंसे रथे कार्य्यो वरुणो यादसाम्पतिः । स्निग्धवैदूर्य्यसंकाशः श्वेताम्बरधरस्तथा । किञ्चित्प्रलम्बजठरो मुक्ताहारविभूषितः । सर्व्वाभरणवान् राजन् ! महादेवश्चतुर्भुजः । वामभागगतं केतुं मकरं तस्य कारयेत् । छत्रं तु सुचितं मूर्द्ध्नि भार्य्या सर्व्वाङ्गसुन्दरी । वामोत्सङ्गगता कार्य्या सम्यक् तु द्विभुजा नृप ! । उत्पलं कारयेत् वामे दक्षिणे देवपृष्ठगम् । पद्मपाशौ करे कार्य्यौ देवदक्षिणहस्तयोः । शङ्खञ्च रत्नपात्रञ्च वामयोस्तस्य कारयेत् । भागे तु दक्षिणे गङ्गा मकरस्था चामरा । देवी पद्मकरा कार्य्या चन्द्रगौरी वरानना । वामे तु

यमुना कार्या कूर्मसंस्था सचामरा । नीलोत्पलकरा
सौम्या नीलनीरजसन्निभा" ।
वायोः "वायुरम्बरवर्णस्तु तदाकाराम्बरो भवेत् । कामपू-
रितवक्रस्तु द्विभुजो रूपसंयुतः । गमनेच्छुः शिवा
भार्या तस्य कार्या च वामतः । कार्यौ गृहीतवक्राङ्कः
कराभ्यां पवनो द्विजः । तथैव देवी कर्त्तव्या शिवा
परमसुन्दरी । व्यावृतास्यस्तथा कार्यो देवोव्याकुल-
मूर्द्धजः" ।
धनदस्य विष्णुधर्म्मोत्तरात् "कर्त्तव्यः पद्मपत्राभो वरदो नर-
वाहनः । चामीकराभो वरदः सर्व्वाभरणभूषितः । ल-
म्बोदरश्चतुर्बाहुर्वामपिङ्गललोचनः । आपीच्यवेषः कवची
हारधारी मनोहरः । द्वे च दंष्ट्रे मुखे तस्य कर्त्तव्ये
श्मश्रुधारिणः । वामेन विभवा कार्या मौलिस्तस्यारि-
मर्द्दन ! । वामोत्सङ्गगता कार्या ऋद्धिर्देवी वरप्रदा ।
देवपृष्ठगतं पाणिं द्विभुजायास्तु दक्षिणम् । रत्नपात्र-
धरं कुर्य्यात् वामं रिपुनिसूदन ! । गदायत्तौ च कर्त्तव्ये
तस्य दक्षिणहस्तयोः । सिंहार्कलक्षणं केतुं, शिविका-
मपि पादयोः । शङ्खपद्मनिधी कार्यौ सरूपौ निधि
संस्थितौ । शङ्खपद्माञ्जलिकान्तं वदनं तस्य पार्श्वयोः"
आकाशस्य "नीलोत्पलाभं गगनं तद्वर्णाम्बरधारि च ।
चन्द्रार्कहस्तं कर्त्तव्यं द्विभुजं सौम्यदर्शनम्" ।
व्योम्नः "चतुरस्रं भवेन्मूलं ततो वृत्तं महाभुज ! । तन्मध्ये
चतुरस्रस्य मेरुवत् संस्थितं शुभम् । भद्रपीठमयः प्रोक्तो
व्योमभागस्तृतीयकः । चतुरश्चतुरस्रस्य मध्यभागः
प्रकीर्त्तितः । भद्रपीठवदन्यच्च तत्र पद्मं निवेशयेत् । शु-
भाष्टपत्रं तन्मध्ये कर्णिकायां दिवाकरः । पत्राष्टके
न्यसेत्तस्य दिक्पालान् सर्व्वतोदिशः" ।
ध्रुवस्य "विष्णुरूपधरः कार्यो ध्रुवो ग्रहगणेश्वरः । चक्र
रश्मिकरः श्रीमान् द्विभुजः सौम्यदर्शनः" ।
रवेः मत्स्यपुराणात् "रविः कार्यः शुभस्कन्धः सिन्दूरारुण-
सुप्रभः । आपीच्यवेषः स्वाकारः सर्व्वाभरणभूषितः । चतु-
र्बाहुर्महातेजा कवचेनाभिसंवृतः । कर्त्तव्या रशना चास्य
यामीयाङ्गेति संज्ञिता । रक्तयुक्तस्य कर्त्तव्या वामद-
क्षिणहस्तयोः । अङ्गे अग्नदामसंस्थाना सर्व्वपुष्पचिता
शुभा । खड्गपद्मः स्वाकारो दण्डः कार्योऽस्य वामतः ।
दक्षिणे पिङ्गले भागे कर्त्तव्यश्चातिपिङ्गलः । आपीच्य-
वेषौ कर्त्तव्यौ तावुभावपि यादव ! । तयोर्मूर्ध्नि च वि-
न्यस्तौ करौ कार्यौ विभावसोः । लेखनीपत्रके कार्ये
पिङ्गलस्यातिपिङ्गलः । धर्म्मस्तुलधरो देवस्तथा यत्राधि-
धीयते । सिंहो ध्वजश्च कर्त्तव्यस्तथा सूर्यस्य वामतः ।
चत्वारश्चास्य कर्त्तव्यास्तमयास्तस्य पार्श्वयोः । रेवन्तश्च यम-
श्चैव मनुद्वितयमेव च । ग्रहराजो रविः कार्यो ग्र-
हैर्व्वै परिवारितः । राज्ञी सवर्णा छाया च तथा देवी
सुवर्च्चसा । चतस्रश्चास्य कर्त्तव्याः पत्न्यश्च परिपार्श्वयोः ।
एकचक्रे च सप्ताश्वे षडश्वे वा रथोत्तमे । रूपयिस्तु
कर्त्तव्यो देवोऽप्यरुणसारथिः" ।
विष्णुधर्म्मोत्तरे तु "पद्मासनः पद्मकरः पद्मगर्भदलद्युतिः ।
सप्ताश्वरथसंस्थश्च द्विभुजश्च सदागतिः" ।
चन्द्रस्य मत्स्यपुराणे "चन्द्रः श्वेतवपुः कार्यः श्वेताम्बरधरः
प्रभुः । चतुर्बाहुर्महातेजाः सर्व्वाभरणभूषितः । कुमुदौ
च सितौ कार्यौ तस्य देवस्य हस्तयोः । कान्तिर्मूर्त्ति-
मती कार्या तस्य पार्श्वे तु दक्षिणे । वामे शोभा तथा
कार्या रूपेणाप्रतिमा भुवि । चिह्नं तथास्य सिंहाङ्कं
वामपार्श्वेऽङ्कयेद्भवेत् ! । दशाश्वे च रथे कार्योद्विचक्रे
वरसारथौ" । विष्णुधर्म्मोत्तरे तु
"श्वेतः श्वेताम्बरधरः श्वेताश्वः श्वेतभूषणः । गदापाणि-
र्द्विबाहुश्च कर्त्तव्यो वरदः शशी" ।
भौमस्य मत्स्यपुराणात् "भौमोऽग्नितुल्यः कर्त्तव्यस्त्वष्टाश्वे
काञ्चने रथे" । विष्णुधर्म्मोत्तरे
"रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः । चतुर्भुजो
मेषगमो वरदः स्याद्धरासुतः" ।
बुधस्य "विष्णुतुल्यो बुधः कार्यो भौमतुल्ये तथा रथे" ।
"गुरोः "तप्तजाम्बूनदाकारो द्विभुजश्च बृहस्पतिः । पुस्तकं
चाक्षमालाञ्च करयोस्तस्य कारयेत् । सर्व्वाभरणयुक्तश्च
तथा पीताम्बरो गुरुः" ।
शुक्रस्य "अष्टाश्वे काञ्चने दिव्ये रथे दृष्टिमनोरमे । शुक्रः
श्वेतवपुः कार्यः श्वेताम्बरधरस्तथा । द्वौ करौ कथितौ
तस्य निधिपुस्तकसंयुतौ । दशाश्वे वा रथे कार्यो राजते
भृगुनन्दनः" ।
शनेः "कृष्णवासास्तथा कृष्णः शनिः कार्योऽसिताननः । दण्डा-
क्षमालासंयुक्तः करद्वितयभूषणः । कार्ष्णायसे रथे
कार्यस्तथैवाष्टतरङ्गमे" ।
राहोः "रौप्ये रथे तथाष्टाश्वे राहुः कार्यो विचक्षणैः ।
कम्बलं पुस्तकं कार्यं भुजेनैकेन संयुतम् । करमेकन्तु
कुर्व्वीत वक्षशून्यन्तु दक्षिणम्" ।
केतोः "विश्वकर्म्मशास्त्रात् "भौमवच्च तथा रूपं केतोः कार्यं

अक्षयजभजद्वन्द्वो भूषितः परिकीर्तितः"। तुलायां मध्विषः
चित्रायाः "व्याघ्राख्या महिषारूढा चित्रा गौरी चतुर्भुजा। अक्षसूत्रकुण्डी सपुस्ती च सुधापूर्णघटान्विता"।
स्वात्याः "महिषस्था सृगारूढा गौरी श्यामाथवा मता। पीना चतुर्भुजा स्वात्याख्याङ्कुशध्वजपाशिनी"।
विशाखायाः "सूर्यवदना रक्ता नाभिपादान्तहेमभा। मेषव्याघ्रगस्थिता सेयं विशाखाङ्कुशवर्जिणी। वामे, शक्तिमधः पात्रं बिभ्राणा हेमभूषणा"।
अनुराधायाः "हरिस्था च विडालाख्या द्विभुजाम्बुजविजयी। मूर्धादिनाभिपादान्तश्यामगौरी क्रमेण तु। अनुराधा परिज्ञेया पद्मरागविभूषणा"।
ज्येष्ठायाः "पीतवर्णा गजारूढा भल्लाख्या वा सृगानना। अक्षसूत्रं पविश्चन्ते वामे ज्येष्ठाङ्कुशं भवे"।
मूलस्य "मूलरूपं विधातव्यं श्यामं कुणपवाहनम्। खड्गखेटधरं सौम्यं द्विभुजञ्च श्वाननम्"।
पूर्वाषाढायाः "कुक्कीरवदना नीला मर्कटस्था चतुर्भुजा। अक्षसूत्रं कलं पाशं पात्रं या बिभ्रती सदा। पूर्वाषाढा समुद्दिष्टा पीतवस्त्राजभूषणा"।
उत्तराषाढायाः "अपरा चोत्तराषाढा गौरवर्णा सुकपिणी। नागबद्धजटाजूट-स्वर्णकुण्डलभूषिता। अक्ष नागधरा दक्षे वामे पुस्ती सकुण्डिका"।
अभिजितः "अभिजित् कुमुदाभासा नक्रवक्त्रा तु हंसगा। वरस्रुक्पुस्तकाभीतिसंयुतेयं चतुर्भुजा"।
श्रवणस्य "नीलकक्ष तुरगारूढः श्रवणो मर्कटाननः। शङ्खचक्रगदाब्जानि बिभ्राणः स्वर्णभूषणः"।
धनिष्ठायाः "तप्तचामीकराभासा निधिस्था पङ्कजासना। पक्वबिम्बाधरा तन्वी पीनोन्नतपयोधरा। दीर्घवेणी सपुष्पा सा मौक्तिकाभरणान्विता। चारुनेत्रा सुवेषाढ्या द्विभुजा वसनावृता। वराभयान्विता सौम्या धनिष्ठा परिकीर्तिता"।
शततारायाः "शुभ्रा मकरमाऽश्वाख्या द्विभुजा पाशपाणिनी। पाटला वस्त्रसंयुक्ता कीर्तिता शततारका"।
पूर्वभाद्रपदायाः "पूर्वा भाद्रपदा शुभ्रा गोवक्त्रा छागगामिनी। मेषशीर्षधरा सेयं सीधुपात्रञ्च बिभ्रती"।
उत्तरभाद्रपदायाः "गर्दभाख्या वृषारूढा सिता भाद्रपदोत्तरा। पात्रञ्च डमरुञ्चन्ते द्विभुजेयमुदीरिता"।
रेवत्याः "रेवती करभाख्या स्यात् द्विभुजा हरिणगामिनी। कमलं कुण्डिकां धत्ते श्वेतवर्णा सुखासना"।

योगानां विष्कुम्भस्य "विष्कुम्भः प्रथमो ज्ञेयः पीतवर्णस्तु षड्भुजः। रक्ताक्षो नीलकण्ठस्तु हस्तनेत्रः शुभीषणः। विशालभालो दीर्घाक्षस्तुङ्गनासो जटाधरः। स्वर्णकर्णेन्द्रनीलोत्थस्वर्णरत्नजकुण्डलः। शुभ्रनीलेन्द्रगोपाभवसनः स्वर्णभूषणः। मुद्गरं प्रथमे दक्षे द्वितीये कर्त्तरीमिव। तृतीये कुलिशं पाणौ वामाद्ये टङ्कमेव च। शेतपुष्पं द्वितीये च तृतीये चामृतं घटम्। बिभ्राणः पूजनीयोऽयं पीतपुष्पैः सुगन्धिभिः। कार्यनिष्पत्तये नूनमन्यथा विघ्नदायकः"।
प्रीतेः "प्रीतिनामा द्वितीयस्तु जवाकुसुमसन्निभः। श्वेताक्षो विशालाक्षो लम्बकर्णेन्दुकुण्डलः। भालेऽसितिलकोपेतः सौम्यो मुक्ताविभूषणः। श्वेतवस्त्रो जटामौलिरष्टबाहुर्लम्बोदरः। बन्धुजीवोत्थपुष्पाढ्यमल्लिकामाल्यमेव च। द्वितीये मोदकं पाणौ तृतीये कदलीफलम्। चतुर्थे पङ्कजञ्चैव वामाद्ये चामृतं घटम्। द्वितीये चाल वै पात्रं सोमपूर्णं मनोहरम्। तृतीये कुलिशं हस्ते चतुर्थे चाल वैध्वजम्। दधानो भूतये प्रीत्यै सर्वतापनिवृत्तये"।
आयुष्मतः "आयुष्मांस्तु तृतीयोऽयं मौक्तिकाभोऽरुणोदरः। सौमवस्त्रान्वितश्चैव मुक्तासौवर्णभूषणः। दशभुजः प्रथमे दक्षे चाजसूत्रञ्च मौक्तिकम्। दूर्वाभञ्च द्वितीये तु तृतीये चूतपल्लवम्। चतुर्थे पङ्कजञ्चैव पञ्चमे चातपत्रकम्। सुधाकुम्भन्तु वामाद्ये बीजपूरपिधानकम्। पात्रं दध्यन्नतोपेतं द्वितीये करपल्लवे। तृतीये श्रीफलं हस्ते चतुर्थे पवित्रमेव च। पञ्चमे चामरं हस्ते स्वर्णदण्डविभूषितं शुभम्। धारयन्नेप वै पूज्यो भोगायुष्यविवृद्धये"।
सौभाग्यस्य "सौभाग्याख्यश्चतुर्थोऽयं स्फटिकाभस्त्रिलोचनः। स्वर्णाक्षो महामत्तः सुन्दरः कुसुदाम्बरः। दशबाहुरयञ्चार्को (वमे)प्रथमे श्रीफलं करे। कक्षसूत्रं प्रवालोत्थं द्वितीये करपल्लवे। तृतीये कमलं हस्ते चतुर्थे नागवारकम्। पञ्चमे शक्तिमत्रैव यामाद्ये पात्रमेव च। द्वितीये चामृतं कुम्भं तृतीये तु प्रशीर्षकम्। चतुर्थे दर्पणं हस्ते वेणुदण्डञ्च पञ्चमे। बिभ्राणः सौम्य सौभाग्यवृद्धये चायुषे श्रिये"। (पूजनीय इति शेष)
शोभनस्य "शोभनः पञ्चमो योगः श्वेतवक्त्रो वणी बली। गोवाहनः कनाकुम्भ प्रवालकृतकुण्डलः। शोणपुष्पाम्बरश्चैव मुक्ताविद्रुमभूषणः। अक्षसूत्रं सुवर्णोत्थं प्रथमे दक्षिणे करे। द्वितीये पङ्कजं हस्ते तृतीये श्रीफलं शुभे। तुर्ये शक्तिं कराम्भोजे वामाद्ये वै कमण्डलुम्।

द्वितीये स्वर्णजं पात्रं तृतीये चैव दर्पणम् । चतुर्थे चामरं पाणौ धारयन्नष्टदोरिति । पूजनीयो महाभक्त्या सौख्यसौभाग्यवृद्धये" ।

अतिगण्डस्य "अतिगण्डाभिधस्याथ षष्ठो योगः प्रतीयते । गण्डाह्वयाश्रितः क्रूरः कण्ठयष्ट्योऽर्कभूषणः । स्थूलो विकृष्णस्तुङ्गनासिकोऽरुणभूषणः । पिङ्गश्मश्रुजटामौलिः षड्भुजः कटिसूत्रवान् । अग्रस्थं यमादिस्थे लोहजं करपल्लवे । एणं खड्गं द्वितीये च तृतीये चैव वारिजम् । पात्रं वामादिमे पाणौ द्वितीये शक्तिमेव च । पताकान्तु तृतीये वै दधानः कण्ठलोहिताम् । पूजनीयो महाभक्त्या दुष्टभीतिनिवृत्तये" ।

सुकर्मणः "चतुर्भुजः सुकर्मा वै श्वेतवाङ्गदरस्मृतिः । नीलशुभ्रांशुकोपेतः स्वर्णनीलविभूषणः रुद्राक्षमालिकामाली (यमे दक्षे) प्रथमे करपल्लवे । द्वितीये कमलं पाणौ वामादौ दण्डमेव च । पताकामत्र वै हस्ते द्वितीये सुमनोहरा । बिभ्रत्सु हृदये नृणां कर्मारम्भशुभप्रदः" ।

धृतेः "धृत्याख्यश्चाष्टमो योगः कथ्यते वसुबाहुकः । भालारुणस्तु सर्वाङ्गे श्वेतवर्णोऽरुणाम्बरः । स्वर्णमुक्तेन्द्रनीलाढ्यो विद्रुमान्वितभूषणः । मुक्ताक्षमालिकां दक्षे प्रथमे रत्नमुद्रिके । द्वितीये श्रीफलं पाणौ तृतीयेऽशोकपल्लवम् । चतुर्थे हेमजं दण्डं वामाद्ये वै कमण्डलुम् । द्वितीये चाक्षतं पात्रं तृतीये चाम्बुजं करे । पताकामत्र वै तुर्ये बिभ्राणः श्रीविवृद्धये" ।

शूलस्य "नवमः शूलनामाथ कथ्यते व्यक्तभागतः । ताम्रारुणगलश्चैव श्वेतवर्णः कृशोदरः । भालनेत्रालयश्चैव त्रिजटो नीलकुन्तलः । अर्कहस्तो यमादिस्थे त्रिशूलं चातिनीपणम् । द्वितीये मुद्गरं पाणौ तृतीये चाक्षसूत्रकम् । चतुर्थे खट्वाङ्गमत्र पञ्चमे दण्डमेव च । षष्ठे चैवाम्बुजं पाणौ कपालं चोत्तरादिमे । टङ्कं द्वितीयके चैव तृतीये वै कमण्डलुम् । घन्टांशस्तु करे तुर्ये पञ्चमे चैव दर्पणम् । पताकामत्र वै षष्ठे धारयन्नेव पूजितः । भवेदनिष्टनाशाय वैरिविध्वस्तये नृणाम्" ।

गण्डस्य "गण्डाख्यः कथ्यते योगो दशमः सोऽयमत्र हि । गण्डः शुभ्रारुणाङ्गस्तु षड्भुजो मेचकाम्बरः । हरिन्मणिविभूषाढ्यो नीलविद्रुमकुण्डलः । अग्रस्थं यमादिस्थे द्वितीये चन्द्रहासकम् । तृतीये वारिजं नील वामाद्ये वै कमण्डलुम् । द्वितीये खेटकं हस्ते पताकाञ्च तृतीयके । दधानो लक्ष्मस्तुष्ट्यै रोगानिष्टनिवृत्तये" ।

वृद्धेः "एकादशस्तु वृद्ध्याख्यः कथ्यते रुद्रचन्द्रदोः । पादारुणोऽपरः श्वेतो भालविस्तीर्णमण्डलः । पीतवस्त्रसमोपेतो मुक्तासौवर्णभूषणः । अग्रस्थं यमादिस्थे द्वितीये चाक्षतं घटम् । तृतीये मन्दकं पाणौ चतुर्थे बाणमेव च । पञ्चमे मुद्गरञ्चैव षष्ठे सन्दंशमेव च । सप्तमे कम्बुमत्रैव पङ्कजञ्चाष्टमे शये । कुण्डिकामादिमे वामे द्वितीये पात्रमेव च । तृतीये खेटकं हस्ते चतुर्थे चैव कार्मुकम् । पञ्चमे टङ्कमत्रैव षष्ठे चैवाग्निबाणकम् । सप्तमे चापमत्रैव पताकामष्टमे करे । बिभ्राणः श्रेयसो वृद्ध्यै चायुर्गोत्रधनस्य च" ।

ध्रुवस्य "द्वादशो ध्रुवनामा वै योगश्चात्रैव कथ्यते । वक्षःस्थलारुणश्चैव श्वेतसर्वाङ्ग एव च । माञ्जिष्ठवसनोपेतो हेममुक्ताविभूषणः । चतुर्दशभुजोपेतो दक्षिणाद्येऽक्षसूत्रकम् । द्वितीये तु करे खड्गं तृतीये चैव मुद्गरम् । चतुर्थे सायकं हस्ते पञ्चमे चैव पङ्कजम् । षष्ठे मनोहरं शङ्खं सप्तमे चामरं शये । पात्रं सौम्यादिमे पाणौ द्वितीये चैव खेटकम् । टङ्कं तृतीयके हस्ते चतुर्थे चैव कार्मुकम् । पताकामत्र वै हस्ते पञ्चमे वरलक्षणे । षष्ठे मनोहरादर्शं सप्तमे चक्रमादधत् । पूजनीयो महाभक्त्या लक्ष्मीस्थैर्यादिहेतवे" ।

व्याघातस्य "कथ्यते चाधुना योगो व्याघाताख्यस्त्रयोदशः । नाभ्यूर्द्ध्वं लोहितश्चायं श्वेतपूर्वस्त्रिलोचनः । अलश्वेताह्वयमाल्यवसनः स्वर्णकुण्डलः । गले स्फटिकमालोऽसौ शेषरुद्राक्षभूषणः । मणिवक्त्रेऽग्निवर्णस्तु षड्भुजः कुटिलाननः । पङ्कजं प्रथमे दक्षे द्वितीये परशुं शये । तृतीये चात्र वै पाशं वामे पात्रमिहादिमे । द्वितीये चाक्षतं कुम्भं तृतीये चाङ्कुशं शये । बिभ्राणोऽयं महारौद्रः कार्यभङ्गनिवृत्तये" ।

हर्षणस्य "अधुना कथ्यते योगो हर्षणाख्यश्चतुर्दशः । जानूर्द्ध्वं लोहितश्चायं तत्पूर्वं श्वेतएव च । पाटलाभांशुकोपेतो मुक्तावैदूर्यभूषणः । भुजद्वादशकोपेतो लम्बकर्णो विशालदृक् । कौस्तुभं प्रथमे दक्षे द्वितीये चाक्षसूत्रकम् । तृतीये पङ्कजं हस्ते चतुर्थे बाणमेव च । पञ्चमे शङ्खमत्रैव षष्ठे पाशं कराम्बुजे । वामादिमे करे पात्रं द्वितीये चाक्षतं घटम् । तृतीये परशुं हस्ते चतुर्थे चैव कार्मुकम् । पञ्चमे तु करे चक्रं षष्ठे चैवाङ्कुशं शये । बिभ्राणः श्रेयसे भूत्यै साभीष्टायै सुखाय च" ।

वज्रस्य "अथ पञ्चदशो योगः कथ्यते वज्रसंज्ञकः । श्वेताहि-

शार्ङ्गी बिभ्राणः कृष्णग्रीवोऽरुणाननः। रोचनावसनो-पेतो पिङ्गकर्णस्त्रिलोचनः। वज्रवैदूर्यभूषाढ्यः कटि-सूत्रसमन्वितः। जटां बिभ्रत्तथा बिभ्रत् दिग्भुजः प-रितो वर्णी। अक्षसूत्रं यमादिस्थे द्वितीये बाणमेव च। तृतीये पङ्कजं हस्ते चतुर्थे कुलिशं शये। पञ्चमे परशुं पाणौ वामाद्ये चामृतं घटम्। द्वितीये कार्मुकं चैव तृतीये पात्रमुत्तमम्। चतुर्थे कुलिशं चैव पञ्चमे पाशमेव च। बिभ्रद्विजयसौख्याय लक्ष्मीसन्तानवृद्धये"।

सिद्धेः "कथ्यते चाधुना योगः सिद्धिनामा तु षोडशः। पाद-जङ्घारुणश्चोर्द्ध्वं श्वेतवर्णः शुभाननः। दिग्भुजो लो-हितग्रीवो लोहितान्वितमाम्बरः। मुक्ताहारमणि-स्वर्णभूषणः सोमकुण्डलः। श्रीफलं प्रथमे दक्षे द्वितीये चैव पङ्कजम्। तृतीये पुस्तकं हस्ते चतुर्थे बाणमेव च। पञ्चमे च ध्वजं हस्ते वामे पात्रमिहादिमे। द्वितीये चामृतं कुम्भं तृतीये चैव चामरम्। चतुर्थे चैव कोदण्डं पताकामिह पञ्चमे। ददानः सिद्धये नृणां वाञ्छितार्थस्य सिद्धिदः"। (अस्यासृगित्यपरनाम)

व्यतीपातस्य "व्यतीपाताभिधश्चैव योगः सप्तदशस्त्विह। क-ण्ठेन लोहितश्चायं श्वेतग्रीवोऽलिभाननः। शुक्लमा-ल्यवसनो नीलस्वर्णजभूषणः। अष्टादशभुजो रौद्रो भ्रूकुटीकुटिलाननः। दात्रमाद्ये दक्षे हस्ते द्वितीये लोष्ट-भेदनम्। अन्यच्चैव तृतीये तु तुर्ये बाणं मनोहरम्। पञ्चमे शृङ्खलां लौहीं षष्ठे कवचमेव च। सप्तमे मु-द्गरं हस्ते पङ्कजं चाष्टमे करे। कुद्दालं नवमे हस्ते शक्तिं क्रमादिमोत्तरे। पात्रं द्वितीयके चैव स्वर्णकुम्भं तृतीयके। चतुर्थे कार्मुकं पाणौ पञ्चमे कर्त्तिकामिह। मुषलन्तु करे षष्ठे सप्तमे टङ्कमेव च अष्टमे च ध्वजं हस्ते नवमे प्राङ्कुटं शये। ददानो वैरिवर्गस्य ध्वस्तये चैव मृत्यवे। यच्छन्तः पुत्रमत्यर्थं लक्ष्मीभोगसुखाय च"।

वरीयसः "अष्टादशो वरीयांश्च कथ्यते योग उत्तमः। आ-कण्ठशुभ्रवर्णस्तु लोहितग्रीव एव च। श्वेतवक्त्रो वि-शालाक्षो लम्बकर्णोऽर्ककुण्डलः। स्वर्णाभरणभूषाढ्यो लक्षणानेकसंयुतः। अक्षसूत्रं यमादिस्थे द्वितीये बीज-पूरकम्। चन्द्रहासं तृतीये तु तुर्ये बाणं कराम्बुजे। पञ्चमे शङ्खमत्रैव षष्ठे परशुमेव च। सप्तमे मुद्गरं हस्ते चाष्टमे दात्रमेव च। नवमे चात्र वै शृङ्गं दशमे कमलं करे। एकादशे पविञ्चात्र द्वादशे हलमेव च। दण्डं त्रयोदशे हस्ते शक्तिमस्त्रं चतुर्दशे। कलं पञ्च-दशे हस्ते षोडशेऽथ त्रिशूलकम्। षष्ठं वामादिके पाणौ पात्रमत्र द्वितीयके। तृतीये खेटकञ्चैव तुर्ये कार्मुकमेव च। चक्रन्तु पञ्चमे हस्ते षष्ठे चैव कुठारकम्। सप्तमे टङ्कमत्रैव चामरञ्चाष्टमे शये। नवमे डमरुञ्चैव दशमे चात्र वल्लकीम्। एकादशे शृङ्खलाञ्चैव द्वादशे मुषलं शये। त्रयोदशे तु वै पाशं गदामत्र चतुर्दशे। दर्पणं तिथिमे हस्ते ध्वजमत्रैव षोडशे। ददानः श्रेयसे भूत्यै सर्वभोगसुखाय च"।

परिघस्य "एकोनविंशकश्चात्र कथ्यते परिघोऽनघ!। पादजा-न्वन्तशुक्लोऽसौ श्वेतवक्त्रो जटाधरः। मध्यारुणोदरे नीलरेखासंयुत एव च। नीलाम्बरो महासत्त्वो हेम-रत्नजकुण्डलः। सुवर्णभूषणोपेतो षड्भुजः क्रूर-दर्शनः। गदा[illegible]क्याद्मे हस्ते द्वितीये परिघं शये। तृतीये कमलं पाणौ वामाद्ये पात्रमेव च। द्वितीये पट्टिशं हस्ते तृतीये चात्र वै ध्वजम्। बिभ्राणः शत्रु-नाशाय दुष्टभीतिनिवृत्तये"।

शिवस्य "अथ विंशतिमो योगः शिवाख्यश्चात्र कथ्यते। शुभ्रवर्णस्त्रिनेत्रस्तु मौक्तिकाभरणान्वितः। दक्षिणे प्र-थमे हस्ते बीजपूरं मनोहरम्। अक्षसूत्रं द्वितीये च तृतीये कम्बुमेव च। चतुर्थे सायकं हस्ते पञ्चमे चन्द्रहासकम्। मुद्गरञ्च करे षष्ठे सप्तमे परशुं शये। कुद्दालमष्टमे पाणौ नवमे दात्रमेव च। दशमे चात्र वै शृङ्गं पविमेकादशे त्विह। द्वादशे पञ्चशाखां वै लोष्टभेदनमेव च। त्रयोदशे हलञ्चैव शक्तिमस्त्रं चतुर्दशे। करे पञ्चदशे दण्डं षोडशे चाम्बुजं त्विह। शूलं मुनिचन्द्रे (१७) च वसुचन्द्रे (१८) च तोमरम्। वामादिमे शये पात्रं द्वितीये चामृतं घटम्। तृतीये चक्रमत्रैव चतुर्थे वै शरासनम्। पञ्चमे खेटकं हस्ते षष्ठे टङ्कं कराम्बुजे। कुठारं सप्तमे पाणौ प्राङ्कुट-ञ्चाष्टमे त्विह। नवमे चामरं शुभ्रं दशमे डमरुं त्विह। शङ्खमेकादशे हस्ते द्वादशे चैव दर्पणम्। अष्टादशे शये कुन्तं बिभ्राणः शान्तिवृद्धये"। (अत्र त्रयोदशादिसप्त-दशान्तनामहस्तानां चिह्नवाक्यानि मुद्रितपुस्तके पतितानि शिल्पकर्मशास्त्रे द्रष्टव्यानि)।

सिद्धस्य "एकविंशोऽधुना योगः सिद्धनामाभिधीयते। जपा-कुसुमसङ्काशः शुभ्ररेखात्रयोदरः। जटाभिरष्टभिर्युक्तः मुकुटः सार्द्धचन्द्रयुक्। शोणशुभ्रांशुकोपेतः स्फाटि-काभरणान्वितः। बहुपत्रभुजः२८ सौम्यसुस्निग्धः सर्व-

अक्षणः। तोमरञ्चादिमे दद्यात् द्वितीयेऽस्य त्रिशूलकम्। तृतीये पङ्कजं पाणौ तुर्य्ये दण्डं सुवर्णजम्। पञ्चमे तु करे शक्तिं षष्ठे वै लाङ्गलं शये। सप्तमे कुलिशं हस्ते शङ्खमेवैव चाष्टमे। नवमे टालमेवैव दशमे तु परश्वधम्। मुद्गरं रुद्रहस्ते वै द्वादशे चन्द्रहासकम्। त्रयोदशे शये बाणं शङ्खमेव चतुर्दशे। कुम्भं वामादिमे हस्ते द्वितीये डमरुं शये। पाशन्तु नवमे हस्ते दशमे वै कुठारकम्। टङ्कमेकादशे हस्ते द्वादशे चैव खेटकम्। त्रयोदशे शये चापं चक्रमेव चतुर्दशे। धारयन् पूजनीयोऽसौ भोगसौख्यश्रिये जये"। (अत्र तृतीयाद्यष्टमान्तानामङ्कचिह्नवाक्यानि मुद्रितपुस्तके पतितानि विश्वकर्मशास्त्रे दृष्टानि)।

साध्यस्य "साध्यो द्वाविंशकश्चैव कथ्यते योग एव सः। शुभ्रवर्णो विशालाक्षो वह्निरेखगलाननः। कौस्तुभवसनोपेतो वज्रवैदूर्य्यकुण्डलः। वेदबाहुभुजोपेतो मेखलानेकरत्नयुक्। अक्षसूत्रं यमादिस्थे द्वितीये वीजपूरकम्। तृतीये शक्तिमेवैव तुर्य्ये चैव त्रिशूलकम्। पञ्चमे सायकं हस्ते षष्ठे वज्रं कराम्बुजे। सप्तमे पङ्कजं पाणौ दण्डमेवैव चाष्टमे। नवमे तोमरं पाणौ दशमे शक्तिमेव च। एकादशे हलं हस्ते द्वादशे शङ्खमेव च। त्रयोदशे शये खड्गं परशुन्तु चतुर्दशे। करे पञ्चदशे रम्ये मुद्गरं कठिनाकृतौ। षोड़शे टालमेवैव शङ्खं सप्तदशे त्विह। वामादिमे करे कुण्डीं द्वितीये पात्रमेव च। तृतीये चाभयं हस्ते तुर्य्ये डमरुमेव च। पञ्चमे कार्म्मुकं पाणौ षष्ठे चैवाङ्कुशं शये। सप्तमे तु ध्वजं दिव्यमष्टमे पाशमेव च। नवमे कुन्तमेवैव दशमे तु गदामिह। मुसलं रुद्रहस्ते वै द्वादशे चैव चामरम्। त्रयोदशे करे खेटं कुठारन्तु चतुर्दशे। टङ्कं पञ्चदशे पाणौ षोड़शे चैव दर्पणम्। चक्रं सप्तदशे हस्ते दधानः श्रीविवृद्धये"।

शुभस्य "शुभनामा त्रयोविंशो योगश्चात्रैव कथ्यते। नीलकान्तिकशोभास्तु मौक्तिकाभाक्षिलोचनः। शोणरेखाङ्कितग्रीवः शोणशुभ्रांशुकावृतः। मुक्ताविद्रुममाणिक्यभूषणः स्वर्णकुण्डलः। द्वात्रिंशद्बाहुसंयुक्तो जटाकपिलमण्डलः। वरं यमादिमे पाणौ द्वितीये चाक्षसूत्रकम्। तृतीये च त्रिशूलं वै तुर्य्ये बाणं कराम्बुजे। पञ्चमे पङ्कजं चैव षष्ठे कुलिशमेव च। सप्तमे शक्तिमेवैव दण्डं वै चाष्टमे करे। नवमे तोमरं हस्ते दशमे अङ्कुशामिह। हलमेकादशे चैव द्वादशे खड्गमेव हि। टालं त्रयोदशे हस्ते मुद्गरं च चतुर्दशे। शङ्खं पञ्चदशे पाणौ षोड़शे तु परश्वधम्। अभयं चादिमे वामे द्वितीये वै कमण्डलुम्। तृतीये पात्रमेवैव तुर्य्यं कार्म्मुकमेव च। पञ्चमे डमरुं पाणौ षष्ठे चाङ्कुशमेव च। सप्तमे वीजपूरं वै ध्वजं वै चाष्टमे करे। नवमे पानपात्रञ्च दशमे कुन्तमेव च। गदामेकादशे हस्ते द्वादशे चैव खेटकम्। चामरं मध्यमे १२ पाणौ टङ्कमेव चतुर्दशे। चक्रं पञ्चदशे चैव षोड़शे तु कुठारकम्। बिभ्राणो भुक्तये पुंसः सौन्दर्य्याय सुखाय च"।

शुक्रस्य "चतुर्विंशतिमश्चात्र शुक्राख्यः कथ्यतेऽधुना। त्रिशूली लोहितश्यामं चन्द्रगौरस्त्रिलोचनः। जटामुकुटसङ्गेन्दुर्नीलरेखासुधाधरः। बिन्दूरचन्दनोपेतो भालालितिलकाङ्कितः। प्रवालमौक्तिकस्वर्णभूषणः कण्ठकौस्तुभः। खर्व्विंश०बाहुसंयुक्तो रत्नमुद्रासमन्वितः। शूर्पाक्षमालिकां याम्ये प्रथमे करपल्लवे। द्वितीये च त्रिशूलं वै तृतीये बाणमेव च। परश्वधं करे तुर्य्ये पञ्चमे शङ्खमेव च। मुद्गरं चात्र वै षष्ठे सप्तमे टालमेव च। अष्टमे तु करे खड्गं नवमे चैव लाङ्गलम्। दशमे शङ्खमेवैव तोमरं रुद्रसम्मिते। द्वादशे तु करे दण्डं शक्तिमेव त्रयोदशे। चतुर्दशे शये वज्रं करे पञ्चदशे कजम्। वीजपूरन्तु वामाद्ये द्वितीये पात्रमेव च। तृतीये कार्म्मुकं पाणौ तुर्य्ये चैव कुठारकम्। पञ्चमे चक्रमेवैव षष्ठे टङ्कं कराम्बुजे। सप्तमे चामरं पाणौ खेटकं चाष्टमे शये। नवमे तु गदामेव दशमे चाक्षतं घटम्। कुन्तमेकादशे हस्ते द्वादशे पात्रमेव च। त्रयोदशे घण्टिकां चैव दर्पणञ्च चतुर्दशे। ध्वजं पञ्चदशे हस्ते दधानस्तु सुखाय च"।

ब्रह्मणः "पञ्चविंशतिमो योगो ब्रह्मनामा प्रदीयते। शोणोरः पाण्डुराभश्चन्द्रगौरस्त्रिलोचनः। नीलकान्तिकशोभास्तु ग्रीवास्वर्णाक्षिरेखकः। जटात्रयप्रलम्बोऽसौ सौम्यः प्रहसिताननः। ताम्रवर्णांशुकोपेतः कण्ठरुद्राक्षमालिकः। मुक्तामाणिक्यहेमोत्थभूषणः सोमकुण्डलः। विंशद्बाहुभुजोपेतः किङ्किणीजालमेखलः। सौम्याक्षमालिकां दक्षे प्रथमे तलशोभने। द्वितीये तु वरं पाणौ खड्गमत्र त्रयोदशे। हलं चतुर्दशे हस्ते शङ्खं पञ्चदशे त्विह। षोड़शे चैव लोहासिं सुनिरम्ये च तोमरम्। अष्टादशे शये दण्डं शक्तिमेको.

चमे मोदकं हस्ते षष्ठे वज्रं कराम्बुजे । सप्तमे तोमरं पाणौ शक्तिमत्रैव चाष्टमे । नवमे हस्तिदन्तञ्च दशमे चन्द्रहासकम् । एकादशे करे बाणं द्वादशे चाङ्कुशं शये । त्रयोदशे गदामत्र शङ्खं वामादिमे करे । अभयन्तु द्वितीयेऽत्र तृतीये वै कमण्डलुम् । वीजपूरं करे तुर्ये पञ्चमे पात्रमेव च । षष्ठे कराम्बुजे शृङ्गं सप्तमे कुन्तमेव च । परिघं चाष्टमे हस्ते दण्डन्तु नवमे करे । खेटकं दशमे पाणौ धनुरेकादशे शये । द्वादशे पात्रमत्रैव त्रिशूलन्तु त्रयोदशे । ध्यानं श्रेयसे भूत्यै विजयाय सुखाय च । तापाय चैव शत्रूणां विशेषेण समर्चितम्" ।

चतुष्पदस्य "चतुष्पदाभिधं चात्र नवमं कथ्यते जय ! । ल-ग्रवर्णं चतुष्पादं चतुरास्यं जटान्वितम् । मनुष्यास्यन्तु वै पूर्वं दक्षिणं चैव गोमुखम् । अजास्यं पश्चिमन्तस्य चोत्तरं शूकराननम् । मनुष्याकारवत् सर्वं त्रिकपुच्छविनिर्गतम् । पीतवस्त्रं वृहत्कुक्षि नीलमुक्ताविभूषणम् । वसुपक्ष२८भुजोपेतं दीर्घनासं महाजवम् । दक्षिणाद्ये करे शक्तिं द्वितीये चाक्षसूत्रकम् । सुदर्शनं तृतीये तु चतुर्थे चैव पङ्कजम् । पञ्चमे मुद्गरं चैव षष्ठे मोदकमेव च । सप्तमे तु गदां पाणावष्टमे चाङ्कुशं शये । नवमे तु करे बाणं दशमे खड्गमेव च । एकादशे करे दन्तं द्वादशे शुक्तिमत्र हि । त्रयोदशे शये चात्र तोमरं सुदृढं शुभम् । चतुर्दशे तु वै वज्रं वामाद्येऽभीतिमेव च । कमण्डलुं द्वितीये वै तृतीये शङ्खमेव च । चतुर्थे वीजपूरं वै पञ्चमे टङ्कमेव च । षष्ठे पात्रं सुधापूर्णं सप्तमे च त्रिशूलकम् । अष्टमे पात्रमत्रैव नवमे धनुरेव च । दशमे खेटकं हस्ते दण्डमेकादशे करे । द्वादशे पट्टिशं पाणौ कुन्तमत्र त्रयोदशे । शृङ्गं चतुर्दशे विभ्रद्गोत्रहृद्धौ सुपूजितम्" ।

नागस्य "नागाख्यं दशमं रक्तं नीलवस्त्रं जटाधरम् । मनुष्याकारमेवैतन्मस्तकन्यस्ततत्फणम् । विंशद्भुजा२०भुजोपेतं मुक्तारुद्राक्षभूषणम् । प्रथमे मोदकं दक्षे द्वितीये चैव पङ्कजम् । अक्षसूत्रं तृतीयेऽत्र वरन्तुर्ये कराम्बुजे । पञ्चमे तु करे चक्रं षष्ठे वज्रन्तु वै शये । सप्तमे तोमरं पाणौ शक्तिमत्रैव चाष्टमे । नवमे सोज्ज्वलं दन्तं दशमे चन्द्रहासकम् । बाणमेकादशे हस्ते द्वादशे चाङ्कुशं शये । त्रयोदशे गदामत्र तरवाद्यं चतुर्दशे । करे पञ्चदशे दात्रं वामे पात्रन्तु चादिमे । वीजपूरं द्वितीयेऽत्र तृतीये वै कमण्डलुम् । चतुर्थे चाभयं हस्ते पञ्चमे शङ्खमेव च । षष्ठे कराम्बुजे शृङ्गं सप्तमे कुन्तमुत्तमम् । पट्टिशं चाष्टमे हस्ते नवमे दण्डमत्र हि । दशमे खेटकञ्चैव धनुरेकादशे करे । द्वादशे पाशमत्रैव त्रिशूलञ्च त्रयोदशे । चतुर्दशे दशाख्यं वै करे पञ्चदशेऽर्बुदम् । ध्यानं विजयारोग्यं कुर्वीताभयदं नृणाम्" । (दशाख्यं दशमखड्गाख्यम्)

किन्तुघ्नस्य 'एकादशन्तु किन्तुघ्नं करणं कथ्यतेऽधुना । गोक्षीरधवलं चैतत्पीतवस्त्रं हयाननम् । सर्वाभरणसंयुक्तं द्वात्रिंशद्बाहुसंयुतम् । वरञ्चैवादिमे दक्षे द्वितीये चाक्षसूत्रकम् । तृतीये सोज्ज्वलं चक्रं तुर्ये चाब्जं कराम्बुजे । पञ्चमे मोदकं हस्ते षष्ठे वै कुलिशं शये । सप्तमे तोमरं पाणौ शक्तिमत्रैव चाष्टमे । नवमे गजदन्तञ्च दशमे खड्गमुत्तमम् । एकादशे तु वै बाणं द्वादशे शृणिमेव च । त्रयोदशे गदामत्र डमरुञ्च चतुर्दशे । करे पञ्चदशे पुरीं परशुञ्चैव षोडशे । अभयञ्चादिमे वामे द्वितीये वै कमण्डलुम् । शङ्खमत्र तृतीये वै चतुर्थे वीजपूरकम् । पञ्चमे चासनं पात्रं षष्ठे शृङ्गं मनोहरम् । सप्तमे कुन्तमत्रैव चाष्टमे पट्टिशं शये । नवमे वैणवं दण्डं दशमे खेटमेव च । चापमेकादशे पाणौ द्वादशे पात्रमत्र हि । त्रयोदशे त्रिशूलं वै टङ्कमत्र चतुर्दशे । वीणामिन्दु१५हस्ते च ध्वजञ्चैव तु षोडशे । धारयद्वैरिणां ध्वस्त्यै पूजनीयं विपश्चिता । 'विद्यालाभाय सन्तुष्टिविजयादिसुखार्थिना" । किंस्तुघ्नमिति वा पाठः ।

राशीनां मेषस्य विष्णुधर्मोत्तरात् "मेषवक्त्रो नरो रक्तो द्विभुजः पङ्कजासनः । ज्ञानमुद्राकरः पीतवसनः कनकाङ्गदी" ।

वृषस्य "वृषाननो नरः शुभ्रो रक्तवस्त्राक्षमालिकः" ।

मिथुनस्य "पुमान् गदी सवीणा च योषिच्च मिथुनं स्मृतम्" ।

कर्कटस्य "कर्कटः कपिलः श्यामः कूर्ममुद्राधरो नरः" ।

सिंहस्य "सिंहवक्त्रोऽरुणोऽक्षस्थो द्विभुजोऽभयपात्रयुक्" ।

कन्यायाः "शुक्लासिभृत् सिता कन्या द्विभुजा पङ्कजासना" ।

तुलायाः "तुलाधरो नरो गौरः पिङ्गनेत्रः कजासनः" ।

वृश्चिकस्य "वृश्चिकास्यो नरः पिङ्गो द्विभुजो मर्कटासनः । दक्षे वृश्चिकमाधाय वामे पात्रं सुधायुतम्" ।

धनुषः "अश्ववक्त्रो नरश्चापी ज्याकृष्टकरदक्षिणः" ।

मकरस्य "अक्षसूत्रधरो नीलो मृगवक्त्रो नरो द्विभुः" ।

कुम्भस्य "मकरास्योऽसितोऽक्षस्थो रिक्तकुम्भो नरो घटः" ।

भीमस्य "मनुष्ययुग्मस्थितः श्यामो मनुष्यहस्तो महोदरः । मनुष्यवक्त्रो नरो भीमो हरिन्मणिविभूषणः" ।

कालस्य विश्वकर्म्मशास्त्रात् "कालः करालवदनो नित्यञ्च विभीषणः । पाशहस्तश्च कर्त्तव्यः सर्पहस्तिकरोमवान्" ।

निमेषस्य "निमेषस्तु भवेदत्र मेचकाभोऽर्द्धनीलकः । अक्षसूत्रं करे दक्षे वामसूत्रामथोत्तरे । दधानो योगसंसिद्ध्यै पूजनीयो विपश्चिता" ।

काष्ठायाः "नीलवर्णा भवेत् काष्ठा पीतवस्त्रा त्रिलोचना । अष्टादशभुजोपेता ज्ञानपुस्तीसमन्विता" ।

कलायाः "शुक्लवर्णा कला ज्ञेया नीलवस्त्रा त्रिलोचना । व्योमवज्राङ्कुशच्छत्रकरतलम्बितमालिका । मुक्ताक्षमालिकाढ्या वामपङ्कजसंयुता । पूजनीया विशेषेण ज्ञानविज्ञानहेतवे" ।

क्षणस्य "क्षणाभिधो भवेत् पीतः मुनिपत्रः सुमौक्तिकः । जटात्रिमौक्तिकोपेतश्चन्द्रनालिकपाङ्कुरः । मुक्तासूत्राङ्कितहस्तोऽयं वामे स्वर्णकमण्डलुः" ।

१मुहूर्त्तानां तत्र दिने रौद्रस्य "मुहूर्त्तानधुना वच्मि नामलक्षणपृथक्फलैः । तत्रादिमस्तु रौद्राख्यः श्यामश्च ताम्रपक्ष्मभिः । श्वेतवस्त्रो महातुङ्गो दक्षिणे सर्पमादधत् । वामे पात्रं सुधापूर्णं शत्रुकर्म्मप्रसिद्धये" ।

२सितस्य "सिताभिधो द्वितीयस्तु श्वेतवर्णो महोदयः । श्वेतगोक्षाभवस्त्रोऽयं श्वेतमुक्ताविभूषणः । दक्षिणे पङ्कजं शुभ्रं वामे चैव कमण्डलुम् । दधानस्तु श्रियै पूज्यो योगसिद्ध्यै सुखाय च" ।

३अजपस्य "तृतीयोऽथाजपाख्यस्तु कृष्णः शुभ्रो महातनुः । दक्षिणे पङ्कजं नीलं वामे सर्पं महाफणम् । बिभ्रद्विपुलभोगाय पूजनीयो महाधिया" ।

४आर्य्यभटस्य "तुर्य्यश्चार्य्यभटाख्यस्तु नीलः शुभ्रो महोदरः । दक्षिणे पुस्तकं हस्ते वामे चैव त्रिशूलकम् । दधानः श्रेयसे भूत्यै विजयाय सुखाय च" ।

५सावित्रस्य "अधुना चैव सावित्रः पञ्चमः कथ्यते जय ! । श्वेतवर्णोऽश्ववक्त्रस्तु मेचकवसनान्वितः । पुस्तकं दक्षिणे हस्ते वामे कमण्डलुन्निर्व्रणम् । दद्रुरोगविनाशाय पूजनीयोऽप्यहर्निशम्" ।

६वैराजस्य "वैराजश्चात्र वै षष्ठः श्यामवर्णो जटाधरः । दक्षिणे तु करे दण्डं वामे चैव ध्रुवं करे । बिभ्रद्वृद्ध्यै च सौख्याय पूजनीयोऽतिभक्तितः" ।

७गन्धर्व्वस्य "सप्तमश्चात्र गन्धर्व्वश्चाभवर्णः कृशोदरः । दक्षिणे वज्रं वै पाणौ वामे शक्तिञ्च धारयन् । सौख्यवृद्ध्यै यशोवृद्ध्यै पूजनीयो विपश्चिता" ।

८अभिजितः (कुतपस्य) "अधुना चाभिजिन्नाम कथ्यतेऽष्टमः शुभः । पीतवर्णोऽतिशुभ्रस्तु ताम्रवर्णो महोदरः । तुरगहस्तद्वयोपेतः पूजनीयः सुखाप्तये । स एव कुतपो नाम विख्यातव्यो मनीषिभिः । पितॄणां सुप्रियश्चैव पिण्डहस्तोऽथवाव्ययम्" ।

९रौहिणेयस्य "नवमो रौहिणेयाख्यो मुहूर्त्तः कथ्यते जय ! । शुभ्रवर्णो विशालाक्षो नीलवस्त्रोऽब्जकुण्डलः । दक्षिणे पङ्कजं पाणौ वामे मोदकमेव च । दधानः सुखसम्पत्त्यै विजयारोग्यवृद्धये" ।

१०बलस्य "अधुना कथ्यते वत्स ! दशमस्तु बलाभिधः । गौरवर्णोऽरुणः श्वेतवसनः स्वर्णकुण्डलः । दक्षिणे तु करे शङ्खं वामे पङ्कजमादधत्" ।

११विजयस्य "एकादशोऽधुना ज्ञेयो मुहूर्त्तो विजयाभिधः । हेमवर्णो हरिन्नेत्रः कृष्णश्वेतारुणांशुकः । अक्षसूत्रं करे दक्षे वामे चैव कमण्डलुम् । दधत् प्रज्ञासुखार्थाय पूजनीयो विपश्चिता" ।

१२नैर्ऋतस्य "नैर्ऋताख्योऽधुना ज्ञेयो द्वादशस्तु मुहूर्त्तकः । नीलवर्णोत्पलमौलिः पीतवस्त्रो महाबलः । दक्षिणे तु करे चक्रं वामे चाभयमादधत्" ।

१३शम्बरस्य "त्रयोदशो भवेदत्र रक्तः शम्बराभिधः । ताम्रवस्त्रो महौजस्को रत्नहेमजकुण्डलः । शोणपङ्कजदक्षस्तु वामकुण्डीसमन्वितः" ।

१४वरुणस्य "मुहूर्त्तः कथ्यते चात्र वरुणाख्यश्चतुर्दशः । मुक्ताफलनिभश्चैव मुक्ताहारविभूषणः । धनुर्बाणधरश्चैव पूजनीयः सुखाप्तये" ।

१५सुभगस्य "अथ पञ्चदशो ज्ञेयः सुभगस्तु हरित्प्रभः" ।

१रात्रौ अतिरौद्रस्य "अथो निशाचरान् भूमौ मुहूर्त्तान् निशिसंख्यकान् । तत्रादिमोऽतिरौद्राख्यः कृष्णवर्णोऽरुणांशुकः । चतुर्भुजो महाक्रूरः भास्वन्मुकुटकोज्ज्वलः । आदिमे दक्षिणे बिभ्रत् कौशिकास्त्रविभीषणम् । द्वितीये तु करे सर्पं वामोर्द्ध्वे त्वथ वै करे । सन्दंशं तदधः पात्रं बिभ्राणः सर्वसिद्धिदः" ।

२महागन्धर्व्वराजस्य "महागन्धर्व्वराजाख्यो द्वितीयस्तत्र चैव हि । कृष्णशुभ्रारुणपीतो नीलवस्त्रो महाबलः । चतुर्भुजो विशालाक्षो गौरवर्णो जटाधरः । आदिमे दक्षिणे शङ्खं द्वितीये चैव पङ्कजम् । वामोर्द्ध्वगे कोरं

शरासनम्। दधानः पुष्ट्यै लक्ष्म्यै चन्दनादिभिरर्चितः"।

१।८भावस्य "भावाभिधोऽष्टमस्तत्र नीलशुभ्रारुणच्छविः। पीतकृष्णारुणाम्लानवसनश्चित्रकुण्डलः। शुक्लादिशुभमालोऽयं जटापिङ्गाक्ष एव च। दक्षिणे प्रथमे पुस्तकन्तु द्वितीयके। वामोर्द्ध्वगे करे शूलं तदधः पात्रमासवम्। बिभ्रत् पूजनीयस्तु धान्यलाभाय वै श्रिये"।

१।९यूनः "नवमोऽत्र युवाख्यस्तु पाटलाभोऽरुणेक्षणः। नीलवस्त्रजटायुक्तो रत्नमेचककुण्डलः। दक्षिणे प्रथमे शङ्खं द्वितीये तु सुदर्शनम्। वामादिमे करे पात्रं द्वितीये नीलपङ्कजम्। बिभ्राणः कान्तये पूज्यो लक्ष्मीसौभाग्यवृद्धये"।

१।१०धातुः "धाता चैव प्रविज्ञेयो दशमः पिङ्गलोचनः। कृष्णशुभ्रारुणाम्लानवसनः श्वेतकुण्डलः। शरासमादिमे दक्षे द्वितीये बीजपूरकम्। वामोर्द्ध्वगे करे पुष्पं नीलमिन्दीवरं वरः। जयाय पुत्रसम्पत्त्यै पूजनीयः शुभक्रमः"। (दशदिति शेषः)

१।११ईश्वरस्य "ईश्वराभिध एवात्र ज्ञेय एकादशोऽप्यसौ। कैरवाभक्षिनेत्रस्तु जटाखण्डेन्दुमौलिकः। शुक्लस्फाटिकरुद्राक्षभूषणस्तुङ्गनासिकः। त्रिशूलमादिमे दक्षे द्वितीये क्षीरमेव च। शरासमादिमे वामे द्वितीये चैव पुस्तकम्। बिभ्रत् सौख्याय पूज्योऽसौ योगवृद्ध्यै सुताप्तये"।

१।१२बहुधान्यस्य "द्वादशो बहुधान्याख्यः पीतनीलारुणच्छविः। पीतवस्त्रो विशालाक्षस्तुन्दिलो दीर्घनासिकः। जपाकुसुममालोऽयं कञ्चो गजकुण्डलः। दक्षिणाद्ये करे कुम्भं सौवर्णं सर्वधान्यकम्। बीजपूरपिधानन्तत् खचितानेकरत्नकम्। द्वितीये डमरुं वामे चोर्द्ध्वे नीलकनीरजम्। द्वितीये तु करे सीरं दधानः सर्वधान्यकम्। सिद्धये पूजितो नित्यं स्वनामार्थस्य संस्मृतः"।

२।१प्रमाथिनः "प्रमाथिसंज्ञकस्त्वाद्यः शुक्लवर्णो महाभुजः। जटात्रितयसंयुक्तो दीर्घमालोऽर्धकुण्डलः। शोणनीलाम्बरोपेतः काञ्चनानेकमुद्रिकः। पिकमालामादिमे हस्ते द्वितीये कम्बुमेव च। पाशं वामोर्द्ध्वगे हस्ते तदधस्त्वम्बुपात्रकम्। दधानो वैरिघाताय स्वर्गस्थैव पुष्टये"।

२।२विक्रमस्य "विक्रमाख्यो द्वितीयस्तु नीलशुभ्रो महोदरः। पीतवस्त्रो हरिद्राभः कण्ठमौक्तिकमालिकः। आदिमे दक्षिणे शङ्खं द्वितीये चैव पङ्कजम्। वामादिमे करे पात्रं पाशमत्र द्वितीयके। दधानोऽतिबलार्थाय पूजनीयस्तु यत्नतः"।

२।३वृषस्य "वृषाभिधस्तृतीयस्तु श्वेतगौरो विशालदृक्। श्मश्रुरोमाऽतिसंहृष्टः केतकीदलकर्णयुक्। पीतप्रान्तारुणोपेतवसनः कटिबर्हटकः। आदिमे दक्षिणे पाशं द्वितीये शङ्खमेव च। वामादिमे करे पात्रं द्वितीये कृगमेव च। धनधान्यप्रवृद्ध्यर्थं पूजनीयोऽतिसादरम्"।

२।४चित्रभानोः "चतुर्थश्चित्रभान्वाख्यश्चित्रपीतोऽरुणांशुकः। मुक्तागर्भनिभश्चैव वरदः स्वर्णकुण्डलः। मुक्ताक्षजन्तु दक्षाद्ये द्वितीये चैव पाशकम्। वामादिमे करे कम्बुं द्वितीये पङ्कजं शुभम्। बिभ्रदानन्दसम्पत्त्यै प्रतापार्थविवृद्धये"।

२।५सुभानोः "पञ्चमस्तु सुभान्वाख्यः शुभ्रशोणरुचिः शुभः। कण्ठत्रिरेखाशोणस्तु जटाकाञ्चनसन्निभः। आदिमे दक्षिणे पद्मं द्वितीये शङ्खमुज्ज्वलम्। वामोर्द्ध्वे तु करे पाशं तदधःस्थे शयेऽङ्कुशम्। बिभ्राणः सुखदः शान्त्यै रिपुपक्षक्षयाय च"।

२।६तारणस्य "अथ संवत्सरः षष्ठस्तारणाख्यः सिताम्बरः। श्वेतनीलारुणश्चैव स्वर्णकुण्डलभूषणः। प्रथमे दक्षिणे कुम्भं द्वितीये चैव पङ्कजम्। उत्तराद्ये करे पाशं द्वितीये शङ्खमादधत्। दुर्गत्यनेकनाशाय भूतये विजयाय च"।

२।७पार्थिवस्य "सप्तमः पार्थिवाख्यस्तु तप्तकाञ्चनसन्निभः। पीतशोणाम्बरश्चैव क्षमापीठोऽतिसुन्दरः। सर्वरत्नविभूषाढ्यः केतकीदलमस्तकः। आदिमे दक्षिणे बाणं द्वितीये चैव पङ्कजम्। कार्मुकञ्चोत्तरादिस्थे द्वितीये शङ्खमेव च। दधल्लाभ्यादिलाभाय पूजनीयः प्रयत्नतः।

२।८व्ययस्य "अव्ययाख्योऽष्टमस्तत्र कैरवारुणसन्निभः। कृष्णनीलारुणश्वेतवसनश्चित्रकुण्डलः। क्षीरमालामादिमे हस्ते द्वितीये क्षीरमेव च। शङ्खं वामादिमे हस्ते द्वितीये पाशमादधत्। यजनीभूतये नित्यं वृद्धये चायुषे श्रिये"।

२।९सर्वजितः "सर्वजिन्नवमोऽप्यत्र श्वेतनीलोऽसितप्रभः। नीलवस्त्रजटोत्तुङ्गः कृष्णनीरजकुण्डलः। दक्षादिमे करे बाणं द्वितीये चैव पुस्तकम्। वामादिमे करे चापं द्वितीये पात्रमेव च। दधानः पूजनीयोऽयं विजयाय सुखाय च"।

२।१०सर्वधारकस्य "अधुना कथ्यते वत्स! दशमः सर्वधारकः। कङ्कपत्रनिभश्चैव पाटलाम्बरनान्वितः। नीलपङ्कजवर्णस्तु मुक्ताहारविभूषणः। पाशं दक्षादिमे हस्ते द्वितीये केतकीदलम्। शङ्खञ्चोत्तरादिस्थे द्वितीये चैव पुस्तकम्। दधानो विजयारोग्यवृद्धये चैव यत्नतः"।

२।११विरोधिनः "एकादशोऽधुना शेषो विरोधी नाम वत्सरः । कृष्णपाण्डुरदेहस्तु वरदो नीलकुण्डलः । कृष्णप्रान्तायतश्चैव वसनप्रान्तभूषणः । बिम्बीफलन्तु दक्षाद्ये द्वितीये श्वेतपङ्कजम् । वामादिमे करे सर्पं द्वितीये पाशमादधत् । पूजनीयोऽरिघाताय वसहद्रौ च यत्नतः" ।

२।१२विकृतस्य "द्वादशो विकृताख्यस्तु धूसरः पिङ्गलोचनः । नीलशुभ्रांशुकोपेतो मेघवर्णजकुण्डलः । दक्षिणाद्ये करे पाशं द्वितीये मेघवर्णकम् । वामोर्द्ध्वगे करे शङ्खं वाममध्यादधः करे । दधानो रोगनाशाय दुष्टशत्रुविघातकृत्" ।

३।१खरस्य "खराभिधानस्तत्राद्यो रक्तवर्णो महोदरः । नीलवस्त्रो हृष्टाक्षो घनवर्वरमूर्द्धजः । दक्षिणाद्ये करे शक्तिं द्वितीये खड्गमेव च । वामादिमे करे पात्रं द्वितीये चामरन्दधत् । शत्रुतापाय पूज्योऽसौ विजयायैव यत्नतः" ।

३।२नन्दनस्य "नन्दनाख्यो द्वितीयस्तु पीतशोणाननो बली । शुभ्रवस्त्रो जटालश्च दीर्घकर्णः कजासनः । पङ्कजन्तु यमादिस्थे द्वितीये शक्तिमेव च । वज्रं वामादिमे पाणौ द्वितीये चाङ्कुशं शये । दधानः श्रेयसे भूत्यै पूजनीयो महोदयः" ।

३।३विजयस्य "विजयाख्यस्तृतीयस्तु श्वेतपीतारुणच्छविः । कृष्णवस्त्रः कृशोत्तुङ्गजटारुद्राक्षमालिकः । कमण्डलुं यमादिस्थे द्वितीये कुलिशं करे । शक्तिं वामादिमे हस्ते द्वितीये चैव पङ्कजम् । दधानो विजयारोग्यवृद्धये चैव पूजितः" ।

३।४जयस्य "जयाभिधश्चतुर्थोऽत्र पीतशोणः शुचिः सुखी । पीतवस्त्रो जटैकस्तु पीतरुक्मर्णवेष्टितः । पुस्तकं प्रथमे दक्षे द्वितीये नीलपङ्कजम् । वामादिमे करे वज्रं द्वितीये शक्तिमेव च । दधानः शुभमाङ्गल्यवृद्धये चैव पूजितः"

३।५मन्मथस्य "पञ्चमो मन्मथाख्यस्तु नीलशोणशुचिः शुभः । स्वर्णकुण्डलसंयुक्तः कीरपक्षनिभांशुकः । मल्लिकाधन्वबाणस्तु नवपुष्पजमालिकः । दण्डन्तु दक्षिणे हस्ते द्वितीये चैव पङ्कजम् । वामादिमे करे पुस्तीं द्वितीये शक्तिमेव च । दधानः सिद्धये भूत्यै सौभाग्यवशीकृतौ" ।

३।६दुर्मुखस्य "षष्ठश्चैवात्र विज्ञेयो वत्सरो दुर्मुखाभिधः । शुकपक्षनिभश्चैव नीलकुण्डलवस्त्रकः । दक्षिणाद्ये करे शक्तिं द्वितीये वज्रमेव च । शङ्खं वामादिमे पाणौ द्वितीये सर्पमादधत् । पूजनीयो विधानेन भ्रूकुटीकुटिलाननः । दुष्टशत्रुविनाशाय सर्वरोगोपशान्तये" ।

३।७हेमलम्बस्य "सप्तमो हेमलम्बाख्यो रक्तपीतनिभच्छविः । व्याघ्रचर्मांशुकश्चैव रत्नकुण्डलभूषणः । हेमजं पङ्कजं दक्षे प्रथमे करपल्लवे । द्वितीये कुलिशं पाणौ वामाद्ये पात्रमुत्तमम् । द्वितीये तु करे शक्तिं दधानो मुक्तये जय !" ।

३।८विलम्बस्य "अष्टमस्तु विलम्बाख्यः पाटलाभः कृशोदरः । पीतवस्त्रो हृष्टाक्षोजटाखण्डेन्दुमण्डनः । प्रथमे दक्षिणे सर्पं द्वितीये शक्तिमेव च । वामादिमे करे पात्रं द्वितीये चैव पङ्कजम् । दधानः शत्रुघाताय पूजनीयो विशेषतः" ।

३।९ विकारिणः "विकारी नवमश्चाथ कृष्णनीलारुणच्छविः । ताम्रकुण्डलवस्त्राढ्यः कण्ठशोणशिरोरुहकः । दक्षिणाद्ये करे बाणं द्वितीये चैव पुस्तकम् । वामादिमे धनुर्हस्ते द्वितीये शक्तिमादधत् । पूजनीयो विशेषेण सर्वरोगोपशान्तये" ।

३।१०शार्वरिणः "दशमः शार्वरिप्रख्यः कृष्णशुभ्रारुणच्छविः । शोणवस्त्रोऽतिदीर्घाक्षः स्थूलवर्वरमूर्द्धजः । दक्षिणाद्ये करे सर्पं द्वितीये शाल्मलीदलम् । कौशिकश्चोत्तरादिस्थे द्वितीये शक्तिमेव च । दधानः कीर्त्तये पुष्ट्यै शत्रुभङ्गाय पूजितः" ।

३।११प्लवस्य "एकादशः प्लवाख्यस्तु शशकर्णनिभच्छविः । दर्दुराभाम्बरोपेतो लोहकुण्डलसंयुतः । आदिमे दक्षिणे हस्ते दर्दुरं मणिसंयुतम् । द्वितीये तु करे शक्तिं पात्रं वामादिमे करे । द्वितीये पङ्कजं बिभ्रत् पूजनीयोऽर्थिमतप्रदः" ।

३।१२ शुभकृतः "शुभकृद् द्वादशोऽप्यत्र नागनाभः सुलोचनः । पाटलावसनोपेतः कृष्णकुण्डलभूषणः । दक्षिणे भीषणां शक्तिं प्रथमे करपल्लवे । द्वितीये हेमजं पद्मं वामाद्ये चैव दर्पणम् । द्वितीये कुलिशं हस्ते दधत्सौख्याय सम्मदे" ।

४।१ शुभकृतः "शुभकृत् पीतधूम्रस्तु प्रथमो नीलकाम्बरः । नीलभूषणसंयुक्तो रत्नमुद्राकराङ्गुलिः । घटं दक्षादिमे हस्ते द्वितीये चैव पुस्तकम् । वामादिमे करे पात्रं द्वितीये ध्वजमेव च । दधानः श्रेयसे पुष्ट्यै पूजनीयो जयाय च" ।

४।२ क्रोधिनः "क्रोधिसंज्ञो द्वितीयस्तु नीलशुभ्रः कृशोदरः ।

मेषकाम्बरसंयुक्तस्तुङ्गनासाक्षिपाण्डुरः। पद्मं दक्षादिमे हस्ते द्वितीये ध्वजमेव च। वामादिमे करे पाशो द्वितीये क्षीरमेव च। दधानो वैरिनाशाय कृष्णद्रव्यैः सुपूजितः"।

४।३ विश्वावसोः "विश्वावसुस्तृतीयस्तु कृष्णग्रीवः सुलोचनः। कृष्णशुभ्रारुणप्रान्तवसनार्चितकुण्डलः। ध्वजं दक्षादिमे पाणौ द्वितीये कुलिशं शये। दधानो भुक्तये प्रीत्यै नानाभोगफलाप्तये"।

४।४ पराभवस्य "पराभवश्चतुर्थस्तु धूसरोऽरुणजाम्बरः। नीलोत्पलद्युतिश्चैव सुवर्णघटिकमेखलः। नीलोत्पलन्तु दक्षाद्ये द्वितीये ध्वजमेव च। वामादिमे करे पात्रं सन्दंशं तु द्वितीयके। धारयन्नरिघाताय पूजनीयो विपश्चिता"।

४।५ प्लवङ्गस्य "पञ्चमस्तु प्लवङ्गाख्यो हरिणाजिनसन्निभः। मेघोदराभवस्त्रोऽयं संयुतः कृष्णकम्बरः। दक्षिणाद्ये ध्वजं पाणौ द्वितीये मेषशृङ्गकम्। वामादिमे करे पात्रं द्वितीये पाशमेव च। दधानो भूतये भुक्त्यै पूजनीयः सदा बुधैः"।

४।६ कीलकस्य "कीलकाख्यस्ततः षष्ठः कृष्णवर्णोऽतिदीर्घकः। नीलवस्त्रो जटाभारः कृष्णकुण्डलभूषणः। कीलकं दक्षिणादिस्थे द्वितीये ध्वजमेव च। वामादिमे करे पाशं सन्दंशन्तु द्वितीयके। दधानो विजयारोग्यहेतवे चैव पूजितः"।

४।७ सौम्यस्य "सप्तमः सौम्यनामाथ कीर्त्यते वत्सरः शुभः। नीलपीतजटायुक्तो रक्तोत्पलनिभांशुकः। स्वर्णपत्रद्युतिश्चैव कण्ठपङ्कजमालिकः। चन्द्रमाकादिमे हस्ते द्वितीये केतकीदलम्। वामादिमे ध्वजं हस्ते द्वितीये नीरजं शुभम्। बिभ्रत्सौभाग्ययोगाय पूजनीयः सुभक्तितः"।

४।८ साधारणस्य "साधारणोऽष्टमो ज्ञेयो नीलगौराङ्गच्छविः। पीतशोणान्तवस्त्रोऽयं स्वर्णकुण्डलरत्नयुक्। चन्द्रहासं यमादिस्थे द्वितीये चैव कीलकम्। वामादिमे ध्वजं पाणौ सन्दंशञ्चोत्तरे दधत्। धनदो सुखाप्त्यर्थं पूजनीयः सिताम्बुजैः"।

४।९ विरोधकृतः "विरोधकृत् विज्ञेयो नवमो वत्सरो जय!। पिकाभः शुक्लवस्त्रोऽयं पिङ्गलस्कुलटेक्षणः। दक्षिणाद्ये करे पद्मं द्वितीये चैव ये ध्वजम्। चन्द्रहासन्तु वामाद्ये द्वितीये परशुं शये। बिभ्राणो रोगनाशाय मनुजस्तापकृत् जय!।"

४।१० परिधाविनः "परिधावी तु विज्ञेयो दशमश्चैव वत्सरः। इन्दीवराङ्गवर्णोऽतः कृष्णपीतनिभांशुकः। अश्वप्रसवकर्णस्तु कण्ठपङ्कजमालिकः। पिङ्गमाकादिमे हस्ते द्वितीये ध्वजमेव च। यष्टिं वामादिमे पाणौ द्वितीये चैव मुद्गरम्। दधानो हृदये चैव श्रेयोभूतिसुखायुषाम्"।

४।११ प्रमादिनः "प्रमादी चापि विज्ञेयो रुद्रसङ्घोऽपि वत्सरः। श्वेतसोपुष्पसङ्काशो हरिनीलाङ्गवाम्बरः। मदघूर्णितनेत्रस्तु तन्द्रीभूत इवालसः। दण्डमाकादिमे हस्ते द्वितीये दण्डमेव च। वामादिमे करे पात्रं द्वितीये विचिनीदलम्। दधानो रोगविच्छित्त्यै सम्भुक्ताय यज्वनः"।

४।१२ आनन्दस्य "आनन्दाख्यः सितः पीतवसनो द्वादशोऽत्र हि। मुक्ताक्नुनीलवैर्यभूषणो नीलकुण्डलः। पङ्कजं दक्षिणादिस्थे द्वितीये केतकीदलम्। वामोर्द्धगे ध्वजं पाणौ तदधस्थे तु मोदकम्। योषिद्दानाय संपूज्यो गन्धपुष्पाक्षतादिभिः"।

५।१ राक्षसस्य "तामसानां भवेदाद्यो राक्षसो नाम वत्सरः। इन्दीवरदलाभासो श्वेतवस्त्रोऽर्कभूषणः। अर्कमाकादिमे हस्ते द्वितीये शङ्खमेव च। नीलोत्पलन्तु वामाद्ये द्वितीये कुलिशं शये। दधद्रोगादिनाशाय पूज्यः स्यात्सुभिरेव सः"।

५।२ अनलस्य "अनलाख्यो द्वितीयस्तु नीलशुभ्राङ्गवर्णच्छविः। पीतप्रान्तासितवस्त्रस्तु वज्रकुण्डलभूषणः। चन्द्रहासं यमादिस्थे द्वितीये चार्ककङ्कणे। पिशितञ्चोत्तरादिस्थे परे चैव परश्वधम्। दधत् सुरसम्पदेऽरीणां विजयायैव यज्वनः"।

५।३ पिङ्गलस्य "पिङ्गलाख्यस्तृतीयोऽत्र कुसुदाङ्गसन्निभः। श्वेतप्रान्ताङ्गनीलवसनः स्वर्णभूषणः। आदिमे पिशितं याम्ये द्वितीये क्षीरमेव च। कुलिशञ्चैव वामाद्ये सन्दंशन्तु द्वितीयके। बिभ्राणो विजयारोग्यहेतवे चैव पूजितः"।

५।४ कालयुक्तस्य "कालयुक्ताभिधस्तुर्यो नीलकण्ठो वृकोदरः। पीताङ्गणांशुकोपेतो नीलस्वर्णभूषणः। यमादिमे करे सर्पं द्वितीये क्षीरमेव च। सीधुपात्रन्तु वामाद्ये द्वितीये कीलमेव च। पूजनीयो विशेषेण यज्वनो वैरिहत्यये"।

५।५ सिद्धार्थस्य "अथवा कीर्त्यते वत्स! सिद्धार्थो नाम पञ्चमः।

सप्तकाञ्चनसङ्काशो नीलशुभ्राद्यांशुकः । नीलकुण्डल-संयुक्तो मुक्ताधिकविभूषणः । सौवर्णं कलशं वाम्ये प्रथमे करपल्लवे । इन्दीवरं परे चैव कुलिशञ्चोत्तरोर्द्ध्वगे । वीजपूरमधश्चास्याद्धनाः श्रेयसे सुरे" ।

५।६रौद्रस्य "रौद्राभिधस्ततः षष्ठः पिङ्गलः कृष्णलोहितः । पाटलाम्बरनोपेतो मुक्तावर्णरभुजः । वीरमाद्यादिमे हस्ते द्वितीये हलमादधत् । कुण्डीमिन्द्रादिमे पाणौ परे कुण्डलिनं शये । रोगनाशाय संभक्त्यै पूज्योऽयं परिपन्थिषु" । (इन्द्रो वामः)

५।७दुर्मतेः "सप्तमः कथ्यते चायं मेचकाभः स दुर्मतिः । शङ्खमाद्यादिमे हस्ते स्वर्णमेखलरत्नजम् । सर्पमन्न द्वितीये वै कमण्डलुमिन्द्रादिमे शये । द्वितीये पुस्तकं पाणौ दधद्विद्वेषलाङ्क्षपोः" । (इन्द्रो वामः)

५।८दुन्दुभेः "अष्टमो दुन्दुभिप्रख्यो नीलग्रीवो विशालदृक् । सोमवर्णः सिताम्भोजवसनः कृष्णमौलिकः । जटामुकुट भावोऽयं स्वर्णपद्मद्युतिः शुभः । कदलीफलमाद्याद्ये द्वितीये शङ्खमेव च । वीजपूरन्तु वामाद्ये द्वितीये खड्गमञ्जरीम् । विभाष्यो धनधान्याय पूजनीयः सदा नृभिः" ।

५।९रुधिरोद्गारिणः "नवमो रुधिरोद्गारी नीलशोणालिदेहयुक् । कृष्णप्रान्तारुणश्वेतवसनो नीलभूषणः । लोहिताक्षो जटापिङ्गः शोणचन्दनचर्चितः । रक्तोत्पलं यमादिस्थे द्वितीये कुलिशं शये । पिशितञ्चोत्तरादिस्थे द्वितीये चाङ्कुशं दधत् । वैरिभङ्गाय वै पूज्यो वालसद्यौ हि यज्वनः" ।

५।१०रक्ताक्षस्य "दशमश्चैव रक्ताक्षो नीलकण्ठः कृशोदरः । पीतनीलतनुश्चैव नीलशोणालिकाम्बरः । शरमाद्यादिमे पाणौ द्वितीये चैव पङ्कजम् । सौरमिन्द्रादिमे हस्ते द्वितीये चैव कर्त्तरीम् । दधद्वैरिविघाताय पूजनीयः प्रयत्नतः" ।

५।११क्रोधनस्य "एकादशोऽधुना वत्स ! क्रोधनाख्यो निगद्यते । सजलाम्बुदसङ्काशः पीतशोणाम्बरान्वितः । लोहभूषणसंयुक्तः श्वेतमध्यगपङ्कजः । दक्षिणाद्ये करे शूलं पञ्चगुञ्जाक्षसंयुतम् । द्वितीये कर्त्तरीमन्न वामाद्ये पात्रमासवम् । खट्वाङ्गन्तु द्वितीये वै दधानो वैरिमृत्यवे" ।

५।१२क्षयस्य "क्षयाभिधो भवेदन्न द्वादशो वत्सरो जय ! । कृष्णग्रीवः सुनीलाङ्गो रक्तनेत्रो जटाधरः । मेचकारुणवसनस्तु नीलकारुणमौलिकः । आद्यिमे दक्षिणे सर्पं द्वितीये चैव पाशकम् । बिल्वकुम्भन्तु वामाद्ये द्वितीये चैव शीतलम्" । एवं पञ्चद्वादशकषष्टिवत्सराणां मूर्त्तयः ।

यासां देवतानां प्रतिमानां यथारूपनिर्माणमुक्तं तासां तथारूपेणैव ध्येयता । अतोऽन्यासां देवतानां ध्यानभेदा ध्यानशब्दे वक्ष्यन्ते । देवताप्रतिमूर्त्त्यादयोऽप्यत्र । प्रतिमानिर्माणे द्रव्यभेदा मत्स्यपु० उक्ताः ते च देवताप्रतिष्ठाशब्दे वक्ष्यते

**देवताप्रतिष्ठा**, स्त्री, ६तत्० । देवताप्रतिमानां विधानेन तत्सान्निध्यापादके अर्थे वक्ष्यमाणनिरुक्तियुक्ते संस्कारभेदे देवप्रतिष्ठादयोऽप्यत्र । तद्विधानादि देवप्रतिष्ठातत्त्वे संक्षेपेणोक्तं यथा मत्स्यपु०
"सौवर्णी राजती वापि ताम्री रत्नमयी तथा । शैलदारुमयी वापि लौहसङ्घमयी तथा । रीतिकाधातुयुक्ता च ताम्रकांस्यमयी तथा । शुभदारुमयी वापि देवतार्च्चा प्रशस्यते । अङ्गुष्ठपर्व्व चारभ्य वितस्तिं यावदेव तु । गृहेषु प्रतिमा कार्य्या नाधिका शस्यते बुधैः" । रीतिका पित्तलं शुभदारुमयी यज्ञियकाष्ठमयी । अत्र प्रतिमा गृहेषु स्वगृहेषु । "प्रासादेष्वधिका शुभेति" वचनात् तदधिकापि शैलजा गृहे शुभदा । तन्त्रान्तरेऽप्युक्तम् "चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां कार्य्यार्थं ब्रह्मणो रूपकल्पना" । रूपकल्पना रूपस्थानां देवतानां पुंस्त्र्याद्याकल्पना । गौतमीयतन्त्रे "काश्मीरी ज्ञानदा प्रोक्ता स्वर्णजापि विमुक्तिदा । तेजोदा दारुजा चैव रैत्तिकी सत्यमार्गिणी । ताम्री धर्म्मविवृद्धिञ्च करोति बहुसौख्यदा । कुटे च मृण्मयी प्रोक्ता प्रतिमा शुभलक्षणा । भोगदा मोक्षदा सा तु प्रतिमा कथिता तव" । वराहपुराणे "कुड्ये लेख्ये च ये कश्चित् पटे कश्चिच्च मानवः । पूजयेद्यदि वा चक्रे मम तेजोऽंशसम्भवे" । कुड्ये लेख्ये भित्तौ लिखिते तथा पटे च लिखिते । चक्रे शालग्रामचक्रे । मत्स्यपुराणे विष्णुमभिधाय "एवं रत्नमयं कुर्य्यात् स्फाटिकं पार्थिवं तथा । शुभदारुमयं वापि यद्वा मनसि रोचते । चैत्रे वा फाल्गुने वापि ज्यैष्ठे वा माधवे तथा । माघे वा सर्व्वदेवानां प्रतिष्ठा शुभदा भवेत् । प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे" । अतीते हस्ते "पञ्चमी च द्वितीया च तृतीया सप्तमी तथा । दशमी पौर्णमासी च तथा श्रेष्ठा त्रयोदशी । तासु प्रतिष्ठा विधिवत् कृता बहुफला भवेत्" । व्यवहारसमुच्चये

आदित्यात्स्थालिकामाप सती । उवाच च प्रसन्नात्मा भास्करो द्रुपदात्मजाम् । यावत्सन्तीं भावेन सर्वेषां क्षुधितात्मनाम् । स्थाल्येषा अन्नभाजने ! यावन्तोऽन्नार्थिनोऽभ्यगाः । तावन्त्यन्नानि भोज्यानि यावत्त्वं न भोक्ष्यसे । भुक्तायां त्वयि रिक्तैषा पूर्णभक्ता भविष्यति । रसवद्व्यञ्जनान्वितैश्चापि भक्ष्यप्रदायिनी । इत्थं करस्था यस्याः स्थाल्यामादित्यतो वरे ।। अपरश्च वरो दत्तस्तद्देवेन भास्वता । रविरुवाच । विश्वेशाद्दक्षिणे भागे यो मां त्वत्पुरतः स्थितम् । आराधयिष्यति नरः क्षुद्बाधा तस्य नश्यति । अन्यच्च मे वरो दत्तो विश्वेशेन पतिव्रते ! । तपसा परितुष्टेन तं निशामय वच्मि ते । प्राप्ये ! त्वां समाराध्य यो मां द्रक्ष्यति मानवः । तस्य त्वं दुःखतिमिरमपानुद निजैः करैः । अतो धर्मप्रिये ! नित्यं प्राप्य विश्वेश्वराद्वरम् । काशीस्थितानां जन्तूनां नाशयाम्यघसञ्चयम् । ये त्वामत्र भजिष्यन्ति मानवाः श्रद्धयान्विताः । त्वद्वरोद्यतपाणिस्तु तेषां दास्यामि चिन्तितम् । भवतीं मत्समीपस्थां युधिष्ठिरपतिव्रताम् । विश्वेशाद्दक्षिणे भागे दण्डपाणेः समीपतः । येऽर्चयिष्यन्ति भावेन पुरुषा वा स्त्रियोऽपि वा । तेषां कदाचिन्नो भावि भयं प्रियवियोगजम् । न व्याधिजं भयं क्वापि न क्षुत्तृट्क्षोभसम्भवम् । द्रौपद्यपि ततः काश्यां तव धर्मप्रियेऽनघे ! ।। इति दत्त्वा वरान्देव आदित्यः सर्वदः सताम् । धर्मसुताराधनाय धर्मं द्रौपद्युपायवरौ । आदित्यस्य कथामेतां द्रौपद्याराधितस्य वै । यः श्रोष्यति नरो भक्त्या तस्यैनः क्षयमेष्यति । स्कन्द उवाच । द्रौपदादित्यमाहात्म्यं संक्षेपात् कथितं मया । मयूखादित्यमाहात्म्यं शृणुष्वेदानीं घटोद्भव !" "चतुर्थो द्रुपदादित्यः" काशीख० ४६अ० द्रौपदादित्योऽप्यत्र । "इदानीं द्रौपदादित्यं कथयिष्यामि तेऽनघ" तत्र ।

**द्रुम** पु० द्रुः शाखास्त्यस्य म । १वृक्षे अमरः । २पारिजाते ३कुबेरे च मेदि० । "बद्धपल्लवपुटाञ्जलिं द्रुमम्" रघुः । "तस्य वर्द्धते नित्यं सिच्यमान इव द्रुमः" मनुः ४किम्पुरुषाधीशभेदे "द्रुमः किम्पुरुषेशश्च उपास्ते धनदेश्वरम्" भा०स० ४१०श्लो० "किंपुरुषाधिराज्यमिव द्रुमविभक्तशीलवलयपरिचितं द्रुमम्" काद० ५कृष्णात् रुक्मिण्यां जाते ६पुत्रभेदे "प्रद्युम्नः प्रथमं जज्ञे शंबरान्तकरः सुतः । द्वितीयश्चारुदेष्णश्च रुक्मिणिको महारथः । चारुभद्रश्चारुगर्भः सुदंष्ट्रो द्रुम एव च" हरिवं० १६२अ० । ७किन्नराख्यदैत्यांशजाते द्वापरयुगीये ८नृपभेदे "यस्तु राजन्किन्नर इति दैत्यः परिकीर्त्तितः । द्रुम इत्यभिविख्यातः स आसीद्भुवि पार्थिवः" भा०आ० ६७अ० ९प्राचीने नृपवरभेदे "उशीनरः शतरथः कङ्को दुलिदुहो द्रुमः" भा०आ०१अ०प्राचीननृपोक्तौ ।

**द्रुमनख** पु० द्रुमस्य नख इव संस्थानेऽपि न खलम् । कण्टके शब्दरत्ना० ।

**द्रुममय** त्रि० । द्रुम+विकारे मयट् । वृक्षविकारे यूपादौ

**द्रुमर** पु० द्रुमोऽम्रियतेऽनेन मृ—करणे अप् । कण्टके हारा० ।

**द्रुमव्याधि** पु० द्रुमस्य व्याधिरिव । द्रुमामये १लाक्षायाम् राजनि० । हेम० । २वृक्षरोगे च

**द्रुमशीर्ष** न० द्रुमस्य शीर्षमिव शीर्षमस्य । वृक्षतुल्याकृतियुक्ते कुट्टिमभेदे "कपिशीर्षं द्रुमशीर्षं तथा चास्फोटशीर्षकम् । इति कुट्टिमभेदाः स्युः शाल्मकैः समुदाहृताः" शब्दर० । हेम० । २वृक्षाग्रे न० । [शब्दार्थच० ।

**द्रुमश्रेष्ठ** पु० द्रुमेषु श्रेष्ठः । १प्रधानवृक्षे २तालवृक्षे च

**द्रुमषण्ड** न० द्रुमाणां समूहः द्रुम+षण्डच् । वृक्षसमूहे "जलेषु जलजैश्छन्नं स्थलेषु स्थलजैरपि । पद्मैर्द्रुमषण्डैश्च सर्वतः प्रतिभूषितम्" हरिवं० ६७अ०

**द्रुमसेन** पु० राजभेदे स च गविष्ठासुरांशाज्जातः द्वापरयुगीयो नृपभेदः "गविष्ठस्तु महातेजा यः प्रख्यातो महासुरः । द्रुमसेन इति ख्यातः पृथिव्यां सोऽभवन्नृपः" भा०आ० ६७अ० । [वृक्षस्य रोगे च ।

**द्रुमामय** पु० द्रुमस्यामय इव । लाक्षायां अमरः । हेम० ।

**द्रुमारि** पु० हेम० । १हस्तिनि गजे राजनि० २वृक्षनाशकमात्रे च

**द्रुमाश्रय** त्रि० द्रुम आश्रयो यस्य । १वृक्षाश्रिते २सरटे पुंस्त्री० राजनि० । स्त्रियां जातित्वात् ङीष् ।

**द्रुमिणी** स्त्री द्रुमाणां समूहः खला०समूहे इनि ङीप् । वृक्षसमूहे ।

**द्रुमेश्वर** पु० द्रुमेषु ईश्वर इव श्रेष्ठत्वात् । १तालवृक्षे शब्दार्थक० । २द्रुमाणां श्रेष्ठे च "स्वर्गादिहानयित्वा च पारिजातं द्रुमेश्वरम्" हरिवं० १२६अ० । ३ओषधीशे चन्द्रे च

**द्रुमोत्पल** पु० द्रुमे उत्पलमिव पुष्पमस्य । कर्णिकारवृक्षे अमरः

**द्रुम्म** गतौ भ्वा०पर०सक० सेट् निघण्टुः । द्रुम्मति अद्रुम्मीत् दद्रुम्म । निघण्टौ द्रम्मेति पाठान्तरम् ।

**द्रुवय** पु० "द्रोश्च माने वयः" पा० द्रु+माने वय । माने अमरः ।

**द्रुसल्लक** पु० द्रुषु सल्लक इव । पियालवृक्षे शब्दर० ।

**द्रुह** अनिष्टचिन्तने दिवा०पर०सक०वेट् । द्रुह्यति अद्रुहीत्-

चमुच्च। द्रोहिता द्रोग्धा द्रोढा द्रोहिष्यति ध्रोक्ष्यति। ध्रुक् ध्रुट्। "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" पा० कोपविषयस्य सम्प्रदानता। मह्यं द्रुह्यति। उपसृष्टस्य तस्य सम्प्रदानस्य कर्मता अस्मानभिद्रुह्यति। "न यजमानाय द्रुह्यति" शत०ब्रा० २।१।४।१८। "मा द्रुमेभ्यो महाभाग! दीनेभ्यो द्रोग्धुमर्हसि!" भाग०६।४।७ "नाभिद्रुह्यति भक्तेभ्यः" भाग०४।२०।१ आर्षत्वात् न कर्मता। "मातरश्चाभिद्रुह्यन्ति मनसा कर्मणा च ये" भा०शा० "भवांस्तानभिद्रुह्येत" कामन्दकी० अत्र तङ् असाधुः।

द्रुह् त्रि० द्रुह–क्विप्। द्रोहकारके ध्रुक् ध्रुट्।

द्रुह त्रि० द्रुह–कर्त्तरि क। १द्रोहकारके "द्रुहा मर्त्तं नूहमाना" ऋ०७।१०४।१७। २पुत्रे शब्दार्थकल्प०। पुत्रस्य पितामाता वा पितुरनिष्टचिन्तनस्य प्रायशः सम्भावनात् तथात्वम्। २दुहितरि स्त्री ङीप् शब्दार्थकल्प०।

द्रुहण पु० द्रुं संसारगतिं हन्ति–हन अच् "पूर्वपदात् संज्ञायाम्" पा० णत्वम्। ब्रह्मणि। द्रुहणेन निर्वृत्तादि अरीहणादि० वुञ्। द्रौहणक तन्निर्वृत्तादौ त्रि०।

द्रुहिण पु० द्रुह्यति कामक्रोधादिभ्यो दुष्टेभ्यो वा द्रुह–बा० इनन् किच्च। चतुर्मुखे ब्रह्मणि अमरः "दुरालभा दानवीला द्राविणी द्रुहिणस्तुता" काशीख०२९अ० गङ्गासहस्रनाम। २विष्णौ च "महादेव! देवस्तुत! द्रुहिण! अनन्त! विश्वकर्मन् नमायस्तेति" हरिवं० २५९अ०।

द्रुह्य त्रि० भिदादिगणे द्रुह्येति पाठात् द्रुह–न यत् किन्तु क्यप्। द्रोहविषये तस्यापत्यम् शिवा० अण् द्रौह्य तदपत्ये बहुषु यस्कादि० अणो लुक्। द्रुह्या इत्येव।

द्रुह्यु पु० ययातेः शर्मिष्ठायां जाते पुत्रभेदे तुर्वसुशब्दे दृश्यम्। तस्मै ययातिशापकथा "ययातिरुवाच "द्रुह्यो! त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीम्। जरां वर्षसहस्रं मे यौवनं स्वं ददस्व च। पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम्। स्वं चादास्यामि भूयोऽहं पाप्मानं जरया सह। द्रुह्युरुवाच। न गजं न रथं नाश्वं जीर्णो भुङ्क्ते न च स्त्रियम्। वागभङ्गश्चास्य भवति तां जरां नाभिकामये। ययातिरुवाच। यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि। तस्माद्द्रुह्यो! प्रियः कामो न ते सम्पत्स्यते क्वचित्। यत्राश्वरथमुख्यानामश्वानां स्याद्गतं न च। हस्तिनां पीठकानाञ्च गर्दभानां तथैव च। बस्तानाञ्च गवाञ्चैव शिबिकायास्तथैव च। उडुपप्लव-सन्तारो यत्र नित्यं भविष्यति। अराजभोजशब्दं त्वं तत्र प्राप्स्यसि सान्वयः" भा०आ०८४अ०।

द्रू गतौ वधे च स्वा०क्र्या० च उ०सक०सेट्। द्रूणोति द्रूणुते द्रूणाति द्रूणीते अद्रावीत् अद्रविष्ट। दुद्राव। दुद्रविथ। द्रविता द्रविष्यति।

द्रू पु० द्रू–क्विप्। हिरण्ये उणादि०।

द्रूघण पु० द्रुघण+पृषो० दीर्घः। मुद्गरे द्विरूपकोषः।

द्रूण पु० द्रू–हिंसायाम् बा० नक्। वृश्चिके शब्दार्थकल्प०।

द्रेक शब्दे उत्साहे च भ्वा०आत्म०अक० सेट्। द्रेकते अद्रेकिष्ट। ऋदित् चङि णिचि अदिद्रेकत् त।

द्रेक्क पु० द्रेक्काण+पृषो०। द्रेक्काणे राशेस्तृतीयांशे।

द्रेक्काण पु० "सप्तमनवमानां ये राशीनामधिपा ग्रहाः। एते द्रेक्काणपाराशौ द्रेक्काणास्त्रय एव हि" ज्यो०त०उक्ते राशेस्तृतीयाभागे तदधिपाश्च लग्नादिपाज्ञेयाः। द्रेक्काणशब्दे दृश्यम्।

द्रेश्य त्रि० दृश–कर्मणि क्यप् वेदे पृषो०। दृश्ये "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रम्" मुण्डको०। "अद्रेश्यम् अदृश्यं सर्वेषां बुद्धीन्द्रियाणामगम्यमित्येतत् दृशेर्बहिःप्रवृत्तस्य पञ्चेन्द्रियद्वारकत्वात्" भा०

द्रेष्काण पु० द्रेक्काण+पृषो०। द्रेक्काणे राशेस्तृतीये भागे।

द्रोघ त्रि० द्रुह–कर्मणि घञ् बा० वेदे कुत्वम्। द्रोहविषये "एनसा द्रोघमित्रान्" ऋ०१०।८९।१२ "द्रोघमित्रान् द्रुग्धानि मित्राणि यैः ते द्रोघमित्राः" भा०। करणे घञ्। द्रोहसूचकवाक्यादौ "द्रोघाय चिद्वचस आनवाय" ऋ० ६।६२।९ "द्रोघायाभिद्रोहात्मकाय वचसे" भा० "द्रोघवाचस्ते निर्ऋथं सचन्ताम्" ऋ०७।१०४।१४

द्रोण पु० द्रूणः कलशः उत्पत्तिस्थानत्वेनास्त्यस्य अच्। भरद्वाजे कौरवाणां धनुर्वेदाचार्ये तदुत्पत्तिकथा

"गङ्गाद्वारं प्रति महान् बभूव भगवान् ऋषिः। भरद्वाज इति ख्यातः सततं संशितव्रतः। सोऽभिषेक्तुं ततो गङ्गां पूर्वमेवागमन्नदीम्। महर्षिभिर्भरद्वाजो हविर्धाने चरन् पुरा। ददर्शाप्सरसं साक्षात् घृताचीमाप्लुतामृषिः। रूपयौवनसम्पन्नां मददृप्तां मदालसाम्। तस्याः पुनर्नदीतीरे वसनं पर्यवर्त्तत। व्यपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे ततः। तत्र संसक्तमनसो भरद्वाजस्य धीमतः। ततोऽस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे। ततः समभवद्द्रोणः कलशे तस्य धीमतः। अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः। अग्निवेशं महाभागं

द्रोणमाना स्त्री द्रोणो मानं दुग्धेऽस्याः। द्रोणदुघायां गवि शब्दच०। द्रोणो मानं यस्याः। द्रोणमिते दुग्धादौ त्रि०

द्रोणमुखम् न० चतुःशतग्राममध्यस्थग्रामे हारा०।

द्रोणशर्मपद न० तीर्थभेदे "भरतस्य कुमारस्य द्रोणशर्मपदे तथा। अपां प्रपतनाद्देवी सेव्यते योऽप्सरोगणैः" भा०अनु० २५अ०।

द्रोणसाच त्रि० द्रोणं द्रोणकलशं सचते सच—ण्वि। द्रोणकलशसेवके। "यथा पतिं द्रोणसाचमचेतसम्" ऋ०१०। ४४।४ "द्रोणसाचं द्रोणकलशस्य सेवितारम्" भा०

द्रोणा स्त्री १द्रोणपुष्पाम् २द्रोणदुघायां शब्दार्थ०।

द्रोणाचार्य्य पु० कर्म०। कौरवाणां शस्त्राचार्य्ये भारद्वाजे

द्रोणाहाव पु० आहूयन्त्यत्र पानार्थं गवादीन् आहावो जलाधारः जलाशयभेदः द्रोणमयः द्रुममयः आहावः। द्रुममये जलाधारभेदे "द्रोणाहावमवतमश्मचक्रम्" ऋ०१०। १०१।७।

द्रोणि(णी) स्त्री द्रवति गच्छति जलम् द्रु—नि वा ङीप्। १काष्ठाम्बुवाहिन्याम् अमरः। (डोङ्गा) २जलाधारे कदलीत्वगादि निर्मिते पात्रभेदे "तैलपूर्णे कटाहे वा द्रोण्यां वा शाययेन्नरम्" सुश्रुतः "भरद्वाजस्य च स्कन्नं युक्तं द्रोण्यामवर्द्धत" भा०आ०६३अ० ४काष्ठमये स्नानपात्रे ५पर्वतानामन्तरे देशभेदे च "शैलानामन्तरे द्रोण्यः सिद्धचारणसेविताः" शब्दार्थचि० धृतवाक्यम्। "पूर्वान्तां पयसा नद्यो द्रोण्यस्य विपुलायताः" हरिवं० ७४अ०। द्रोणस्य पत्नी ङीप्। ७द्रोणपत्न्यां स्त्री ८द्विशूर्पपरिमाणे वैद्यकभाषा ९कदल्यां मेदि० १०नीलीवृक्षे शब्दरत्ना० ११सैन्धवस्त्री हेमच० १२इन्द्रचिर्भट्यां १३द्रोणीलवणे च राजनि० १४नदीभेदे शब्दादिको० १५द्रुते च

द्रोणीदल पु० द्रोणीव दलमस्य। केतकीवृक्षे हारा०

द्रोणीलवण न० द्रोण्यां भवं लवणम्। उपकर्णाटदेशभवे लवणे राजनि०। "विज्ञेयं द्रोणीलवणं पाके नात्युष्णतां गतम्। अविदाहि भेदकञ्च स्निग्धं शूलविनाशनम्। अल्पपित्तकरं चैव भिषग्भिः समुदाहृतम्" राजनि०।

द्रोण्य त्रि० द्रोणं द्रुममयं यूपमर्हति यत्। द्रुममययूपार्हे पश्वादौ "द्रवद्द्रोण्यः पशुः" ऋ०५।५०।४। "द्रोण्यः यूपार्हः पशुः" भा०

द्रोण्यश्व त्रि० द्रोणिं द्रुतमश्नुते अश—व्याप्तौ बा० व। द्रुतव्यापके "द्रोण्यश्वास ईरते घृतं वाः" ऋ०१०।९९।४ "द्रोण्यश्वाः द्रुतव्यापनाः" भा०।

द्रोमिल पु० चाणक्ये मुनौ हेमच० द्रामिल इति वा तत्र पाठः। अन्यतरस्य प्रमाणादिवत् क्षुद्राद्दोषात्।

द्रोह पु० द्रुह—भावे घञ्। १अनिष्टचिन्तने २वधबन्धे ३हिंसाकार्य्ये च। "पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः" मनुः "द्रोहम्बुद्धयः" कुमा० "द्रोहो जिघांसा" मल्लि० रघु० "विनापि यौनसम्बन्धात् कुर्य्यात् गदद्रोहे तु पातकैः" मनुः अत्र कुल्लूकः अनिष्टचिन्तनं वा द्रोहशब्दार्थः। "द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम्" काव्यप्र० द्रोहः जातोऽस्य तारका० इतच्। द्रोहित जातद्रोहे त्रि०। [अमरः।

द्रोहचिन्तन न० द्रोहार्थं चिन्तनम्। परानिष्टचिन्तने

द्रोहाट त्रि० द्रोहेणाटति अट—अच्। १वैडालव्रतिके कपटेन परहिंसार्थं व्रतधारिणि २मृगलुब्धके ३वेदशाखाप्रभेदे पु० मेदि०।

द्रौण त्रि० द्रोणं सम्भवति अवहरति पचति वा अण् पक्षे ठञ्। द्रोणमितधान्यादेः स्वकिन् १सम्भावके २तदपहारके ३तत्पाचके च स्त्रियां ङीप्। पक्षे ठञि द्रौणिक तदर्थे स्त्रियां टाप्। तदर्थे द्रौणिक इति मुग्धकल्पनं प्रामादिकमेव ठञि स्वरभेदः।

द्रौणीज न० द्रोण्यां जायते जन—ड। १द्रोणीजाते लवणे राजनि०। २द्रोण्यां जाते द्रोणाचार्य्ये द्रोणस्य पत्नी ङीप् द्रोणी तस्यां जाते ३अश्वत्थाम्नि च।

द्रौणायन पु० अश्वत्थाम्नि द्रोणशब्दे दृश्यम् द्रौणिरप्यत्र।

द्रौणायनि पु० द्रोणस्यापत्यं बा० फिञ्। अश्वत्थाम्नि "सकर्णदुर्य्योधनशाल्वशल्यद्रौणायनिक्राथसुनीथवक्राः" भा०आ० १८७अ०। "द्रौणायने! अलमत्यर्थमात्मानं शोकानले प्रक्षेप्तुम्" वेणीसं०

द्रौणिक त्रि० द्रोणस्य वापः क्षेत्रम् ठञ्। द्रोणमितबीजवपनयोग्ये १क्षेत्रादौ अमरः। तेन क्रीतमित्याद्यर्थे आर्हत्वात् ठक्। २द्रोणक्रीतादौ, समासे तु निष्का० ठञ्। स्वरे भेदः।

द्रौपद पुंस्त्री० द्रुपदस्यापत्यं शिवा० अण्। १द्रुपदराजपुत्रे तत्कन्यायां २कृष्णाख्यां स्त्री। द्रुपदात्मजशब्दे दृश्यम् "द्रौपद्या च सहाभिजातवैयन्त्र सुभद्रया" हरिवं०१९५अ० "द्रौपदी त्वथ संजज्ञे शचीभागादनिन्दिता। नातिह्रस्वा न महती नीलोत्पलसुगन्धिनी। पद्मायताक्षी सुश्रोणी असिताञ्चितमूर्द्धजा! सर्वलक्षणसम्पन्ना वैदूर्य्य

भर्चिरचिसभा । पञ्चानां पुरुषेन्द्राणां चित्तप्रमथिनी रह भा॰भा॰ १७अ॰ तस्याः पञ्चपतिकत्वकारणं भा॰भा॰ १९८।१९९ अ॰ उक्तं दिङ्मात्रमत्रोच्यते तत्र द्रौपद्याः पूर्ववृत्तान्तकथनेन पञ्चपतिकत्वमिरूपणाय "व्यास उवाच आसीत्तपोवने काचिदृषेः कन्या महात्मनः । नाध्यगच्छत् पतिं सा तु कन्या रूपवती सती । तोषयामास तपसा सा किलोग्रेण शङ्करम् । तामुवाचेश्वरः प्रीतो वृणु काममिति स्वयम् । सैवमुक्ताऽब्रवीत् कन्या देवं वरदमीश्वरम् । पतिं सर्वगुणोपेतमिच्छामीति पुनः पुनः । ददौ तस्मै स देवेशस्तं वरं प्रीतमानसः पञ्च ते पतयो भद्रे ! भविष्यन्तीति शङ्करः । सा प्रसादयती देवमिदं भूयोऽभ्यभाषत । एकं पतिं गुणोपेतं त्वत्तोऽर्हामीत्यथ शङ्कर ! । तां देवदेवः प्रीतात्मा पुनः प्राह शुभं वचः । पञ्चकृत्वस्त्वयोक्तोऽहं पतिं देहीति वै पुनः । तत्तथा भविता भद्रे ! वचस्तद्भद्रमस्तु ते । देहमन्यं गतायास्ते सर्वमेतद्भविष्यति । द्रौपद्येषा हि सा जज्ञे सुता वै देवरूपिणी । पञ्चानां विहिता पत्नी कृष्णा पार्षत्यनिन्दिता । स्वर्गश्रीः पाण्डवार्थन्तु समुत्पन्ना महामखे । सेह तप्त्वा तपो घोरं दुहितृत्वं तवागता । सैषा देवी रुचिरा देवजुष्टा पञ्चानामेका स्वकृतेनेह कर्मणा । सृष्टा स्वयं देवपत्नी स्वयम्भुवा राजन् ! द्रुपदेष्टं कुरुष्व"। ब्रह्मवैवर्त्ते तु जन्मखण्डे ११५अ॰ अन्यथा वर्णितं यथा "वह्निरुवाच शृणु राम ! महाभाग ! सीतासंगोपनं कुरु । सप्ताहाभ्यन्तरे चैव रावणो दुष्टराक्षसः । दुर्निवार्य्यः प्राक्तनेन जानकीञ्च हरिष्यति । राम उवाच । सीतां गृहीत्वा त्वं गच्छ च्छायामेव तु तिष्ठतु । कलत्रवर्जनं कर्म सर्वेषाञ्च जुगुप्सितम् । सीतां गृहीत्वा प्रययौ वह्नीश्च हुताशनः । सीतायाः सदृशी छाया तस्थौ श्रीरामसन्निधौ । सा च छाया हृता पूर्वं रावणेन बलीयसा । समुद्दधार तां रामो निहत्य तं सबान्धवम् । वह्नौ परीक्षाकाले च छाया वह्नौ विवेश ह । अग्निश्छायायाश्च संरक्ष्य ददौ रामाय जानकीम् । सा च छाया तपस्तप्त्वा नारायणसरोवरे । तपश्चकार दिव्यञ्च शतवर्षञ्च शूलिनः । वरं वृणुष्व भद्रे ! त्वमुवाच शङ्करश्च ताम् । उवाच तां प्रियं व्यग्रा भर्तृदुःखेन दुःखिता । पतिन्देहि पञ्चधा सा वरं वव्रे त्रिलोचनम् । सर्वसम्पत्प्रदस्तुष्टस्तस्यै शर्वो वरं ददौ । महादेव उवाच । साध्वि ! त्वं पञ्चधा ब्रूषे पतिन्देहीति व्याकुला । पञ्चेन्द्राश्च हरेरंशा भविष्यन्ति प्रियास्तव । ते सर्वे च पञ्चेन्द्राश्चामुना पञ्च पाण्डवाः । सा च छाया द्रौपदी च यज्ञकुण्डसमुद्भवा । कृते युगे वेदवती त्रेतायां जनकात्मजा । द्वापरे द्रौपदी छाया तेन कृष्णा त्रिहायणी । वैष्णवी कृष्णभक्ता च तेन कृष्णा प्रकीर्त्तिता । स्वर्गमध्ये पञ्चेन्द्राणां सा च पत्नी भविष्यति । राजा ददौ फाल्गुनाय कन्यायाश्च स्वयंवरे । सम्प्राप्य मातरं वीरो वस्तु प्राप्तं मयाधुना । तमुवाच स्वयं माता गृहाण भ्रातृभिः सह । धर्म्मोवरैश्च पूर्वञ्च परत्र मातुराज्ञया । द्रौपद्याः स्वामिसत्त्वेन हेतुना पञ्चपाण्डवाः । चतुर्द्दशानामिन्द्राणां पञ्चेन्द्राः पञ्चपाण्डवाः" "अहल्या द्रौपदी कुन्ती तारा मन्दोदरी तथा । पञ्च कन्याः स्मरेन्नित्यं महापातकनाशनम्" प्रातःस्मरणीयकीर्त्तने । [द्रेन निर्वृत्तादौ ।

**द्रौपदायनि** त्रि॰ द्रुपदेन निर्वृत्तादि कर्णा॰ फिञ् । द्रुप-

**द्रौपदेय** पु॰ द्रौपद्या अपत्यम् ढक् । युधिष्ठिरादीनां द्रौपद्यामुत्पन्ने प्रतिविन्ध्यादौ ते च विश्वदेवगणांशेनोत्पन्नाः यथाह भा॰ आ॰६७अ॰ । "द्रौपदेयाश्च ये पञ्च बभूवुर्भरतर्षभ ! । विश्वान् देवगणान् विद्धि सञ्जातान् भरतर्षभ ! । प्रतिविन्ध्यः सुतसोमः श्रुतकर्मा तथा परः । नाकुलिस्तु शतानीकः श्रुतसेनश्च वीर्य्यवान् । पाञ्चाल्यपि तु पञ्चभ्यः पतिभ्यः शुभलक्षणा । लेभे पञ्च सुतान् वीरान् श्रेष्ठान् पञ्चाचलानिव । युधिष्ठिरात् प्रतिविन्ध्यं सुतसोमं वृकोदरात् । अर्जुनाच्छ्रुतकर्माणं शतानीकञ्च नाकुलिम् । सहदेवाच्छ्रुतसेनमेतान् पञ्च महारथान् । पाञ्चाली सुषुवे वीरानादित्यानदितिर्यथा । शास्त्रतः प्रतिविन्ध्यन्तमूचुर्विप्रा युधिष्ठिरम् । परप्रहरणज्ञाने प्रतिविन्ध्यो भवत्वयम् । सुते सोमसहस्रे तु सोमार्कसमतेजसम् । सुतसोमं महेष्वासं सुषुवे भीमसेनतः । श्रुतं कर्म महत् कृत्वा निवृत्तेन किरीटिना । जातः सुतस्तवेत्येवं श्रुतकर्मा ततोऽभवत् । शतानीकस्य राजर्षेः कौरवस्य महात्मनः । चक्रे पुत्रं समानानं नकुलः कीर्त्तिवर्द्धनम् । ततस्त्वजीजनत् कृष्णा नक्षत्रे वह्निदैवते । सहदेवात् सुतं तस्मात् श्रुतसेनेति यं विदुः । एकवर्षान्तरास्त्वेते द्रौपदेया यशस्विनः" भा॰ आ॰ २२२अ॰ ।

**द्रौहिक** त्रि॰ द्रोहं नित्यमर्हति केदा॰ ठञ् । नित्यं द्रोहार्हे ।

**द्रौह्य** त्रि॰ द्रुह्यस्यापत्यं शिवा॰ अण् । द्रुह्यस्यापत्ये

द्वन्द्व् न० द्वन्द्व+द्वगो० लोपः । द्वन्द्वशब्दार्थे त्रिकाण्डशेषः ।

द्वन्द्व न० द्वौ द्वौ सहाभिव्यक्तौ “द्वन्द्वं रहस्यमर्य्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु” पा० द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोऽत्वञ्चोत्तरपदस्य नपुंसकत्वञ्च निपात्यते एष्वर्थेषु” सि०कौ० उक्तौ १रहस्यादौ “तत्र रहस्यं द्वन्द्वशब्दस्य वाच्यम् इतरे विषयभूताः । द्वन्द्वं मन्त्रयते रहस्यमित्यर्थः । मर्य्यादा स्थित्यनतिक्रमः । आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते माता पुत्रेण मिथुनं गच्छति पौत्रेण प्रपौत्रेणापीति मर्य्यादार्थः । व्युत्क्रमणं पृथगवस्थानम् । द्वन्द्वं व्युत्क्रान्ताः द्विवर्गसम्बन्धेन पृथगवस्थिताः । द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति द्वन्द्वं संकर्षणवासुदेवौ । अभिव्यक्तौ साहचर्य्येणेत्यर्थः । योगविभागादन्यत्रापि द्वन्द्व इष्यते” सि०कौ० “अत्र अन्यत्रापि तेन द्वन्द्वयुद्धान्यवर्त्तन्तेत्यादि सिद्धं द्वयोर्द्वयोर्युद्धान्यवर्त्तन्तेत्यर्थः वीप्सायां द्विर्वचनेऽप्यनेन तस्य रूपनिष्पत्तिः । द्वन्द्वसमाहारादौ तु द्वन्द्वशब्दप्रयोगः कथा कथा अवयवार्थराहित्येनाव्युत्पन्नत्वादिति बोध्यम्” शब्देन्दु० । तत्र रहस्यं द्वाभ्यामेव ज्ञेयम् । २कलहे ३मिथुने स्त्रीपुंसयोर्द्वये ४युग्मे च मेदि० ५रोगभेदे ६समासभेदे च पु० स च द्विधा समाहारेतरेतरयोगभेदात् तत्र संहतिप्राधान्ये समाहारद्वन्द्वः संहन्यमानप्राधान्ये इतरेतरयोगः इति वैयाकरणाः इतरेतरयोगशब्दे ९२१ पृ० दृश्यम् शब्दश०प्र० अन्यथा निरणायि यथा

“यद्यदर्थकशब्दानामव्यूहो यद्यत्प्रकारके । बोधे समर्थः स द्वन्द्वः समासस्तावदर्थकः ।” “यद्यदर्थोपस्थापकस्य क्रमिकयावच्छब्दानामस्तोमस्य निश्चयस्तत्तदर्थप्रकारकान्वयबोधं प्रति तत्त्वेन समर्थस्तावच्छब्दानामनिवह एव तावदर्थको द्वन्द्वसमासः । पाणिपादं वादय धवखदिरौ छिन्धीत्यादौ हि कर्मत्वाद्यंशे करचरणादिप्रकारकान्वयबोधं प्रत्यभादिधर्मिकः करचरणाद्युपस्थापकस्य पाणिपादादिक्रमिकनामस्तोमस्याव्यवहितोत्तरत्वसम्बन्धेन निश्चयः कारणम् अतः पाणिपादादिसमुदायः करचरणादितत्तदर्थे द्वन्द्वः । यत्तु पाणिपादमित्यादौ समाहारद्वन्द्वे सर्वत्रोत्तरपदे पाणिपादादिसाहित्ये लक्षणा अतएव नित्यं नपुंसकैकवचनं समाहारस्यैकत्वात् पदान्तरन्तु तादृशलक्षणायानिरूढत्वसम्पादकं तथाविधसाहित्यस्य च स्वाश्रयनिष्ठत्वादिसम्बन्धेनैव द्वितीयाद्यर्थकर्मत्वादौ साकाङ्क्षत्वात् पाणिपादं वादयेत्यादेर्नायोग्यत्वमिति नव्यैरुक्तं तन्न युक्तं तुल्यवदेकक्रियान्वयित्वं बुद्धिविशेषविशेष्यत्वं वा पाणिपादयोः साहित्यं तस्य च नानात्वसम्भवेन तद्गतद्वित्वादिबोधार्थं समाहारद्वन्द्वादपि द्विवचनाद्यापत्तेर्दुर्वारत्वात् । साहित्यस्य द्वित्वत्वेऽपि न समाहारद्वन्द्वस्य द्विवचनादिसाकाङ्क्षत्वं तादृशद्विगोरिवेति चेत् तर्हि पाणिपादप्रभृतीनां नानात्वेऽपि न तदर्थकस्य द्वन्द्वस्य द्विवचनाद्याकाङ्क्षत्वमित्येव वक्तुमुचितं कृतं साहित्यभक्त्या इत्थञ्च धर्ममित्यादेरयोग्यतया दुर्वारतापाताच्च नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वेन हस्तिनामश्वानाञ्च साहित्यस्य स्वाश्रयत्वादिसम्बन्धेन धनादावन्वयायोगात् तादृशसाहित्ये धनादेरभेदविरहाच्च । समाहारपरिभाषा तु क्लीवलिङ्गत्वनित्यैकवचनत्वादिपदसंस्कारोपयोगितयैवोपपन्ना न द्वन्द्वस्यार्थव्यवस्थापिका । एतेन धवखदिरावित्यादावितरेतरद्वन्द्वेऽप्युत्तरपदे धवखदिरसाहित्यार्थे लक्षणा अन्यथा द्विवचनादेः प्रकृत्यर्थतावच्छेदकत्वस्यैव पर्य्याप्तिसम्बन्धेन स्वार्थद्वित्वाद्यनुभावकत्वव्युत्पत्तेर्धवखदिरावित्यतो धवद्वयस्य खदिरद्वयस्य च प्रतीत्यापत्तेरिति मीमांसकानाम्मतमप्यपास्तं तुल्यवदेकक्रियान्वयित्वं धवखदिरविशेष्यकधीविशेष्यत्वं वा धवखदिरयोः साहित्यं तदाश्रयस्य धवद्वयादेरपीति तादृशसाहित्याश्रयलक्षणपक्षेऽपि धवखदिरावित्यतो धवद्वयादिबोधस्य दुर्वारतापत्तेः । न च स्वितयाविशेषणकधवखदिरधर्मिकधीविशेष्यत्वमेव प्रकृते धवखदिरयोः साहित्यं तच्च न धवद्वयादेरिति वाच्यं तादृशसाहित्यान्वयस्याननुभवेनाकल्पनात् तथाच तत्र नानाधर्माणां प्रकृत्यर्थतावच्छेदकत्वं तत्र तत्तद्धर्मावच्छिन्ने समुदित एव पर्य्याप्तिसम्बन्धेन द्वित्वादिबोधने द्विवचनादिकं साकाङ्क्षं न तु तादृशैकधर्मावच्छिन्नं परित्यज्य तथाविधापरधर्मावच्छिन्ने, यतो धवखदिरावित्यादितो धवयोः खदिरयोश्च नावबोधप्रसङ्ग इति तत्त्वम् । घटघटेत्यादिकस्य घटकलशेत्यादिकस्य घटतटेत्यादिकस्य च क्रमिकनामस्तोमस्य निश्चयत्वेन घटादेरन्वयबोधं प्रत्यहेतुत्वमतो न तादृशनामनिवहो घटाद्यर्थे द्वन्द्वः । अतएव समस्यमानपदार्थयोस्तत्तावच्छेदकयोर्वा यत्र मिथोभेदस्तत्रैव द्वन्द्वस्य साधुत्वज्ञापनाय “चार्थे द्वन्द्व” इति पाणिनिः प्राह । अतएव भेदगर्भधवद्वयार्थकं धवशब्दमन्तर्भाव्य धवश्च खदिरश्चेत्यादिकं विग्रहमस्य प्रयुञ्जते वृद्धाः, सम्पादयते च तत्र मिथोभेदप्राप्त्यर्थं प्रकारद्वयं, पीततत्पटयोस्तादात्म्यमित्यादौ तत्पटादेः पीताद्यभिन्नत्वेऽपि पीतत्व-

नतत्पटत्वाद्योः पदार्थतावच्छेदकयोरन्यैव भेदः सुवर्णस्तु द्वित्वं न तत्र प्रकारत्वेऽन्वेति पर्याप्तिसम्बन्धेन पीततत्पटे तस्य बाधात् सुवर्णद्वित्वादेस्तादृशसम्बन्धेनैव प्रकारत्वस्याका-ङ्क्षत्वात् परन्तु प्रकारत्वतावच्छेदकयोः पीतत्वतत्पटत्वयो-रेव व्युत्पत्तिवैचित्र्यात्। अतएव द्व्यणुकारम्भकसंयोगना-शेभ्यः कार्यद्रव्यं नश्यतीति भाष्यस्य योग्यतासम्बन्धे-नैकत्वस्य कार्यद्रव्येऽन्वयमभिधित्सुनाचार्येण जात्य-भिप्रायकमेकवचनमिति गुणकिरणावल्यामभिहितम्। अतएव च "श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदे-वरौ" इत्यत्र च द्विवचनमहिम्ना स्वामिनो भ्राता देवृ-देवरोभयपदवाच्य इत्यर्थः सुभूत्यादिभिः सङ्कल्प्यते। यदि च पटद्वयासत्त्वेऽपि भूतले पीतपटावित्यादिकः प्रयोगः स्यात् पीतत्वपटत्वोभयाश्रयस्य तत्र सत्त्वादेवं पीतपटयोरभेद इत्यादितः शुक्लपटत्वादेरबोधप्रसङ्ग नटं ये सुवर्णद्वित्वस्य प्रकारत्वादित्यादिस्वच्छमीष्यते तदा गोदौ ग्राम इत्यादाविव साधुत्वार्थमेव तत्र द्विवचनमिति वदन्ति। विद्यतेर्भिन्दतिविन्दतीनामभिद् इत्यत्र विद्यत इत्यादिशब्दो न विदधातुत्वेनोपस्थापकः किन्तु सत्ता-द्यर्थकतादृशधातुत्वेनैव। मृगपाण्डरयोः पदार्थयोर्भेदे-ऽपि हरिणहरिणावित्यप्रयोगात्। समानशब्दयोर्द्वन्द्व-प्रसक्तावेकशेषोऽव्युत्पत्तिसिद्धत्वेन हरिणावित्यत्र लुप्तलु-प्ताभ्यामेव हरिणपदाभ्यामुपस्थितयोर्मृगपाण्डरयोर्बोधः हरी नमस्यावित्यत्राप्युक्तरीत्यैव हरिपदाभ्यां विष्णु-चन्द्रयोरवगतिः। अन्यथा हरिहरौ नमस्यावित्यपि प्रयोगापत्तेः हरी च हरयश्चेति विग्रहस्थले यत्र हरय इत्यादितः समस्यमानपदार्थानामवान्तरसंख्यावगमस्तत्र तत्संख्यावच्छिन्नस्वार्थकस्य लुप्तस्य हर्यादिपदस्यो-त्तरत्वेन प्रतिसंहितमेव हर्यादिपदं तथाविधस्वार्थस्य लक्षणया बोधकं तदप्रतिसन्धाने तु श्रुतमेव हरिपदं विष्णुद्वयोः सिंहत्रयस्य चैकया लक्षणया शक्तिभ्रान्त्यैव वा। नच विग्रहस्य सुवर्णस्य द्वित्वादेः समासाप्रतिपाद्यत्व-नियमात्तथाविधद्वित्वत्रित्वानभिधेयस्य द्वन्द्वस्यैवासाधुत्वा-दुक्तक्रमेणैकशेषो न युक्तः, पत्ताकापरि हस्त्यश्वमित्यादौ व्यभिचारेणोक्तनियमस्यासत्त्वात् एकत्वे चैकत्वानि चेति विग्रहे च एकत्वानीत्येकशेषस्य गुणकिरणावल्यामाचार्यै-रभिहितत्वाच्च। हंसश्च हंसी च इत्यर्थे हंसहंसावित्यप्र-योगात् तत्रापि "पुंवा स्त्रियाः सारूप्ये" इत्यनुशिष्टे हं-सीपदस्य लोपे हंसावित्यत्र लुप्तमेव हंसीपदमनुसन्धाय

स्त्रीपुंसयोर्बोधः तन्नोपपन्नं जातमस्तु हंसपदे स्त्रीहंसत्व-पुरुषहंसत्वाभ्यां विभिन्नरूपाभ्यामेकस्याः शक्तेर्लक्षणया वा ग्रहादेव। वस्तु तत्र हंसपदमेव लक्षणया हंसीत्वेन शक्त्या च हंसत्वेन बोधकं सुवर्णस्तु पुंस्त्वं हंस एवा-न्वेति न तु हंस्यामयोग्यत्वात् इति मतं तन्न तथासति स्त्रीहंसत्वहंसत्वयोः पदार्थतावच्छेदकयोर्मिथोभेदविरहेण द्वन्द्वाप्रसक्त्यैकशेषस्य हंसश्च हंसी च इत्यस्य दुरुत्वापत्तेः अन्यथा घटतद्घटावित्यपि द्वन्द्वप्रसङ्गात् हंसी च हंसा-श्चेति विग्रहेऽपि हंसा इत्यतो हंसद्वयहंसत्रययोः प्रागु-क्तरीत्यावगमः। दुन्दुभी च दुन्दुभयश्चेति विग्रहे दुन्दुभी सुन्दरावित्यत्राभेदयोर्बोधनस्थले पुंलिङ्गस्यैव दुन्दुभिश-ब्दस्य शिष्टतया तद्विशेषणत्वादेव सुन्दरादेः पुंस्त्वम्। युवा च युवतिश्च इत्यर्थे युवानावित्यत्राप्युक्तरीत्यैव युव-तीयौवनवतोर्बोधः वरटाहंसौ वत्सधावरसावित्यादौ तु स्त्रीपुंसयोर्द्वन्द्वेऽपि पदवाच्यविरहादेकशेषः दम्पत्य-र्थमनुकरणे ब्राह्मणावानयेदित्यत्रापि ब्राह्मणश्च ब्राह्मणी च इति विग्रहे प्रागुक्तदिशा ब्राह्मणभार्यापत्योरव-गमः। एकश्चैका चेत्यत्र एकौ, द्वौ च द्वे चेत्यत्र द्वौ, उभे चोभौ चेत्यत्र उभौ त्रयश्च तिस्रश्च इत्यत्र च विग्रहे त्रय इत्यादिरेकशेष इष्यत एव। पाश्चा-त्यैकशेषेष्वत्रत्येषु स्त्रीपुंसयोर्बहुत्वमनभीप्स्य साङ्-ख्येन द्वन्द्वस्थले तु पुंस एव लुक् तेन मेषाश्च मेषाश्चेत्यर्थे मेषा इत्यत्रापि लुप्तं बहुमेषाणां तावकं मेषपदं प्रति-सन्धत्त एव बहुमेषाणामनेकमेषीणां चावगमः। एवं महिषाश्च महिष्यश्चेत्यर्थे महिषा इत्यत्रापि महि-षपदं बहूनां महिषाणां, मृगाश्च मृग्यश्चेत्यर्थे मृगा इत्यत्र तु मृगादेरप्राण्यत्वाच्च पुंसो लुक् परन्तु स्त्रियाः। तथा गर्दभाश्च गर्दभ्यश्चेत्यर्थे गर्दभा इत्यत्रापि खराणा-मेकशफत्वात् बर्कराश्च बर्कर्यश्च इत्यर्थे बर्करा इत्यत्रापि तरुणार्थकत्वात्। स्वसा च भ्राता चेत्यर्थे भ्रातरावित्यत्र पुत्रश्च दुहिता चेत्यर्थे पुत्रावित्यत्र च विरूपैकशेषेऽपि स्वसृपदं दुहितृपदञ्च लुप्तं प्रतिसन्धायैव भ्रातृभगिन्योः पुत्रकन्ययोश्चावगमः। "ज्येष्ठपुत्रदुहितोश्च ज्येष्ठे भागि न कारयेत्" इत्यादिकस्तु प्रयोगः परिचिन्तनीयः। स च चैत्रश्चेति विग्रहे त्यदादिना तदन्यस्य द्वन्द्वे कृते तावित्यत्रापि लुप्तं चैत्रादिपदमनुसन्धत्त एव चैत्राद्यव-गमः स च त्वञ्चेत्यादि विग्रहेण किंपदान्यत्यदादिद्वय-मध्ये द्वन्द्वे तु पूर्वस्यैव वा लुक् अन्त्यस्यैव वा त्यदादेर्बुधि

शुनामित्यत्र त्यदादावप्युक्तक्रमेणैव तदर्थयुग्मदर्थयोर्बोधः स
च स चेत्यत्रापि विभिन्नार्थयोर्विवक्षायां समूलकाषितोऽपि
तदादिः कौमारापठित एव "तत्तन्मातुलकस्योऽसौ यद्य-
हित्यातिनिर्ब्बेत्यादौ तु न त्यदादिगणेन द्वन्द्वः परन्तु
तदाद्यव्ययेन यथा "तत्तत्तामसभूतभौतव"इत्यादौ यत्तद
दिव्यतिरिक्तानामेवाव्ययानां सरूपैकशेषस्य क्लृप्तत्वात्
प्रयोगानुरोधित्वात् कल्पनायाः। कथ त्यक्तेत्यादिविवक्षेण
किंवा तादृशद्वन्द्वे तु तदन्यस्यैव त्यदादेर्लुकि कावित्या-
दिक एव प्रयोगः चैत्रस्य पितरावित्यत्रापि विरूपैकशेषे
श्रुतस्य मातृपदस्य स्वरूपान्मातुरवगमः तदन्यतरस्तु पितृ-
पदे जनकशरीरत्वेन लक्षणया मातापित्रोरवगतिरिति
प्राहुः। कौमारास्तु माता पितुर्द्वन्द्वे माता पितृभ्यां
मातारपितराभ्यामिति प्रयोगद्वयोदर्शनाच्चैत्रस्य पितरा-
वित्यत्र नैकशेषः परन्तु पुष्पवन्तादिपदवन्मातृत्वपितृत्वाभ्यां
विभिन्नरूपाभ्यामेकशक्तिमदेव नियतद्विवचनाकाङ्क्षं पितृ-
पदं प्रकृत्यन्तरम्। एवं श्वश्रू च श्वशुरश्चेत्यर्थे श्वशुरावित्यत्र
श्वशुरपदमपि श्वश्र्वा श्वशुरस्य द्वन्द्वे श्वश्रूश्वशुरावित्येव
प्रयोगादित्याहुः"। द्वन्द्वं विभजते। "द्वौ भेदावस्य
शास्त्रोक्तौ समाहारेतरेतरौ। एकान्यवचनाकाङ्क्षा-
हीनोपादानतश्च तौ"। "अस्य द्वन्द्वस्य द्वौ भेदौ
समाहार इतरेतरश्च शास्त्रसिद्धौ तत्रैकवचनान्यवचनाकाङ्क्षा-
विहीनः समाहारः तथाविधवचनाकाङ्क्षश्चेतरेतरः पाणि-
पादं इत्यश्वमित्यादितो हि करचरणादीनां बहूनाम-
प्यगतावेकवचनमेव प्रमाणं धवखदिरावित्यादौ द्विवच-
नादिः पदिस्थन्दिस्थिरेदीदित्यादौ तु पदिस्थन्दिभ्यां
सहितः स्थिदिरिति विग्रहे मध्यपदलोपी कर्म्मधारयो
यथा अव्याप्त्यतिव्याप्तेरिति मणिग्रन्थादौ"।
केचित् पदभेदे द्वन्द्वमिच्छन्तः "अप्येकदन्तहेरम्ब
लम्बोदरगजाननाः" इत्युदाजहुः तन्न समीचीनम् चो-
ऽवधारणे इत्यादिवत् एकदन्तादिशब्दानामेवात्र पदार्थ-
त्वात् तथाभूतशब्दानाञ्च विभिन्नानुपूर्वीकत्वेन भिन्नत्वात्
एते शब्दा गणेशे शक्तिमन्त इत्येवं कोषादायन्वयबोधात्।
घटकलसयोरभेद इत्यादौ तु घटपदकलसपदप्रतिपाद्यत्व-
रूपपदार्थतावच्छेदकभेदात् न द्वन्द्वानुपपत्तिरिति दिक्
"देवताद्वन्द्वे" "चार्थे द्वन्द्वः" पा० "द्वन्द्वः सामासिकस्य च"
गीता। तत्र युगले "द्वन्द्वं ते मन्दचेता यदि जपति ज-
नोवारमेकं कदाचित्"कर्पूरस्तवः। "विरहविधुरकोकद्व-
न्द्वशोकं विभिन्दन्" उद्भटः। मिथुनम् स्त्रीपुंसयोर्द्वित्वम्

तत्र "द्वन्द्वानि भावं क्रियया विवव्रुः"कुमा० "मृगद्वन्द्वेषु
पश्यन्तौ स्यन्दनाबद्धदृष्टिषु" रघुः। "क्षुत्पिपासे शोक-
मोहौ रागद्वेषौ तथैव च। लाभालाभौ च शीतोष्णौ
तथा मानापमानकौ। कामक्रोधप्रभृतयोः द्वन्द्वशब्देन
वर्णिताः" इत्युक्ते परस्परविरुद्धस्वभावे शीतोष्णादौ
"न द्वन्द्वदुःखमिह किञ्चिदकिञ्चनोऽपि" माघः "तितिक्षा
शीतोष्णादिद्वन्द्वसहिष्णुता"वेदान्तसा० "द्वन्द्वातीतो विमत्सरः"
गीता। आसनजये च द्वन्द्वदुःखैरनभिभवः योगसू० उक्तः
"ततो द्वन्द्वानभिघातः" "शीतोष्णादिभिर्द्वन्द्वैरासन-
जयान्नाभिभूयते" भा०।
७दुर्गे युक्तिकल्प० तद्विशेषादिकं तत्रोक्तं यथा
"राज्ञोबलं न हि बलं द्वन्द्वमेव बलं बलम्। अप्यल्प-
बलवान् राजा स्थिरो द्वन्द्वबलाद्भवेत्" तथा च "एकः
शतं योधयति प्राकारस्थो धनुर्धरः। शतं दशसह-
स्राणि तस्माद्दुर्गं विशिष्यते। अकृत्रिमं कृत्रिमञ्च तत्
पुनर्द्विविधं भवेत्। यद्दैवरचितं द्वन्द्वं गिरिनद्यादि
संश्रितम्। अकृत्रिममिदं ज्ञेयं दुर्लङ्घ्यमरिभूभुजाम्।
प्राकारपरिखारम्भसंश्रयं यत्नवेदिकम्। कृत्रिमं नाम-
विज्ञेयं लङ्घ्यालङ्घ्यन्तु वैरिणाम्" तत्राकृत्रिमद्वन्द्वमुक्तं
तत्रैव यथा "अत्युच्चविस्तीर्णशिरा दुरारोहः सका-
ननः। सजलाशयसम्भारभोज्यद्रव्यसमाश्रयः। सुखनिः-
सरणो द्वन्द्वः पर्वताख्यो महीभुजाम्। नद्योगभीर-
विस्तीर्णाश्चतुर्दिक्षु व्यवस्थिताः। तन्मध्ये भूप्रदेशो यो
नदीद्वन्द्वः स उच्यते। यदत्युच्चिरकालीनं दुर्लङ्घ्यं वि-
पिनादिकम्। तन्मध्यरचिता भूमिर्द्वन्द्वत्वेनोपतिष्ठते।
वनद्वन्द्वमिति ख्यातं यथापूर्वं महत्तरम्" कृत्रिमद्वन्द्व-
मुक्तं तत्रैव यथा "यस्मिन् राज्ये गिरिर्नास्ति नद्यो वा
गहनोदकाः। तस्य मध्ये महीपालः कृत्रिमं द्वन्द्वमार-
भेत्। गजैरलङ्घ्या विस्तीर्णा गम्भीराः पूर्णवारयः।
द्वन्द्वत्वेन समादिष्टाः परिखा बहुवादसः। विशाल-
शालं सुघनं बहुकपाटकिसङ्कटम्। द्वन्द्वत्वेन समा-
दिष्टं विस्तीर्णं विषमं वनम्। अधोऽधोबध्यमानोऽपि
कन्दरोऽल्पजलं प्लवन्। द्वन्द्वत्वेन समुद्दिष्टः दुर्लङ्घ्यो
हि स भूभुजा। सर्वतः परिखां कृत्वा निबध्योपरिक-
न्दरम्। नव्यामस्तु तदेशत्वात् जलद्वन्द्वं तदुच्यते।
एवामभावे निम्नस्य भूप्रदेशस्य बन्धनात्। यतोऽत्र स्रवते
वारि जलद्वन्द्वं ततोभवेत्। एतयोरपि संमिश्रात् सं-
मिश्रं द्वन्द्वमाचरेत्। आमिश्र कृत्रिमं द्वन्द्वं बलवद्-

वैरिणो द्विषि । अन्यत्र तथैवं द्वन्द्वं ज्ञात्वा वरयति वैचेत् । रणपतिर्यदा वैरी स्यात्तद्द्वन्द्वं तदाचरेत् । गजाश्वगामचे वैरी अश्वसङ्गं तदाचरेत् । गिरिद्वन्द्वं नृपः कुर्यात् यस्य स्याद् द्विविधो रिपुः । सर्वो हि त्रिविधो युद्धः समासादुपदिश्यते । प्रतिराजस्य राज्यान्ते प्रकटे गुप्त एव च । राज्यान्ते सैनिकान् रक्षेत् प्रकटे निवसेत् स्वयम् । गुप्तेऽस्मकोषसञ्चारं संरक्षेदिति निश्चयः" । तत्र सामान्यतो गुप्ता नीतिशास्त्रोक्ताः यथा "सप्रवेशापसरणं द्वन्द्वमुत्तममुच्यते । अन्यत्र सन्निपातेन न तादृगुपयापयेत् । चतुर्द्वन्द्वं महीद्वन्द्वं गिरिद्वन्द्वं तथैव च । मनुष्यद्वन्द्वमित्याद्यैर्वेद्वन्द्वं प्रकीर्तितम् । बोद्धृशून्यं हि यत् द्वन्द्वं मृतकायसमं हि तत्" । अन्यत्र च "यावत् प्रमाणं नगरं हि राज्ञां ततो भवेदुत्तममध्यमान्तम् । त्रिंशन्दशैव गुणोत्तरेण त्रिदेशजानां धरणीपतीनाम्" गर्गस्तु "यदन्यद् द्विविधं द्वन्द्वं ब्रूते धरणीभुजाम् । ताभ्यामेवातिरिच्येत मन्त्रद्वन्द्वं विशेषतः । अन्येषु दैवात् भिन्नेषु मन्त्रद्वन्द्वात् जयेन्नृपः । मन्त्रद्वन्द्वे हि भिन्ने हि न चान्यत् कार्यकारकम्" । भोजः "तदेव वैरिदुर्लङ्घ्यं विस्तीर्णविवरञ्च तत् । सप्रवेशापसरणं तद्द्वन्द्वमुत्तमं विदुः" ।

**द्वन्द्वगद** पु० द्वन्द्वरूपो गदः । रागद्वेषादिरूपे रोगे । "स्वयं हरिः सर्वमिदं जनार्दनो नान्यं ततः कारणकार्यजातम् । ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्ति" विष्णु पु० ।

**द्वन्द्वचर** पुंस्त्री द्वन्द्वीभूय मिथुनीभूय चरति चर—ट । चक्रवाके हेमच० स्त्रियां जातित्वात् ङीष् । "शशिना पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्त्रिणम्" रघुः । णिनि द्वन्द्वचारिन् अप्यत्र त्रिका० स्त्रियां ङीप् ।

**द्वन्द्वज** त्रि० द्वन्द्वात् जायते जन—ड । वातपित्तश्लेष्मणां मध्ये द्वाभ्यां दोषाभ्यां जाते १रोगादौ माधवनिदानम् २कलहात् जाते च ।

**द्वन्द्वयुद्ध** न० द्वयोर्द्वयोर्युद्धम् । द्वयोर्द्वयोर्युद्धे "कैराते द्वन्द्वयुद्धे च यदिदं समवर्तत" भा०व०१९५अ० । "बहूनि भुवि चित्राणि द्वन्द्वयुद्धानि सञ्जय !" भा०द्रो० १५अ० ।

**द्वय** न०द्ववयवम् द्वि—अवयवे तयप् तस्य वा अयच् । १द्वयोरवयवे २द्वित्वे च अत्र स्त्रीत्वमपि ङीप् । "अतद्वयीजित्वरसुन्दरान्तरे" नैष० "कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः" भा०र० द्वे अवयवे यस्य अयच् । २द्वित्वान्विते त्रि० अयचः तयप्स्थानिकत्वात् जसि सर्वनामता "द्वयेऽप्यसुच्यन्त विनीतमार्गाः" माघः "अथो द्वयेषामपि मेदिनीभृतामिति" माघे द्वयेषामित्यत्राथ अन्ये तु द्वयं द्वित्वमिच्छन्ति इच—क्विप् तेषामिति समर्थयन्ते । स्त्रियां ङीप् । "द्वयीषु निःक्षेप्य स्वार्पितं द्वयम्" कुमा० अत्र द्वयेऽपीति पाठान्तरम् ।

**द्वयाग्नि** पु०द्वयः द्विरूपोऽग्निरत्र । पाठिङ्गे चित्रके (चिता) इति भाषा द्रव्ये शब्दच०तस्य प्रचुराग्निरूपत्वात्तथात्वम् ।

**द्वयातिग** त्रि० द्वयं रजस्तमसी द्वित्वमतिगच्छति अति+गम—ड । रजस्तमोभ्यामनभिभूतसत्त्वगुणयुक्ते अमरः ।

**द्वयाविन्** त्रि० द्वयमस्त्यस्य वेदे "बहुलं छन्दसि" मत्वर्थे विनि "छन्दोविन्प्रकरणे अष्टामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम्" वार्ति०विनि पूर्वपददीर्घश्च । द्वित्वयुक्ते स्त्रियां ङीप् ।

**द्वयु** पु०द्वाभ्यां प्रकाराभ्यां युक्ता द्वि+यु—ज—कु पृषो०। प्रत्यक्षतो हितवादिनि परोक्षतोऽहितवादिनि एवं द्विप्रकारयुते मतौ "दुर्हणा वा उपद्वयुः" ऋ०८।१८ १४माधवभा०

**द्वर** त्रि० द्वृ—आहतौ अच् । आवरणकारके द्वृ—रन् । द्वरि तमार्थे "स हि द्वरो द्वरिषु वव्रे" ऋ०१।५२।३

**द्वाः(द्वा)स्थ** पु० द्वारि तिष्ठति स्था—क वा विसर्गलोपः । द्वारपाले अमरः । "ते सद्मनि गिरेर्वेगात् दुत्सवाद्वाःस्थसूचिताः" कुमा० "विद्वानपि तयोर्द्वाःस्थः समयं समुपप्नुवोऽभिनत्" रघुः । [अमरः ।

**द्वाः(द्वा)स्थित** द्वारि स्थितः वा विसर्गलोपः । द्वारपाले

**द्वा(द्वि)चत्वारिंश** त्रि० द्वा(द्वि)चत्वारिंशतः पूरणः डट् । येन द्वाचत्वारिंत् संख्या पूर्यते तस्मिन् । स्त्रियां ङीप् ।

**द्वा(द्वि)चत्वारिंशत्** स्त्री द्व्यधिका चत्वारिंशत् द्विशब्दस्य वा आत्वम् । द्व्यधिकचत्वारिंशत्संख्यायाम् तद्वन्विते च । तत्प्रमाणमस्य ठन् । द्वा(द्वि)चत्वारिंशतिक तत्प्रमाणे त्रि० पूरणे तमप् द्वा(द्वि)चत्वारिंशत्तम तत्संख्यापूरणे त्रि० ।

**द्वाज** पु० द्वाभ्यां जायते जन—ड पृषो० । द्वाभ्यां जाते "नाम निर्वचनं तस्य श्लोकमेकं पुरा जगुः । मूढे ! भर द्वाजमिमं भरद्वाजं बृहस्पते ! । यातौ यदुक्त्वा पितरौ भरद्वाजमथाह्वयत्" भाग०९।२०।५ "तत्र प्रथमं पुत्रं त्यक्त्वा यान्तीं ममतां बृहस्पतिराह हे मूढे ! इमं पुत्रं भर पुषाण । भर्तुर्बिभेमीति चेत्तत्राह द्वाजम् एकस्य क्षेत्रे अन्यस्य वीजेनेत्यादिरूपं द्वाभ्यां जातं अतस्त्वाप्ययं पुत्र इति तस्मात् न भयशङ्केत्यर्थः । एवमुक्ता सती तं

प्रस्थाय ते इत्युच्यते । त्वमिदं भर यतो द्वाजं द्वाभ्यां जाताभ्याम् अन्यायतो जातं यतो नाहमेकाकिनी भरामीत्यर्थः । यद्यप्यादिष्टावपि पितरौ जनताहृगतौ विवदमानौ पुत्रं परित्यज्य यातौ ततो द्वेतोरत्वं भरद्वाज इति" श्रीधरस्वामी ।

**द्वात्रिंशत्** स्त्री द्व्यधिका त्रिंशत् शाकपा० । द्व्यधिकत्रिंशत् संख्यायां तद्युक्ते च । तस्याः पूरणः डट् । द्वात्रिंश-तमप् द्वात्रिंशत्तम तत्संख्यापूरणे त्रि० स्त्रियां ङीप् ।

**द्वात्रिंशदपराध** पु० कर्म० । भगवदाराधनेश्वरविषये द्वात्रिंशत् संख्यकेषु अपराधेषु । ते च अपराधाः तन्त्रसारे दर्शिता यथा "तन्त्रान्तरे यानैर्वा पादुकाभिर्वा यानं भगवतो गृहे । देवोत्सवेष्वसेवा च अप्रणामस्तदग्रतः । उच्छिष्टे चैव चाशौचे भगवद्वन्दनादिकम् । एकहस्तप्रणामश्च तत्पुरस्तात् प्रदक्षिणम् । पादप्रसारणञ्चाग्रे तथा पर्यङ्कबन्धनम् । शयनं भक्षणञ्चापि मिथ्याभाषणमेव च । उच्चैर्भाषो मिथो जल्पो रोदनानि च विग्रहः । निग्रहानुग्रहौ चैव स्त्रीषु च क्रूरभाषणम् । कम्बलावरणञ्चैव परनिन्दा परस्तुतिः । अश्लीलभाषणञ्चैव अधोवायुविमोक्षणम् । शक्तौ गौणोपचारश्च अनिवेदितभक्षणम् । तत्तत्कालभवानाञ्च फलादीनामनर्पणम् । विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनस्य यत् । पृष्ठीकृतासनञ्चैव परनिन्दा परस्तुतिः । गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा । अपराधास्तथा विष्णोर्द्वात्रिंशत् परिकीर्त्तिताः" ।

**द्वात्रिंशल्लक्षण** पु० द्वात्रिंशत् लक्षणानि शुभलक्षणानि यस्य । शुभलक्षणान्विते महापुरुषलक्षणयुते नरे । काशी० ख० ११ अ० । "पञ्चदीर्घः पञ्चसूक्ष्मः सप्तरक्तः षडुन्नतः । त्रिपृथुलघुगम्भीरो द्वात्रिंशल्लक्षणस्त्विति" "पञ्च दीर्घाणि यस्यापि यथा दीर्घाश्च बाहवः । भ्रुवौ नेत्रे हनू नासा-वक्षसी तनयस्य ते । त्वक्केशाङ्गुलिदशनाः पर्वाण्यङ्गुलि-जान्यपि । तथास्य पञ्च सूक्ष्माणि दिक्पालपदभाक् यथा । पाण्यङ्घ्रि नखनेत्रान्तं तालुजिह्वाधरोष्ठकम् । सप्तारक्तञ्च सप्ताङ्गीकम् राज्यसुखप्रदम् । कक्षा कुक्षिकक्षकरवक्त्रं षडुन्नतम् । तथाच दृश्यते बाले षड्दैवर्यं भाक् यथा । ललाटकटिवक्षोभिः त्रिविस्तीर्णो यथाद्भुतो । पर्वतस्योतिगम्भीर्यं यथा प्राप्स्यति नान्यथा । ग्रीवाजङ्घामेहनैश्च त्रिभिर्ह्रस्वोऽवलोकितः । स्वरेण नाभ्यां चाभिख्या त्रिगम्भीरः शिशुः शुभः ।"

**द्वादशी** स्त्री० द्वादशानां पूरणः द्वादशन्+डट् । द्वादशसंख्यापूरणे स्त्रियां ङीप् । सा च द्वादश्याः चन्द्रकलायाः सूर्यकिरण-प्रवेशनिर्गमयोरन्यतरक्रियारूपायां तदुपलक्षित कालरूपायां वा तिथौ तस्यां व्रतकालनिर्णयः कालमा०उक्तो यथा "अथ द्वादशी निर्णीयते । सा च शुक्लादिपक्षद्वये पूर्वविद्धा ग्राह्या । स्कन्दपुराणेऽपि "द्वादशी च प्रकर्त्तव्या एकादश्या युता विभो ! । सदा कार्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैः" इति । उत्तरविद्धां प्रतिषेधति वृद्धवशिष्ठः । "द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी । चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी" इति । नन्वेवं सत्येकादश्युपवासो द्वादश्युपवासश्चेत्युभयमेकस्मिन्नह्नि प्राप्नोति सत्यम् तथापि नोभयशास्त्र्योरन्योऽन्यं विरोधाभावात् सहैवानुष्ठानं भविष्यति । नन्वेकं व्रतमसमाप्य व्रतान्तरमनुष्ठातुमशक्यम् । "असमाप्ते व्रते पूर्वे नैव कुर्य्याद्व्रतान्तरम्" इति वाक्यात् नैवम् इदं हि वाक्य-मेकव्रतस्य मध्ये व्रतान्तरोपक्रमं निषेधति प्रकृते तु व्रतद्वयस्यापि सहैवोपक्रम इति तन्त्रेणानुष्ठानं भविष्यति । नन्वस्त्वेवं खण्डतिथौ, अखण्डतिथौ त्वेकादशी द्वादश्युपवासौ द्वौ नैरन्तर्येण प्राप्नुतः । तत्र पारणमन्तरेण प्रथमोपवासस्यासमाप्तत्वात् । द्वितीयोपवासस्य प्रक्रमो न सम्भवतीति चेत् नैवम् अद्भिः पारणं कृत्वा द्वितीयोपवासस्य प्रक्रमयितुं शक्यत्वात् । तादृशं तु पारणमशितानशितोभयात्मकम् । तत्राशितरूपत्वात् पूर्वोपवासं परिसमापयति । अनशितरूपत्वेनोत्तरोपवासं न विहन्ति । एतच्च शास्त्रान्तरं दर्शपूर्णमासप्रकरणे याजमानब्राह्मणे श्रूयते "यदानश्नन्नुपवसेत् पितृदेवत्यः स्याद्यदश्नीयात् रुद्रोऽस्य पशूनभिमन्येतापोऽश्नाति तन्नैवाशितं नैवानशितं न क्षोधुको भवति नास्य रुद्रः पशूनभिमन्यते" इति । तस्मादुदकपारणेनोपवासद्वयनिर्वाहः । एतच्च सर्वतिथिसाधारणम् । प्रकृते त्वेकादशीद्वादश्योर्दैवतैक्यादुदकपारणमन्तरेणापि न कश्चिद्दोषः । अतएव स्मर्यते "एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् । न तत्र विधिलोपः स्यादुभयोर्दैवतं हरिः" इति । उपवासद्वयाशक्तो केवलद्वादश्युपवासेनोभयोः फलं विध्यति तथा च स्मृतिः "एकमेकादशीं सम्यक् द्वादशीं समुपोषयेत् । पूर्वोपवासजं पुण्यं सर्वं प्राप्नोत्यसंशयम्" इति । द्वादश्यां तु काम्योपवासो मार्कण्डेयेन दर्शितः "द्वादश्यामुपवासेन विशाखो नृप ! सर्वशः ।

चक्रवर्त्तित्वमतुलं संप्राप्ता मनुजाः श्रियः” इति । अथाष्टौ महाद्वादश्यः, शुद्धैकादशीयुता द्वादशी उन्मीलिनीसंज्ञा ।१ द्वादश्येव शुद्धाधिका वर्त्तते चेत् सा वञ्जुली२ नामरात्रयस्पर्शिनी त्रिस्पृशा३ अपि पर्व्वणः सम्पूर्णाधिकत्वे पक्षवर्द्धिनी४ । नक्षत्रयोगतश्चत्वारः निर्ण० सि० उक्ता जयादिकाश्चतस्रः हेमा०प्र० उक्ता यथा “जया१ च विजया२ चैव जयन्ती३ पापनाशिनी४। सर्व्वपापहरा ह्येता कर्त्तव्या फलकाङ्क्षिभिः । एकादश्यां शुक्लपक्षे यदा ऋक्षं पुनर्व्वसुः । सा नाम्ना च जया१ ख्याता तिथीनामुत्तमा तिथिः । तदुपोष्य व्रती पापात् मुच्यते नात्र संशयः । अग्निष्टोमस्य यज्ञस्य फलमाप्नोति मानवः१ । यदा शुक्ले तु द्वादश्यां नक्षत्रं श्रवणं भवेत् । विजया२ सा तथा प्रोक्ता तिथीनामुत्तमा तिथिः । तस्यां स्नातः सर्व्वतीर्थे स्नातो भवति मानवः । दानं सहस्रगुणितं तथा चैव पयोव्रतम् । होमजपोपवासैश्च सहस्रगुणं फलं लभेत् । यदा च शुक्लद्वादश्यां रोहिणी च प्रजायते । जयन्ती३ नाम सा प्रोक्ता सर्व्वपापहरातिथिः । सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु । तत् क्षालयति गोविन्दस्तस्यामभ्यर्च्चितस्तथा । यदा च शुक्लद्वादश्यां पुष्यं भवति कर्हिचित् । तदा साऽतिमहापुण्या कथिता पापनाशिनी४ । यो ददाति च यत्पुण्यं नित्यं संवत्सरे नरः । उपवासस्तु तस्यां च यः करोति नरवृषभम् । तस्यां जगत्पतिर्द्देवः सर्व्वलोकेश्वरो हरिः । प्रत्यक्षतां प्रयातस्तु तदनन्तफलं स्मृतम्” एकादशीव्रतयोः साङ्कर्य्यादौ पारणे च विशेषः नि०सि० उक्तो यथा

“एकादशीद्वादश्योरेकत्वे तत्रैवोपवासः पार्थक्ये तु सशक्तोपवासद्वयम् “एकादशीमुपोष्यैव द्वादशीं समुपोषयेत्” इति विष्णुरहस्यात् अशक्तौ तु द्वादश्यामेव “एकामेकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् । पूर्व्ववासरजं पुण्यं सर्व्वं प्राप्नोत्यसंशयम्” इति तत्रैवोक्तेः यदाल्पका द्वादशी तदोक्तं नारदे “यदा भवति स्वल्पापि द्वादशी पारणादिने । उषःकाले द्वयं कुर्य्यात् प्रातर्माध्याह्निकं तदा” नारदीयेऽपि “अल्पायामथ विप्रेन्द्र ! द्वादश्यामरुणोदये । स्नानार्च्चनक्रियाः कार्य्या दानहोमादि संयुताः” इति सङ्कटे तु माधवीये देवलः “संकटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम् । अद्भिस्तु पारणं कुर्य्यात् पुनर्भुक्तं न दोषकृत्” इति सङ्कटे त्रयोदशीमाध्योत्पादौ यत्र केचिदाहुः “अपकर्षवाक्यान्यनाहिताग्निविषयाणि अग्निहोत्रादीनां श्रौतत्वेनापकर्षायोगादिति । द्वादश्यां च प्रथमपादमतिक्रम्य पारणं कार्य्यम् “द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः । तमतिक्रम्य कुर्व्वीत पारणं विष्णुतत्परः” इति निर्णयामृते मदनरत्ने च विष्णुधर्म्मोक्तेः । अत्र केचित् पठन्ति “यदा भूयसी द्वादशी तदापि प्रातर्मुहूर्त्तत्रये पारणं कार्य्यम् “सर्व्वेषामुपवासानां प्रातरेव हि पारणमिति वचनादिति” । अपरार्कस्तु बहूनां कर्म्मकालानां विना कारणं बाधायोगात् प्रागुक्तवचनेन अल्पद्वादश्यामेवापकर्षविधानादपराह्ण एव कार्य्यम् प्रातः शब्दस्तु “सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितमिति” वदपराह्णभाविन्यप्युपपन्नः न च वाक्यवैयर्थ्यं पुनर्भोजनवारणपारणनिषेधार्थत्वात्तस्येत्याहुः । प्रमादेन एकादश्युपवासातिक्रमे अपरार्के वाराहे “एकादशी विप्लुता चेद्द्वादशी परतः स्थिता । उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदम्” । नि०सि० स्थानान्तरे

भाद्रपदशुक्लद्वादश्यां श्रवणयोगरहितायां पारणं कुर्य्यात् श्रवणाभावादिपक्षेऽपीति दिवोदासोदाहृतवचनात् ।

“उपोष्य द्वादशीं मोहात् पारणं श्रवणे यदि । करोति हन्ति तत्पुण्यं द्वादशद्वादशीभवम्” इति तत्रैव स्कान्दात् । अत्र तत्रैव प्रतिप्रसवः मार्कण्डेयोक्तः “विशेषेण महीपाल ! श्रवणं वर्त्तते यदि । तिथिक्षयेण भोक्तव्यं द्वादशीं वर्ज्जयेन्न हि” इति । केचित्तु यदा त्वपरिहार्य्योयोगस्तदा श्रवणमध्यत्वे त्रेधा विभक्ते मध्यमविंशतिघटिकायोगं त्यक्त्वा पारणं कार्य्यं तदुक्तं विष्णुधर्म्मे “श्रुतेश्च मध्ये परिवर्त्तमेति सुप्तिप्रबोधपरिवर्त्तनमध्युवर्ज्यमिति”। केचित्तु तद्भं विभज्य मध्यपादद्वयं वर्ज्यमाहुः अत्र मूलं चिन्त्यम् । अत्रैव विष्णुपरिवर्त्तनोत्सवं कुर्य्यात् । सन्ध्यायां विष्णुं संपूज्य प्रार्थयेत मन्त्रस्तु तिथितत्त्वे उक्तः । यों “वासुदेव ! जगन्नाथ ! प्राप्तेयं द्वादशी तव । पार्श्वेन परिवर्त्तस्व सुखं स्वपिहि माधव !” इति अत्रैव शक्रध्वजोत्थापनमुक्तमपरार्के गर्गेण “द्वादश्यां तु सिते पक्षे मासि प्रौष्ठपदे तथा । शक्रमुत्थापयेद्राजा विश्वश्रवणवासवे” इदमेव श्रवणद्वादशी तत्रैकादश्यां द्वादशीश्रवणयोगे वैष्णव्याख्या “एकादशी द्वादशी च वैष्णवमपि तत्र चेत् । तद्विष्णुशृङ्खलं नाम विष्णुसायुज्यकृद्भवेत्” इति विष्णुधर्म्मोक्तेः नारदीयेऽपि “संस्पृशेत्र-

काद्शीं राजन् द्वादशीं यदि संस्पृशेत् । श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति । द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशीं यदि । स एव वैष्णवोयोगो विष्णुशृङ्खलसंज्ञितः" इति हेमाद्रौ दिनद्वये द्वादशीश्रवणयोगेऽपि पूर्वा, निर्णयामृते तत्र पूर्वार्द्धमन्यथा पठितम् । "द्वादशी श्रवणर्क्षं च स्पृशेदेकादशीं यदि" इति तेन हेमाद्रिमते एकादश्याः श्रवणयोगाभावेऽपि तद्युक्त द्वादशीयोगमात्रेण विष्णुशृङ्खलं भवति निर्णयामृतमते तु श्रवणस्यैकादशीद्वादशीभ्यां योग एव विष्णुशृङ्खलं नान्यथेति । यदा निशीथानन्तरं सूर्य्योदयावधि द्वित्रकलामात्रमपि श्रवणर्क्षं भवति तदापि पूर्व्वैव तदुक्तं तत्रैव नारदीये इमां प्रकृत्य "तिथिनक्षत्रयोर्योगोयोगश्चैव नराधिप ! । द्विकलो यदि लभ्येत स ज्ञेयो ह्यष्टयामिकः" इति "द्वादशी श्रवणस्पृष्टा कृत्स्ना पुण्यतमा तिथिः । न तु सा तेन संयुक्ता तावत्येव प्रशस्यते" इति मदनरत्ने मात्स्याच्च । दिवोदासीये तु "रात्रेः प्रथमपादे चेच्छ्रवणं हरिवासरे । तदा पूर्व्वमुपवसेत्प्रातर्भान्ते च पारणम्" इत्युक्तम् । इदं तु निर्मूलत्वात् पूर्व्वविरोधाच्चोपेक्ष्यं एवं बुधवारेऽप्रशस्ता "बुधश्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् । अत्यन्तमहती सा स्याद्दत्तं भवति चाक्षयम्" इति हेमाद्रौ स्कान्दात् । यानि तु पठन्ति "उत्तराषाढसंयुक्ता श्रोणामध्याक्रान्तापि वा । आसुरी सैव तारा स्याद्धन्ति पुण्यं पुराकृतम् । उदयव्यापिनी ग्राह्या श्रोणाद्वादशिका युता । विद्धर्क्षसंयुता सा च नैवोपोष्या शुभैप्सुभिः" इत्यादीनि विष्णुधर्म्मस्कान्दभविष्यादीनि वचनानि तानि निर्मूलानि । यदपि स्मृत्यर्थसारे उदयव्यापिनी ग्राह्येत्युक्तं यच्च बृहन्नारदीये "उदयव्यापिनी ग्राह्या श्रवणद्वादशीव्रते" इति तद्यदा शुद्धाधिका द्वादशी परदिने एवोदये श्रवणयोगः पूर्व्वेऽह्नि च तद्भिन्ने काले योगस्तत्परम् । दिनद्वये उदययोगे पूर्व्वैव बहुकर्म्मकालव्याप्तेरित्युक्तं मदनरत्ने । यदा त्वेकादश्येव श्रवणयुता न द्वादशी तदापि पूर्व्वैव "यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित् । एकादशी तदोपोष्या पापघ्नी श्रवणान्विता" इति मदनरत्ने नारदीयोक्तेः यदा परैव श्रवणयुता तदा परा तत्र शक्तेनोपवासद्वयं कार्य्यम् "एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् । न चात्र विधिलोपः स्यादुभयोर्द्दैवतं हरिः" इति भविष्योक्तेः यत्तु विष्णुधर्म्मे "पारणान्तं व्रतं ज्ञेयं व्रतान्ते विप्रभोजनम् । असमाप्ते व्रते पूर्व्वे नैव कुर्य्याद्व्रतान्तरम्" इति तदेतद्भिन्नपरम् अत्र गौडाः "इन्दु राजन् परं काम्यं श्रवणद्वादशीव्रतम्" इति स्कन्दोक्तेर्वचनात् काम्यमेवेदम् तेनाशक्तस्य नित्यैकादशीव्रतमेवेति मन्यन्ते "द्वादश्यामुपवासेन शुद्धात्मा नृप सर्व्वशः । चक्रवर्त्तित्वमतुलं संप्राप्नोत्युत्तमां श्रियम्" इति गौडनिबन्धे मार्कण्डेयोक्तेश्च । दाक्षिणात्यास्तु "एकादश्यां नरो भुक्त्वा द्वादश्यां समुपोषणात् । व्रतद्वयकृतं पुण्यं सर्व्वं प्राप्नोत्यसंशयम्" इति वराहवामनपुराणोक्तेः श्रवणद्वादशीव्रतमेवेत्याहुः भुक्त्वेति फलाद्याहारपरम् नत्वन्नपरम् "अन्नाश्रितानि पापानीति" निषेधात् "उपवासद्वयं कर्त्तुं न शक्नोति नरो यदि । प्रथमेऽह्नि फलाहारी निराहारी परेऽहनि" इति दिवोदासीये भविष्योक्तेश्च अशक्तौ तु गृहीतैकादशीव्रतोयस्तं प्रत्युक्तं मात्स्ये "द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि । उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिम्" इति पूजयेत्तूपवसेदित्यर्थः । अगृहीतैकादशीव्रतश्चेदेकादश्यां भुक्त्वा द्वादश्यामुपवसेत् "एवमेकादशीं भुक्त्वा द्वादशीं समुपोषयेत् । पूर्व्ववासरजं पुण्यं सर्व्वं प्राप्नोत्यसंशयम्" इति नारदीयोक्तेः । पारणं तूभयान्तेऽन्यतरगते वा कुर्य्यात् "तिथिनक्षत्रनियमे तिथिभान्ते च पारणमिति" स्कान्दात् "तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् । पारणं तु न कर्त्तव्यं यावन्नैकस्य संक्षयः" इति नारदीयादिति हेमाद्रिः । यद्यप्यत्र नक्षत्रमात्रान्तेऽपि पारणं प्रतिभाति तथापि तिथिमात्रान्ते ज्ञेयम् नक्षत्रान्ते तिथिमध्येऽपि "याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः । ऋक्षान्ते पारणं कुर्य्याद्विना श्रवणरोहिणीम्" इति विष्णुधर्म्मे श्रवणान्तमात्रे पारणनिषेधात् "रोहिण्यान्तु भान्ते कुर्य्यात्तिथेर्व्वापि" इति वह्निपुराणात् तदन्तेऽप्यस्तु न तत्रैवमस्तीति न, ऋक्षान्तोऽनुकल्प इति मदनरत्ने । असम्भवे तु "तिथ्यन्ते तिथिभान्ते वा पारणं यत्र चोदितम् । यामत्रयोर्द्ध्वगामिन्यां प्रातरेव हि पारणम्" इति ज्ञेयम् । यत्तु मदनरत्ने द्वादशीवृद्धौ श्रवणवृद्धौ वा श्रवणान्त एव पारणं कुर्य्यात् "पारणं तिथिवृद्धौ तु द्वादश्यामृक्षसंक्षयात् । वृद्धौ कुर्य्यात्त्रयोदश्यां तत्र दोषो न विद्यते" इति वह्निपुराणादित्युक्तम् तत्प्रकरणादेतच्छ्रवणयुक्तैकादश्यां विहितविजयैकादशीव्रतपरं न तु श्रवण-

तत्संख्यान्विते स्त्री एकव०पूरणे च तयपो वक्ष्ये यो ठन् । यथं च । द्वा(द्वि)त्रिंशदादि तद्युते शतादौ त्रि०वा परिमाणमस्य ठन् । द्वा(द्वि)त्रिंशतिकादि तत्तत्संख्यापरिमाणके त्रि०

**द्वा(द्वि)षष्टि** स्त्री द्व्यधिका षष्टिः द्वौ च षष्टिश्च वा वा आत् एकव०। १द्व्यधिकषष्टिसंख्यायां २तद्युते च । पक्षे द्विषष्टिरप्यत्र तया युतं शतादि ड। द्वा(द्वि)षष्ट तद्युते शतादौ । वा परिमाणमस्य ठन् । द्वा(द्वि)षष्टिक तत्परिमाणके त्रि० पूरणे तमप् । द्वा(द्वि)षष्टितम डट् द्वा(द्वि)षष्ट तत्संख्यापूरणे डटि स्त्रियां ङीप् ।

**द्वा(द्वि)सप्तति** स्त्री द्व्यधिका सप्ततिः द्वौ च सप्ततिश्च वा वा आत् एकव०। १द्व्यधिकसप्ततिसंख्यायां २तत्संख्याते च "द्वासप्ततिर्भवन्त्यस्ते पादास्ते द्वादश क्रमात्" ज्यो०त०। द्विसप्ततिरप्यत्र । तया युतं शतादि ड । द्वा(द्वि)सप्तत तद्युते शतादौ त्रि० तस्याः पूरणे तमप् । द्वा(द्वि)सप्ततितम डट् । द्वा(द्वि)सप्तत तत्संख्यापूरणे त्रि० स्त्रियां डटि ङीप् ।

**द्वि** त्रि० द्वि०व०। द्व—ड । १द्वित्वसंख्यायां "द्व्येकयोर्द्विवचनैकवचने" पा० द्वित्वार्थकतायां भाष्यादावुक्तेः । २द्वित्वसंख्यान्विते च । सर्वनामकार्यं तस्य जसादिप्राप्त्यभावात् त्यदादित्वात् अत्वम् । द्वौ द्वे । द्वयोः स्त्रियोः पुत्रः द्विपुत्र इत्यादौ सर्वनामत्वात् वृत्तिमात्रे पुंवद्भावः । अकच् । द्वके इत्यादि । स्वार्थे केनोपपत्तौ चितृस्वरार्थमकच् ।

**द्विक** त्रि० द्वि०व०। द्वि—अकच् । १द्वित्वसंख्यायां तद्युते त्रि० स्त्रियां टेरकचि द्वके इत्येव स्वार्थे के तु प्रत्ययस्थकात् पूर्वस्य इत्वम् द्विके इति भेदः । द्वयोरवयवः द्वौ अवयवौ वा यस्य कन् । २द्वित्वे न० एकव०। ३तद्युते त्रि० "एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथा। अमी पञ्चैव लिङ्गार्थाः" भर्तृहरिः । द्वौ दीयेते वृद्ध्यादिना अत्र शतादौ कन् । ४वृद्ध्यादिना दीयमानद्विरूपकादिके शतादौ । "द्विकं शतं वा गृह्णीयात् सतां धर्ममनुस्मरन्" "द्विकं शतञ्च गृह्णानो न भवत्यर्थकिल्बिषी" मनुः द्वौ कौ ककारौ वाचकशब्दे यस्य । ५काके ६कोके च पुंस्त्री० मेदि० । तयोर्वाचकशब्दे ककारद्वयस्य सत्त्वात् तथात्वम् । स्त्रियां जातित्वात् ङीष् ।

**द्विककार** पुंस्त्री० द्वौ ककारौ वाचकशब्देऽस्य । १काके २कोके च शब्दरत्ना० । स्त्रियां जातित्वात् ङीष् । ३ककारद्वययुते शब्दादौ त्रि० ।

**द्विककुद्** पु० द्वे ककुदे यस्य अन्त्यलोपः समा०। उष्ट्रे हेमच०

**द्विकर** त्रि० द्वौ करोति संख्यापूर्वकत्वात् कृञ्हेत्वादौ ट—ट । १द्विसंख्यान्वितकारके । द्वौ करौ यस्य २द्विभुजे च । द्वयोः करयोः समाहारः । ३करद्वये "बुभुजिरे किं ? द्विकरेण भङ्क्तः" उद्भटः ।

**द्विकार्षापण(णिक)** त्रि० द्वाभ्यां कार्षापणाभ्यां क्रीतं ठक् तस्य वा लुक् । द्वाभ्यां कार्षापणाभ्यां क्रीते पक्षे ठकोऽलोपे । द्विकार्षापणिक तत्रार्थे ।

**द्विकौडविक** त्रि० द्वौ कुडवौ प्रयोजनमस्य ठञ्, द्वाभ्यां कुडवाभ्यां क्रीतं वा ठक् न तस्य लुक् । उत्तरपदवृद्धिः । १द्विकुडवप्रयोजनके २द्वाभ्यां कुडवाभ्यां क्रीते च ।

**द्विगु** त्रि० द्वौ गावौ यस्य गोत्वात् गोर्ह्रस्वः । १द्वयोर्गवोः स्वामिनि द्विगवस्वामिके पुरुषे । "द्वन्द्वो द्विगुरपि चाहं सततमव्ययीभावः" उद्भटः । व्याकरणोक्ते तत्पुरुषान्तर्गते पा० सूत्रोक्ते २समासभेदे पु० स च सि०कौ० मनोरमादौ च दर्शितो यथा "दिक्संख्ये संज्ञायाम्" ।२।१।५०। पा० "समानाधिकरणेनेत्यापादपरिसमाप्तेरधिकारः । संज्ञायामेवेति नियमार्थं सूत्रम् । पूर्वेषुकामशमी । सप्तर्षयः । नेह उत्तरा वृक्षाः । पञ्च ब्राह्मणाः" सि०कौ०। "तद्धितार्थोत्तरपदसमाहारे च" पा० ।२।१।५१।पा० "तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वत्। पूर्वस्यां शालायां भवः । पौर्वशालः । समासे कृते दिक्पूर्वपदादसंज्ञायां ञ इति ञः । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । आपरशालः । पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ कृते प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः तेन शालाशब्दे आकार उदात्तः । पूर्वशालाप्रियः । दिशु समाहारो नास्त्यनभिधानात् । संख्यायास्तद्धितार्थे षण्णां मातृणामपत्यम् षाण्मातुरः । पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहावयवान्तरतत्पुरुषस्य विकल्पे प्राप्ते द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्" सि०कौ० "नियमार्थमिति विशेषणं विशेष्येणेत्यनेनैव सिद्धे तत्पुरुषे संज्ञायामेव दिक्संख्ये समस्येते नान्यत्रेति नियामकमिदमिति भावः। त्रिलोकनाथ इत्यादौ तु उत्तरपदद्विगुरिति व्यञ्जकत्वेऽपि न क्षतिः। पूर्वसूत्रमित्यादौ संज्ञाभावेऽपि कालवाचकत्वात् समासो, न च पूर्व दिग्विशेषबोध उदयगिर्यादिसम्बन्धाया एव दिक्त्वात् एवं देशवाचकेनापि समास इति कृष्ण-

ब्राह्मणस्तु वोऽप्यत्र। "सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। अधीते शतसाहस्रमनन्तं वेदपारगे" मनुः

**द्विजराज** पु० ६त० टच् समा०। १चन्द्रे अमरः। द्विजपतिशब्दे दृश्यम्। "इत्थं द्विजेन द्विजराजकान्तिः" रघुः। २कर्पूरे ३द्विजश्रेष्ठे ४द्विजोत्तमे विप्रे ५पक्षीन्द्रे गरुडे च।

**द्विजलिङ्गिन्** पु० द्विजस्य लिङ्गमस्त्यस्य इनि। १क्षत्रिये त्रिका०। २विप्रवेशधारिणि च। "तान् सर्वान् घातयेद्राजा शूद्रांस्तु द्विजलिङ्गिनः" मनुः।

**द्विजवाहन** पु० द्विजः गरुडो वाहनमस्य। नारायणे "एवं त्वमसि देवानां मग्नानां द्विजवाहनः। तच्छरीरगतं कृष्ण! जगत्प्रकरणं त्विदम्" हरिवं ७६अ०

**द्विजव्रण** पु०न० ६त०। दन्तार्बुदे दन्तरोगभेदे राजनि०।

**द्विजशस** प० ३त०। राजमाषे (बरबटि) शब्दच०। तस्य द्विजैर्भोजनस्य निषिद्धत्वात् तथात्वम्।

**द्विजसेवक** पु०६त०। १शूद्रे शब्दर०। २द्विजसेविमात्रे त्रि०।

**द्विजा** स्त्री द्विर्जायते जन–ड। १रेणुकानामगन्धद्रव्ये अमरः २भार्ग्यां मेदि०। ३पालङ्क्यां (पालङ्) शाकभेदे शब्दच०। तासां कर्तनेऽपि पुनर्जायमानत्वात् तथात्वम्। ४द्विजजातिस्त्रियां ४तत्पत्न्यां च स्त्री ङीप्।

**द्विजाग्र्य** पु० द्विजेषु अग्र्यः। विप्रे "अद्भिरेव द्विजाग्र्याणां कन्यादानं विशिष्यते"। "ब्राह्मं हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम्" मनुः। [कटुकायां राजनि०।

**द्विजाङ्गी** स्त्री द्विजस्य दन्तस्याङ्गमिव मूलमस्याः ङीप्।

**द्विजाति** पु० द्विः जातिर्जन्म यस्य। १ब्राह्मणे अमरः। २ब्राह्मणक्षत्रियवैश्येषु। "शूद्राद्द्विजातिभिर्जातो न भूमेर्भागमर्हति" स्मृतिः "ब्राह्मणक्षत्रियविशस्त्रयोवर्णा द्विजातयः। चतुर्थ एकजातिस्तु शूद्रो, नास्ति तु पञ्चमः" मनुः। तेषां द्विर्जन्मवत्त्वं द्विजशब्दे दृश्यम्। ३अण्डजे मेदि०। ४दन्ते च

**द्विजानि** पु०द्वे जाया यस्य निङ्। द्विभार्य्ये "अन्तर्योनेव चरति द्विजानिः" ऋ०१०।१०१।११

**द्विजायनी** स्त्री द्विजः अय्यते ज्ञायतेऽनया अय–गतौ गत्यर्थस्य ज्ञानार्थत्वात् ल्युट् ङीप्। यज्ञोपवीते त्रिका०।

**द्विजालय** पु० ६त०। १वृक्षस्ये खगालये कोटरे शब्दच० २नीडे। ३द्विजानां गृहे च।

**द्विजिह्व** पुंस्त्री० द्वे जिह्वे यस्य। सर्पे स्त्रियां जातित्वात् ङीष्। तेषां द्विजिह्वत्वकथा भा० आ० ३४अ० यथा "अथ सर्पानुवाचेदं सर्वान् परमहृष्टवत्। इदमानीतममृतं निक्षेप्स्यामि कुशेषु वः। स्नाता मङ्गलसंयुक्तास्ततः प्राश्नीत पन्नगाः!। भवद्भिरिदमासीनैर्यदुक्तं तद्वचस्तदा। अदासी चैव मातेयमद्यप्रभृति चास्तु मे। यथोक्तं भवतामेतद्वचो मे प्रतिपादितम्। ततः स्नातुं गताः सर्पाः प्रत्युक्त्वा तं तथेत्युत। शक्रोऽप्यमृतमाक्षिप्य जगाम त्रिदिवं पुनः। अथागतास्तमुद्देशं सर्पाः सुधार्थिनस्तदा। स्नाताश्च कृतजप्याश्च प्रहृष्टाः कृतमङ्गलाः। यत्रैतदमृतं चापि स्थापितं कुशसंस्तरे। तद्विज्ञाय हृतं सर्पाः प्रतिमायाकृतञ्च तत्। सोमस्थानमिदं चेति दर्भांस्ते लिलिहुस्तदा। ततो द्विधाकृता जिह्वा सर्पाणां तेन कर्मणा। अभवंश्चामृतस्पर्शाद्दर्भास्तेऽथ पवित्रिणः। एवं तदमृतं तेन हृतमाहृतमेव च। द्विजिह्वाश्च कृताः सर्पा गरुडेन महात्मना"। २सूचके च त्रि० अमरः। ३खले मेदि०। ४चौरे ५दुःसाध्ये च शब्दर०। तेषां सर्पतुल्यमर्मविधत्वात्तथात्वम्। "परस्य मर्माविधमुज्झतां निजम् द्विजिह्वतादोषमजिह्मगामिभिः"। "तमिद्ममाराधयितुं सकर्णकैः कुलैश्च भेजे फणिनां भुजङ्गता" माघः।

**द्विजेन्द्र** पु० द्विज इन्द्र इव उपमितसमा०। १द्विजश्रेष्ठे ६त०। २चन्द्रे ३कर्पूरे च "द्विजेन्द्रकान्तं श्रितवक्षसं श्रिया" माघः।

**द्विजेश** पु० ६त०। १गरुडे २चन्द्रे हेमच० ३कर्पूरे च। द्विजेश्वरादयोऽप्यत्र। "तमश्चयोगानुगतं शिशिरांशुं द्विजेश्वरम्" हरिवं० ४५अ०।

**द्विजोपासक** पु० द्विजमुपास्ते उप+आस–ण्वुल्। द्विजसेवके शूद्रे पारस्करनिघ०।

**द्विजोत्तम** पु० द्विजेषु उत्तमः। विप्रे।

**द्विठ** पु० द्वौ ठकारौ लेखनाकारे यस्य। १विसर्गे तस्य लेखनाकारस्य द्विठकाराकारत्वात्तथात्वम् शारदातिलक व्याख्याने राघवभट्टः। लक्षितलक्षणया २स्वाहायाम् तस्याः विसर्गशब्दवाच्यत्यागार्थकत्वात् तथात्वम् समा० द्विगुः। ३ठकारद्वये न०। [दृश्यम्।

**द्वित** पु० १देवभेदे २ऋषिभेदे च एकतशब्दे १४६५।६६पृ०

**द्वितय** न० द्वयोरवयवः संख्याया अवयवे तयप्। द्वित्वसंख्यायां "प्रसार्य्य चरणद्वितयं तयोर्यस्य युतिर्भवेत्। "दृश्यन्ते पञ्चदशभिराषाढाद्वितयं तथा"। "कटाहद्वितयस्येव संपुटं गोलकाकृति" सू०सि० द्वादशवारवश।

२द्वित्वसंख्याविशिष्टे त्रि० अस्य जसि वा सर्वनामता द्वितये द्वितयाः । "कृशानुमतोः किमन्तरं यदि वायौ द्वितयेऽपि तेऽचलाः" किरा० "अधिकं शुशुभे शुभंयुना द्वितयेन द्वयमेव सङ्गतम् । पदमृद्धमजेन पैतृकं विनयेनास्य नवञ्च यौवनम्" रघुः । अस्य स्त्रीत्वमपि उभयत्र ङीप् ।

**द्वितीय** त्रि० द्वयोः पूरणः तीय । द्वित्वसंख्यापूरणे तस्याः ङित्सु वा सर्वनामकार्य्यम् । "एकमेवाद्वितीयं ब्रह्म" श्रुतिः । "द्वितीयगामी न हि शब्द एष नः" रघुः "मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनात्" मनुः २पत्नी पु० त्रिका० । ३भार्य्यायां स्त्री टाप् अमरः । चन्द्रस्य द्वितीयकलायाः सूर्य्यकिरणप्रवेशनिर्गमयोर्व्याप्ये क्रियारूपे तदुपलक्षिते कालभेदे वा ४तिथिभेदे स्त्री तस्याः व्रताद्यङ्गकालनिर्णयः कालमा० दर्शितो यथा

"प्रथमद्वितीयादीनां पञ्चदशकलानां क्रमेण चन्द्रमण्डलप्रवेशनिर्गमनाभ्यां शुक्लकृष्णपक्षयोः प्रतिपद्द्वितीयादिनामधेयास्तिथयो भवन्ति । तत्र प्रतिपदि योऽभिनिर्णयः पूर्वप्रकरणेऽभिहितः स एवोत्तरासु सर्वासु तिथिषु साम्येन सञ्चारयितव्यः । विशेषांस्तु तत्र तत्राभिधास्ये । प्रतिपदि दैवं पित्र्यं च व्यवस्थापितम् । दैवं षड्विधम् उपवासैकभक्तनक्तायाचितदानव्रतभेदेन, तीर्थस्नानजपहोमादयस्तु व्रतशब्देनैव संगृहीताः । पित्र्यं द्विविधम् । एकोद्दिष्टं पार्वणं चेति । तत्र सर्वत्र कर्मकालव्याप्तियुक्ता या सैव तिथिरनुष्ठानाङ्गत्वं सर्वैरभिप्रेतम् । कर्मकालस्य द्विविधः मुख्यो गौणश्चेति । तद्यथा एकभक्ते मध्याह्नो मुख्यः । सायाह्नपर्य्यन्तो गौणः । तिथिव्याप्तिर्द्विविधा स्वाभाविकतिथिव्याप्तिः साकल्यापादिततिथिव्याप्तिश्चेति । यदा सङ्गवपर्य्यन्तामावास्या तदानीं तत्परदिने मध्याह्नो मुख्यश्चैव प्रतिपदा व्याप्तो भवति । यदा त्वपराह्णादिमारभ्य तिथिक्षयवशात्परेद्युः सङ्गवान्ता प्रतिपद्भवति । तदा पूर्वेद्युर्गौणकालव्याप्तिमुपजीव्यैकभक्तानुष्ठानस्वीकारे सति मध्याह्ने तदैवानुष्ठेयत्वात्तत्र स्वाभाविकप्रतिपद्व्याप्त्यभावेऽपि साकल्यवचनापादितप्रतिपद्व्याप्तिः स्वीकृता । एवं च सति कर्मकालव्याप्तौ सर्वत्र तावन्मात्रनिर्णयदर्शनात् कर्मकालव्याप्तिमात्रमितरेभ्यः प्रबलमिति निर्णीयते । तदनुसारेण द्वितीयाया अपि निर्णय उपवासादौ दैवे, एकोद्दिष्टादौ पैत्र्ये च कर्मकालव्याप्तियुक्ताः स्वीकर्त्तव्याः । उपवासस्तु सर्वतिथिषु नारदीये दर्शितः । "शुक्लान् वा यदि वा कृष्णान् प्रतिपत्प्रभृतींस्तिथीन् । उपोष्यैव बलिं दत्त्वा विधिनेत्यपरे दिने । ब्राह्मणान् भोजयित्वा तु सर्वपापैः प्रमुच्यते" इति । उपवासस्याहोरात्रः कर्मकालः । तद्व्यापिनी तिथिर्ग्राह्या । तदसम्भवे खण्डतिथिर्ग्राह्येति निरूप्यते । तत्र च सूर्य्योदये त्रिमुहूर्त्ता ततोऽधिका वा प्रतिपद्भवति । उत्तरदिने चास्तमयादर्वाक् त्रिमुहूर्त्ता ततोऽधिका वा तृतीया भवति सेयमुभयविद्धा द्वितीया । तत्र वेधकतिथेरुदयेऽस्तमये वा त्रिमुहूर्त्तत्वं वेधप्रयोजकं न तु ततो न्यूनत्वं तदेतत् पैठीनसिवाक्येन पूर्वमुदाहृतम् । वेध्यतिथेस्तु त्रिमुहूर्त्तसद्भावोऽपेक्षित इति "त्रिमुहूर्त्तं त्रिरह्नश्चेत्यनेन सुमन्तुवचनेन दर्शितम् । उदयास्तमययोरेव वेध इत्ययमर्थः "उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके" इत्यादिभिः कात्यायनवचनैरवगन्तव्यः । एवञ्च सति यथोदाहृते पूर्वविद्धोत्तरविद्धे ये द्वितीये तयोरुत्तरविद्धा द्वितीयोपोष्या युग्माग्निवाक्ये नान्वयव्यतिरेकाभ्यामुत्तरविद्धायाः प्राशस्त्याभिधानात् । यद्यप्युपोष्यत्वं साक्षान्नाभिहितं तथापि कर्मान्तरविशेषस्यानुपादानात् उपवासविषयत्वं परिशिष्यते । तथाहि । न तावत् पित्र्यविषयत्वं सम्भवति व्यासेन युग्मादिशास्त्रस्य खर्वादिशास्त्रस्य च दैवपित्र्यविषयत्वेन व्यवस्थापितत्वात् । नाप्येकभक्तनक्तविषयत्वं तयोर्मध्याह्नप्रदोषव्याप्त्यधीनत्वेन युग्मादिशास्त्रानधीनत्वात् । अयाचितस्य तूपवासवदनुष्ठेयत्वेन न पृथग्विषयत्वं न च दानादिविषयत्वम् दानादेः पौर्वाह्णिकतिथौ कर्त्तव्यतया निर्णीतत्वात् । अत उपवासविषयत्वं परिशिष्यते । कदाचिदेकभक्तादितिथौ युग्मादिशास्त्रस्य संवादो भवति । तदा [illegible] भवतु । न वयं वारयामः । वचनान्तरे तु युग्मादिशास्त्रस्योपोष्यत्वं साक्षात् प्रतीयते । तथा च प्रतिपत्प्रकरणे प्रतिपदमावास्यायुग्मस्योपोष्यत्ववचनमुदाहृतम् । तत्रापि युग्माभिप्रायेणैव द्वितीयायाः परविद्धायाः उपोष्यत्वं भृगुस्मृतिविष्णुधर्मोत्तराभ्यां दर्शितम् । "एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी । त्रयोदशी चतुर्थी च उपोष्याः स्युः परान्विताः" इति । यदा पूर्वेद्युरुदयमारभ्य परेद्युरुदयस्योपरि त्रिमुहूर्त्तं वर्त्तते । तदा

पूर्व्वेद्युरेवोपवासः । न चोदाहृतेन परान्विता इति वचनेन विरोधः शङ्कनीयः परान्वितापूर्व्वान्वितयोः अखण्डयोः खण्डयोरस्य वचनस्य नियामकत्वात् । न चात्र परान्वितत्वं प्रसक्तमस्ति । पूर्व्वस्य दिनस्य सम्पूर्णतिथित्वात् सम्पूर्णखण्डयोः सम्पूर्णस्यासन्देहत्वेन प्रबलत्वात् । असञ्जातविरोधित्वकर्म्मकालव्याप्तिभ्यां पूर्व्वदिनस्यैव प्राबल्यम् । तस्मात्तत्रैवोपवासः । ननु पूर्व्वोपवासं प्रतिषेधति व्यासः "तृतीयया युता कार्य्या द्वितीया न तु पूर्व्वयेति" नैवम् अस्य वचनस्य खण्डतिथिविषयत्वेन संपूर्णतिथावप्रवृत्तेः । खण्डतिथिविषयत्वञ्च पूर्व्वया युता नैव कार्य्येत्यभिधानादवगम्यते । ननु खण्डतिथावपि द्वितीया पूर्व्वविद्धैवोपोष्या "प्रतिपत्सद्वितीया स्याद् द्वितीया प्रतिपद्युता" इत्यापस्तम्बेन प्रतिपद्द्वितीययोर्युग्मत्वाभिधानात् । एतदेव वचनमुपजीव्य कृष्णप्रतिपत्परविद्धैवोपोष्येति पूर्व्वं निर्णीतं तर्हि द्वितीयापि क्वचित् पूर्व्वविद्धा भवतु तदुक्तं स्कन्दपुराणे "प्रतिपत्सम्मुखी कार्य्या या भवेदापराह्णिकी । पूर्व्वाह्णिकी च कर्त्तव्या द्वितीया तादृशी विभो !" इति । तादृशी सम्मुखी पूर्व्वयुतेत्यर्थः । पूर्व्वेद्युरुदये मुहूर्त्तं परित्यज्यावशिष्टपूर्व्वाह्णसम्बन्धिनी यदा भवति तदा वेधकारिण्याः पूर्व्वतिथेः मुहूर्त्तत्रयाभावेन वेद्धुमसामर्थ्यात् स्वयं खण्डापि सती सम्पूर्णवत् तत्रोपवासे युज्यते । अत्र द्वितीया नवधा भिद्यते पूर्व्वेद्युरुदयमारभ्य प्रवृत्ता१ प्रातरुदयं परित्यज्य प्रवृत्ता२ पूर्व्वाह्णं सर्व्वं परित्यज्य प्रवृत्तेति३ तयोर्भेदास्तेष्वेकैकस्य परेद्युस्त्रिमुहूर्त्तत्वतदूनत्वन्यूनत्वैस्त्रैविध्ये सति मिलित्वा नवविधत्वं सम्पद्यते । अथ पूर्व्वेद्युरुदयमारभ्य प्रवृत्तायाः सम्पूर्णत्वेन परेद्युर्मुहूर्त्तत्रयत्वतदूनत्वान्यूनत्वेषु त्रिष्वपि पक्षेषु विवादाविषयत्वात् पूर्व्वत्रैवोपवासो युक्तः । उदयं परित्यज्य कियत् पूर्व्वाह्णभागं प्रक्रम्य प्रवृत्तायाः परेद्युस्त्रिमुहूर्त्तायां सत्यपि परयुतोपवासशास्त्रे तां परित्यज्य पौर्व्वाह्णिकवचनेन पूर्व्वेद्युरेवोपवासो विधीयते । परेद्युस्त्रिमुहूर्त्तन्यूनत्वे तु वेधकारिण्यास्तृतीयायाः सत्यपि वेद्धुं सामर्थ्ये वेध्याया द्वितीयायास्त्रिमुहूर्त्तत्वाभावेन वेधयोग्यत्वाभावात् तत्रोपवासो न प्रसक्तः । अतः परिशेषात् पूर्व्वाह्णवाक्याच्च पूर्व्वत्रैवोपवासः । पूर्व्वेद्युः पूर्व्वाह्णं सर्व्वं परित्यज्य प्रवृत्तायाः परेद्युस्त्रिमुहूर्त्ततयोभयत्र तिथिसत्त्वात् कुत्रोपवास इति सन्देहे सति व्यासेनोत्तरविधानात् पूर्व्वदिननिषेधाच्चोत्तरत्रोपवासः । न चात्र शुक्लकृष्णव्यवस्था शङ्कनीया । युग्मवाक्ये शुक्लकृष्णपक्षसाधारण्येन परदिनविधानात् कृष्णपक्षेऽपि तत्प्रवृत्तौ बाधाभावाच्च । अन्ययोस्तु पक्षयोः पूर्व्ववद्वेधानर्हत्वेन पूर्व्वेद्युः पौर्व्वाह्णिकत्वाभावेऽपि परिशेषादापस्तम्बोक्तयुग्मवाक्याच्च पूर्व्वत्रोपवास इति स्थितम् । एकभक्तादिपार्व्वणश्राद्धान्तेषु कर्म्मसु द्वितीयाप्रयुक्तस्य विशेषस्य कस्यचिदश्रवणात् पूर्व्वोक्तन्यायो योजनीयः" ।

सा च अश्विनीकुमारयोर्जन्मतिथिः । यथाह वराहपु॰ तयोर्जन्मोपक्रमे "एतत् सर्व्वं द्वितीयायामश्विभ्यां ब्रह्मणा पुरा । दत्तं यस्मात्ततस्तेषां तिथीनामुत्तमा तिथिः । एतस्यां रूपकामस्तु पुष्पाहारो भवेन्नरः । संवत्सरं शुचिर्नित्यं सुरूपो भवेन्नरः । अश्विभ्यां ये गुणाः प्रोक्तास्ते तस्यापि भवन्ति च" । मनोरथद्वितीया तु श्रावणशुक्लद्वितीया । "मनोरथद्वितीयायां दिवा वासुदेवार्च्चनम् रात्रौ चन्द्रोदयेऽर्घ्यदानं नक्तं भोजनादिकमुक्तम् ति॰त॰ विष्णुधर्म्मोत्तरे "देवमभ्यर्च्य पुष्पैस्तु धूपदीपानुलेपनैः । उच्छ्रितश्च बालेन्दोर्दद्यादर्घ्यं समाहितः । नक्तं भुञ्जीत च नरो यावत्तिष्ठति चन्द्रमाः । अस्तं गते न भुञ्जीत व्रतभङ्गभयान्नरः" । स्कन्दपु॰ "आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता । तस्यां रथे समारोप्य रामं मां भद्रया सह । यात्रोत्सवं प्रकुर्व्वीत प्रीणयेच्च द्विजान् बहून् । ऋक्षाभावे तिथौ कार्य्या सदा सा प्रीतये मम" रथद्वितीया ।

भ्रातृद्वितीया लिङ्गपुराणे "कार्त्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनम् । या न कुर्य्याद्विनश्यन्ति भ्रातरः सप्तजन्मनि" । तस्या इति शेषः । महाभारते "कार्त्तिके शुक्लपक्षे तु द्वितीयायां युधिष्ठिर ! । यमो यमुनया पूर्व्वं भोजितः स्वगृहे स्वयम् । तस्यां निजगृहे पार्थ ! न भोक्तव्यमतो बुधैः । यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् । दानानि च प्रदेयानि भगिनीभ्यो विशेषतः" । तथा "यमञ्च चित्रगुप्तञ्च यमदूतांश्च पूजयेत् । अर्घश्चात्र प्रदातव्यो यमाय सहजद्वयैः" । "अत्र भोक्तव्यं पुष्टिवर्द्धनमिति समभिव्याहृतफलश्रुत्या भोजननियमस्य प्राधान्यात् तस्य मुख्यकालोऽष्टधाविभक्तदिनस्य पञ्चमांशोऽपराह्णः "पञ्चमे च तथा भागे संविभागो यथार्हतः पितृदेवमनुष्याणामित्यादि" इत्युक्तेः अत्र

शीतगस्य रागप्राप्तत्वेऽपि तत्कालस्य “अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः” इति कात्यायनीयेन नियमितत्वात् वैधत्वेन शास्त्रीयत्वेन सामान्यशास्त्रप्राप्तपत्नीविषयपर्युदासावक्लृप्तिरिति। त०त० (तेन नातिप्रगे नातिसायमित्यत्र नञर्थः पर्युदासः) “तथा यमद्वितीयायां यात्रायां मरणं भवेत्”। अनध्यायद्वितीया यथा “प्रोक्ता चैषा द्वितीयास्ताः प्रेतपक्षे गते तु या। या च कोजागरे जाते चैत्रावत्याः परेऽपि या। चातुर्मास्ये समाप्ते च द्वितीया या भवेत् तिथिः। पराख्येनानध्यायः पुराणैः परिकीर्त्तितः” ति० त०। “मार्गे च फाल्गुने चैव आषाढे कार्त्तिके तथा। पक्षयोर्मोचमात्रस्य द्वितीयां परिवर्जयेत्” मल०त० व्रतोपनयनविषयः। पक्षयोरित्यस्योत्तरत्र श्रुतस्य सर्वत्रान्वयः। “द्वितीया मीनधनुषोः” ज्योति०त० उक्तेः रविचन्द्रयोर्मीनधनुषोः स्थितयोस्तस्या दग्धत्वम्। चन्द्रमात्रस्थितत्वे चन्द्रदग्धत्वं केचिदिच्छन्ति “द्वितीया द्वादशी पक्षे” ज्यो०त० उक्तेस्तस्यामुत्तरस्यां दिशि योगिनी।

**द्वितीयक** न० द्वितीयेन रूपेण ग्रहणम् “तावतिथं ग्रहणमिति लुग्वा” पा० कन् पूरणप्रत्ययस्य वा लुक्। १वैश्वादेर्द्वितीयरूपेण ग्रहणे। पक्षे तीयभागस्य लुकि द्विकमप्यत्र। द्वितीयेऽह्नि भवः कन्। २द्वितीयदिनभवे रोगे पु०

**द्वितीयत्रिफला** स्त्री द्वितीया त्रिफला। गाम्भार्य्यां (गाम्भार) शब्दच०।

**द्वितीयाकृत** त्रि० द्वितीयं कृतम् द्वितीय+डाच् कृ—क्त। द्वितीयवारकर्षणकर्मणि क्षेत्रादौ।

**द्वितीयाभा** स्त्री द्वितीयेन रूपेण हरिद्रायाः आभाति आ+भा—क। दारुहरिद्रायां शब्दच०।

**द्वितीयाश्रम** पु० कर्म०। द्वितीये गार्हस्थ्ये आश्रमे “द्वितीयमायुषो भागं कृतदारो गृहे वसेत्” मनुः “कालोह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते” रघुः।

**द्वितीयिक** त्रि० द्वितीयः वृद्ध्यायशुल्कोपदारूपः पदार्थो दीयते “पूरणार्द्धाट्ठन्” पा० ठन् वृद्ध्यादिरूपेण दीयते द्वितीयो यस्मिन् तस्मिन् पदार्थे

**द्वितीयिन्** त्रि० द्वितीयो भागो ग्राह्यतयाऽस्त्यस्य इनि। अर्द्धभागग्राहके ऋत्विजि ऋत्विक्शब्दे १७८पृ० दृश्यम्। “षोडश षोडश द्वितीयिभ्यः” आश्व०श्रौ० ६।४।४ “द्वितीयिभ्यः ऋत्विग्भ्यः अर्द्धमेवाशीत्यर्द्धिनस्तेभ्यः” नारा०

**द्वित्र** त्रि० ब०व०। द्वौ वा त्रयो वा विकल्पार्थे बहु० सं-ख्येयार्थत्वे ड। द्वौ त्रयोवेत्यर्थे। “द्वित्राण्यहान्यर्हसि सोढुमर्हन्!” रघुः “दैवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः” सा०द०

**द्वित्व** न० द्वयोर्भावः। अयमेकः अयमेक इत्यनेकैकत्वबोधरूपापेक्षाबोधजन्ये द्रव्यनिष्ठे गुणभेदे। तच्च समवायेन वस्तुद्वये प्रत्येकं तिष्ठति, पर्य्याप्तिसम्बन्धेन तु द्वयोरेव तिष्ठति न प्रत्येकम्। तदेवापेक्षाबुद्धिजन्यम् तेनैव इमौ द्वावित्यादि व्यवहारः। समवायेन प्रत्येकं द्वित्वसत्त्वेऽपि न तेन तथा व्यवहारः। औलुक्यशब्दे १५८७पृ० तदुत्पत्तिविनाशप्रकारश्च दृश्यः।

“द्वित्वादयः परार्द्धान्ता अपेक्षाबुद्धिजा मताः। अनेकाश्रयपर्य्याप्ता एते तु परिकीर्त्तिताः। अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः। अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरुच्यते” भाषा० “द्वित्वादयो व्यासज्यवृत्तिसंख्या अपेक्षाबुद्धिजन्या”। “अनेकेति। यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्त्तते तथाप्येको द्वाविति प्रत्ययाभावात् एको न द्वाविति प्रत्ययसद्भावाच्च द्वित्वादीनां पर्य्याप्तिलक्षणः कश्चन सम्बन्धोऽनेकाश्रयोऽभ्युपगम्यते। अपेक्षाबुद्धिनाशादिति। प्रथममपेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिः। ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पकरूपम्। ततो द्वित्वविशिष्टप्रत्यक्षम्। अपेक्षाबुद्धिनाशः ततो द्वित्वनाश इति। यद्यपि ज्ञानानां न किमपि त्रिक्षणस्थायि योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वात् तथाप्यपेक्षाबुद्धेस्त्रिक्षणस्थायित्वं कल्प्यते अन्यथा निर्विकल्पकाले अपेक्षाबुद्धिनाशात् अनन्तरं द्वित्वस्यैव नाशः स्यात् न तु द्वित्वप्रत्यक्षं तदानीं विषयाभावात् विद्यमानस्यैव चक्षुरादिना ज्ञानजननोपगमात्। तस्मात् द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते। न चापेक्षाबुद्धिनाशात् कथं द्वित्वनाश इति वाच्यम्। कालान्तरे द्वित्वप्रत्यक्षाभावात्। अपेक्षाबुद्धिस्तदुत्पादिका तन्नाशस्तन्नाशक इति कल्पनात्। अतएव तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिकं तेनैव गृह्यत इति कल्प्यते। न चापेक्षाबुद्धेर्द्वित्वप्रत्यक्षकारणत्वमस्त्विति वाच्यम्। लाघवेन द्वित्वं प्रति कारणत्वस्यैवोचितत्वात्। अतीन्द्रिये द्व्यणुकादावपेक्षाबुद्धिर्योगिनाम्। सर्गादिकालीनपरमाण्वादावीश्वरीयापेक्षाबुद्धिर्ब्रह्माण्डान्तरवर्त्तियोगिनामपेक्षाबुद्धिर्वा द्वित्वादिकारणमिति”। “अपेक्षाबुद्धिः

केचित् आहुः। अनेकेति। अयमेकः अयमेकः। इत्याकारिका इत्यर्थः। इदन्तु बोध्यं यत्रानियतैकत्वज्ञानं तत्र त्रित्वादिभिन्ना बहुत्वसंख्योत्पद्यते। यथा सेनावनादाविति कन्दलीकारः। आचार्य्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते। तथा च त्रित्वत्वादिव्यापिका बहुत्वत्वजातिः। सेनादौ चोत्पन्ने त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात्। इत्थञ्च इतरतो बहुलेयं सेनेति प्रतीतिरुपपद्यते बहुत्वस्य संख्यान्तरत्वे तत्तावत्याभावादित्यवधेयम्" मुक्ता०।

उप० वृत्तौ विशेषः कश्चिदुक्तो यथा

"तदयं द्वित्वाद्युत्पादविनाशक्रमः। समानजातीययोरसमानजातीययोर्वा द्रव्ययोश्चक्षुःसन्निकर्षे सति तद्गतैकत्वसंख्ययोर्यत्सामान्यमेकत्वत्वं तयोर्निर्विकल्पकानन्तरं तद्विशिष्टगुणबुद्धिरुत्पद्यते सैव चापेक्षाबुद्धिस्तया तयोर्द्रव्ययोर्द्वित्वमुत्पद्यते, उत्पन्नस्य च द्वित्वस्य यत्सामान्यं द्वित्वत्वं तदालोचनेनापेक्षाबुद्धेर्नाशो द्वित्वत्वविशिष्टद्वित्वगुणविषया विशिष्टबुद्धिश्चैकदा भवति, तदनन्तरक्षणे च द्वित्वगुणस्यापेक्षाबुद्धिविनाशः द्वे द्रव्ये इति द्वित्वविशिष्टद्रव्यज्ञानञ्च युगपदुत्पद्यते, ततस्तस्माद् द्वित्वविशिष्टद्रव्यज्ञानात् संस्कारः। तदयं संक्षेपः उत्पत्स्यमानद्वित्वाधारेन्द्रियसन्निकर्षस्तत एकत्वगुणगतसामान्यज्ञानं तत एकत्वत्वसामान्यविशिष्टैकत्वगुणद्वयालम्बनापेक्षाबुद्धिस्ततो द्वित्वगुणोत्पत्तिस्ततस्तद्गतसामान्यस्य ज्ञानं ततस्तत्सामान्यविशिष्टद्वित्वगुणज्ञानं ततो द्वित्वगुणविशिष्टद्रव्यज्ञानं ततः संस्कार इतीन्द्रियसन्निकर्षमारभ्य संस्कारपर्य्यन्तमष्टौ क्षणाः। विनाशक्रमस्तु एकत्वत्वसामान्यज्ञानस्यापेक्षाबुद्धितो विनाशः द्वित्वत्वसामान्यज्ञानादपेक्षाबुद्धेर्विनाशः द्वित्वत्वसामान्यज्ञानस्य च द्वित्वगुणबुद्धितो विनाशः द्वित्वगुणबुद्धेश्च द्वित्वविशिष्टद्रव्यज्ञानात् तस्य च संस्कारात् विषयान्तरज्ञानाद्वेति। नन्वेकत्वज्ञानात्तद्विशिष्टद्रव्यज्ञानमेव कथं नोत्पद्यते तत्सामग्रीसत्त्वात् न हि गुणज्ञाने सति द्रव्यज्ञाने विलम्बोऽस्ति तथा च तत एवापेक्षाबुद्धेर्विनाशे तन्नाशाच्च तदनन्तरक्षण एव द्वित्वनाश इति द्वे द्रव्ये इति विशिष्टज्ञानपूर्वक्षण एव द्वित्वविनाशापत्त्या द्वित्वविशिष्टद्रव्यज्ञानस्यानुत्पत्तिरेवेति चेन्न द्वित्वाद्युत्पत्तिसामग्र्यनभिभूताया एवापेक्षाबुद्धेर्द्रव्यविशिष्टज्ञानजनकत्वनियमात् फलबलेन तथाकल्पनात्। ननु तथापि स्वजनितसंस्कारेणैवापेक्षाबुद्धिविनाशे पुनः स दोषस्तदवस्थ एव, द्वित्वविशिष्टज्ञानपूर्वक्षण एव द्वित्वनाशस्य सम्भवादिति चेन्न केवलगुणज्ञानस्य संस्काराजनकत्वात् न हि केवलो गुणः क्वापि स्मर्य्यते, सर्वत्र द्रव्योपरागेणैव गुणस्मरणात्. ननु भवत्वेवं तथापि विशिष्टबुद्धिकालेऽपि द्वित्वनाशे विशिष्टप्रतीत्यनुदयस्तदवस्थ एव न हि वर्त्तमानावभासिनी विशिष्टप्रतीतिर्विशेषणनाशकाले सम्भवति तथाऽदर्शनादिति चेन्न विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहस्य विशिष्टज्ञानसामग्र्याः प्रकृतेऽपि सम्भवात्। यदि तु विशेषणेन्द्रियसन्निकर्षोऽपि कल्प्यते तदा पूर्वक्षणे तस्यापि सत्त्वात् पूर्वक्षणवर्त्तिन एव सन्निकर्षस्य कारणत्वेनाभ्युपगमात्, विशेषणं विशिष्टज्ञानागोचरोऽपि सम्भवति, विशिष्टज्ञानजनकज्ञानविषयत्वमात्रमेव हि विशेषणत्वे तन्त्रं नतु विशिष्टज्ञानविषयत्वमपि। उपलक्षणसाधर्म्यं विशेषणत्वापत्तिरिति चेन्नापत्त्याव्याप्तिसामानाधिकरण्यस्य विशेषणत्वे तन्त्रत्वात् उपलक्षणन्तु तद्व्यतिरेकेणापि, एवं यदा देवदत्तगृहे काकस्तदा काको विशेषणं, यदा तु उपरि भ्रमन् भ्रमन् तदोपलक्षणम्। एवं इति रूपवति रस इत्यादौ रूपादेरपि विशेषणत्वापत्तिरिति चेन्न इष्टत्वात्. तर्हि तथापि रसोऽस्तीति चेन्न विशिष्टज्ञाने विशेषणज्ञानावश्यकत्वात् न हि विशेषणं विशिष्टसत्तायां तन्त्रम्। द्वित्वनाशकाले विशेषणसम्बन्धो नास्ति कुतो विशिष्टज्ञानम् इति चेन्न अतद्व्यावृत्तेः वैशिष्ट्यार्थत्वात्, तज्ज्ञानन्तु तत्रापीति न किञ्चिदनुपपन्नमित्याचार्य्याः। एवं द्वित्वोत्पत्तिविनाशवत् त्रित्वोत्पत्तिविनाशावप्यूहनीयौ। द्वित्वमपेक्षाबुद्धिनाशनाश्यम्, आश्रयनाशविरोधिगुणान्तराभावे गुणस्य सतोऽविनाशित्वात् चरमशब्दवत् चरमज्ञानस्यादृष्टनाशनाश्यत्वात्। क्वचिदाश्रयनाशादपि नश्यति यत्र द्वित्वाधारावयवकर्म्मसमकालैकत्वसामान्यज्ञानम्, तद्यथा आश्रयकर्म्मानन्तरोत्पन्ने विभागापेक्षाबुद्धी संयोगनाशगुणोत्पत्ती द्रव्यनाशद्वित्वसामान्यज्ञाने तत्र द्रव्यनाशाद्द्वित्वनाशः, सामान्यज्ञानादपेक्षाबुद्धिनाशः, अपेक्षाबुद्धिनाशस्य द्वित्वनाशसमानकालत्वात् कार्य्यकारणभावाभावात्। यदा तु द्वित्वाधारावयवकर्मापेक्षाबुद्ध्योर्यौगपद्यं तदा द्वाभ्यामाश्रयनाशापे-

द्विपदा स्त्री द्वौ पादावस्य "संख्यासुपूर्वस्येति" पा० पादस्यान्त्यलोपः "टाबृचि" टापि पादः पद्भावः । द्विपदयुक्तायामृचि

द्विपदिका स्त्री द्वौ पादौ दण्डो यत्र वुन् स्त्रीत्वम् । द्वौ पादौ यत्र दण्डः १तदर्थे "द्वौ पादौ दण्डितो द्विपदिकां व्यवहरति द्विगुणं ददातीत्यर्थः" सि० कौ० अत्र पादशब्दस्य गुणवाचित्वाभिप्रायेण द्विगुणमित्युक्तमिति बोध्यम् । द्विपदी स्वार्थे क वा ह्रस्वः । २गीतिभेदे "गुरुः द्विपदिका गीतिर्लक्ष्यवेत्त्रभिधीयते" भरतः । "द्विपदिकया दिवोऽवलोक्य निःश्वस्य मालतम्" विक्रमो० ।

द्विपदी स्त्री द्वौ पादौ यस्याः पादः अन्त्यलोपे कुम्भपद्या० ङीप् पद्भावः । ऋग्भेदे १द्विपदयुक्तगीतिभेदे २मात्रावृत्तभेदे च "आद्यौ षट्कलकस्तनेतत् तदनु पञ्चचतुष्कम् गुर्वन्तं द्विपदी भवतीह विंशत्यष्टकलं वृत्तम्" तल्लक्षणम् । "गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे" शत० ब्रा० १४।८।१५।१० । त्रैलोक्यात्मपादेनैकपदी भवसि त्रैविद्यरूपपादेन त्वं द्विपदी" भा० । तेन अवयवच्छेदवाचित्वाभावात् टाबन्तोऽस्य न भवति गायत्र्यास्त्रिपादत्वात् इति वक्ष्यम् ।

द्विपर्णी स्त्री द्वे पर्णे यस्याः जातित्वात् ङीप् । १वनकोलवृक्षे रत्नमा० । २पर्णद्वययुक्ते त्रि० स्त्रियां टाप् ।

द्विपमद पु० ६त० । १हस्तिमदे २गन्धद्रव्यभेदे च राजनि० ।

द्विपात्र न० द्वयोः पात्रयोः समाहारः समा० द्वि० पात्रान्त ङीप् । पात्रद्वये । तद् हरति आवहति वा "द्विगोष्ठंश्च" पा० ष्ठन् यत्ने च द्विपात्रिक द्विपात्रीण यत्ने ठञ् तस्य आध्यर्द्धेति लुकि द्विगोरिति ङीपि प्राप्ते पात्रादित्वात् न ङीप् । द्विपात्रहारके तद्वाहके च ।

द्विपाद् पु० द्वौ पादौ यस्य वेदे नान्त्यलोपः । वानरादौ पशुभेदे "यद्वो द्विपादः पशवश्चैवं तरन्ति" शत० ब्रा० ६।८।२।५। २गणभेदे "एकपादा द्विपादाश्च तथा त्रिशिरसोऽपरे" हरिवं० १६९अ० मातामहोक्तौ । लोके तु अन्त्यलोपः द्विपाद् इत्येव । पादद्वययुक्ते मनुष्यादौ ।

द्विपाद्य त्रि० द्वौ पादौ परिमाणमस्य "पणपादमाषशताद्यत्" पा० यत् पादः पदिति न, यलोपस्य स्थानिवत्त्वात् "पद्यत्यतदर्थे" पा० इत्यपि न प्रागवकृत्तस्य तत्र ग्रहणात् । १द्विपादपरिमाणयुते दण्डप्रायश्चित्तादौ २द्विगुणदण्डे अमरः । तत्र पादशब्दस्य गुणवाचित्वात् द्विगुणपरतेति बोध्यम् ।

द्विपाधिप पु० ६त० । १ऐरावते २गजश्रेष्ठे च "तत्पूर्वद्वयस्य द्विपाधिपाः" माघः । गजाधिपादयोऽप्यत्र ।

द्विपायिन् पु० द्वाभ्यां मुखशुण्डाभ्यां पिबति पा-णिनि । गजे शब्दर० स्त्रियां ङीप् ।

द्विपास्य पु० द्विपस्यास्यमिवास्यमस्य । गणेशे । शब्दरत्ना० ।

द्विपुट पु० द्वे पुटे यत्र । उभयत्र तनुत्वके दलभेदे पार-

द्विपुरुष त्रि० द्वौ पुरुषौ प्रमाणमस्य तद्धितार्थे द्विगुः "प्रमाणे लो द्विगोर्नित्यम्" पा० मात्रचो लुक् । पुरुषद्वयप्रमाणयुक्ते स्त्रियां वा ङीप् द्विपुरुषी (षा) वा परिखा ।

द्विपृष्ठ पु० मत्स्यपत्ये राजभेदे हेमच० ।

द्विबन्धु पु० द्वयोर्लोकयोर्बन्धुः । द्वयोर्लोकयोर्बन्धौ वह्नौ । "स द्विबन्धुर्वैतरणः" ऋ० १०।६१।१७

द्विभाव त्रि० द्वौ भावौ यस्य । द्विप्रभावयुक्ते ततः ब्राह्मणा० भावे कर्मणि च ष्यञ् । द्वैभाव्य द्वित्वे न० ।

द्विभूम त्रि० द्वे भूमी यत्र अच्समा० । भूमिद्वययुक्ते प्रासादादौ (दोतला)

द्विमातृ पु० द्वे मातरौ यस्य सर्वाशब्दविधेरनित्यत्वात् न कप् । १गणेशे हेमच० । कप् द्विमातृकोऽप्यत्र । २जरासन्धे च

द्विमातृज पु० द्वाभ्यां मातृभ्यां जायते जन-ड । १गणेशे द्वैमातुरशब्दे दृश्यम् । २जरासन्धनृपे च जरासन्ध-शब्दे ३०६० पृ० दृश्यम् ।

द्विमात्र पु० द्वे मात्रे उच्चारणकालभेदोऽस्य । दीर्घस्वरे आ ई इत्यादौ "एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते" शिक्षा । [युक्ते ।

द्विमाष्य त्रि० द्वौ माषौ प्रमाणमस्य यत् । माषद्वयपरिमाण

द्विमास्य त्रि० द्वौ मासौ भूतः "द्विगोर्यप्" पा० यप् । मासद्वयं व्याप्य १भूते २तथाभूतवयस्के च ।

द्विमीढ पु० हस्तिनापुरकारकहस्तिनृपसुतभेदे "तेनेदं निर्मितं पूर्वं हस्तिनापुरमुत्तमम् । हस्तिनश्चापि दायादास्त्रयः परमधार्मिकाः । अजमीढो द्विमीढश्च पुरुमीढस्तथैव च" हरिवं० २०अ०

द्विमुख पुंस्त्री० द्वे मुखे यस्य । १मुखद्वययुक्ते राजसर्पे हला० । २मुखद्वययुक्ते त्रि० स्त्रियां स्वाङ्गत्वात् वा ङीप् । ३कृमिरोगभेदे पु० "सूक्ष्मो द्विमुखाश्चैव चर्मवेत्ति रोमजाः" सुश्रुतः । द्वे मुखाः समवाये मुखे यस्याः ङीप् । ४उभयतोमुख्यामर्द्धप्रसूतायां धेन्वां स्त्री । उभयतोमुखशब्दे १२६१ पृ० दृश्यम् "द्विमुखीगोमहासारः कपिलादानतत्पराः" काशीख० ५जलौकायां स्त्री टाप् ।

ष्टके द्विरागमनं मनुष्ये चरेऽस्तमपि सद्गुरुणि। दैत्येज्यो-ऽप्यभिमुखदक्षिणे यदि स्याद्गच्छेन्नूनं न शिशुगर्भिणी नवोढाः। बालश्चेत् व्रजति विपद्यते नवोढा चेद्वन्ध्या भवति च गर्भिणी त्यजगर्भा। नगरप्रवेशविषयाद्युपद्रवे करपीडने विबुधतीर्थयात्रयोः। नृपपीडने नववधूप्रवेशने प्रतिभार्गवो भवति दोषकृन्नहि। पित्र्ये गृहे चेत् कुचपुष्पसम्भवः स्त्रीणां न दोषः प्रतिशुक्रसम्भवः। भृग्वङ्गिरोवत्सवशिष्ठकश्यपात्रीणां भरद्वाजमुनेः कुले तथा" मु० चि० "पूर्वं नववधूप्रवेशो जाते तदनन्तरं पराहृत्यापि पितृगृहगतायामपि वध्वां वर्षेऽयुग्मेऽपि स्थितायाः पुनर्भर्तृगृहप्रवेशो द्विरागमनशब्दवाच्यः। अयं चाचारः प्राच्योदीच्यपाश्चात्यानामेवेति। चरेदिति। अथ वधूप्रवेशकथनानन्तरं पुनर्वधूप्रवेशं द्विरागमनं वक्ष्यमाणनक्षत्रादिषु चरेत् कुर्यात्तदा ? ओजहायने विषमवर्षे प्रथमे तृतीये पञ्चमे वा वर्षे सति। तथा घटालिमेषगे कुम्भवृश्चिकमेषस्थिते रवौ। तथा वरस्य रवीज्यशुद्धिः रवेः सूर्यस्य इज्यस्य गुरोः शुद्धिस्तयोर्योगतः। शुभग्रहस्य सोमबुधगुरुशुक्राणामन्यतमस्य वासरे सति। मिथुनमीनकन्यातुलावृषाणामन्यतमे लग्ने शुभग्रहावलोकिते शुभयुक्ते वा सति। लघून्यश्विनीपुष्यहस्ताः ध्रुवाणि प्रसिद्धानि चराणि श्रवणादित्रयपुनर्वसुस्वात्यः अश्वपौरा-श्रवस्तु मूलं मृदूनि प्रसिद्धानि एषु भेषु द्विरागमः प्रशस्त इत्यर्थः। यदाह ज्योतिषः "तिष्यादित्यमघा-रेवत्यादितिवसुश्रोण्युत्तराश्विनीरोहिण्यः शुभदाश्च युग्मवर्षे मेषालिकुम्भे रविः। कन्यामिथुनमीनमे नववधूयानं शुभे तौलिके दैत्याचार्यसितेन्दुसौम्यदिवसे शुक्रे गुरौ भास्करे" इति। ग्रन्थान्तरीय कानिचिद्वाक्यान्यधिकानि उक्तानि तानि राजमार्तण्डे चोक्तानि। "मैत्राश्विनी-धनोत्तरादितिगुरुब्राह्म्यनुराधाश्विनीमूलाहस्तकरश्रवणा-निलवह्नित्वाष्ट्रेषु शस्ते तिथौ। कुम्भाजालिगते रवौ शुभकरे प्राग्मोदये भार्गवे लग्ने कीटघटाजगे शुभदिने पक्षे च कृष्णेतरे। हित्वा दिक्प्रतिलोमगौ बुधसितौ चाषाढगं दिक्पतिं चानीता शुभयामिनी नववधूर्नित्योत्सवैर्मन्दिरम्"। आषाढगान् यात्रायां वक्ष्यति। शुक्रास्तनिषेधस्तु सामान्यतो वाच्यारम्भेत्या-दिनोक्त एवेति न पुनरुक्तः। यद्यपि प्राक् सामान्येन वाक्यविहिता तथाप्यावश्यकत्वे। "चैत्रे पौषे हरि-शये गुरोरस्ते नविघ्नुचे। नवोढागमनं नैव कृते पञ्च-

त्वमासु वा हिति" बादरायणवाक्यात् वधूप्रवेशः कार्यः। दैत्येज्य इति। यदि दैत्येज्यः शुक्रोऽभिमुखः सम्मुखे गन्तव्यदिगभिमुखे गन्तुर्दक्षिणदिग्भागे वा स्थितः स्यात्तदा शिशुर्बालः गर्भिणी गर्भवती नवोढा नूतनपरिणीता व्रजेत्तदा बालः विपद्यते म्रियते। गर्भिणी त्यजगर्भा गर्भरहिता स्यात् गर्भस्रावती भवेत्। नूतनपरिणीता नवोढा वन्ध्या अपत्यसम्भवरहिता स्यात्। यदाह बादरायणः "अस्तङ्गते भृगोः पुत्रे तथा सम्मुखमागते। नष्टे जीवे निरंशे वा नैव संश्रावयेद्वधूः। गर्भिण्या बालकेनापि नववध्वा द्विरागमे। पदमेकं न गन्तव्यं शुक्रे सम्मुखदक्षिणे। गुर्विणी स्रवते गर्भं बालो वा मरणं व्रजेत्। नवा वधूर्भवेद्वन्ध्या शुक्रे सम्मुखदक्षिणे"। यदि शुक्रः पूर्वस्यामुदितस्तदा पूर्वदिशि गन्तुः सम्मुख एव पश्चिमां गन्तुः पृष्ठे, दक्षिणां गन्तुर्वामे, उत्तरां गन्तुर्दक्षिणे स्यात्। तदा पूर्वोत्तरे दिशौ न गच्छेत् किन्तु पश्चिमदक्षिणे दिशौ गच्छेत्। यदि पश्चिमायामुदितः शुक्रः तदा पश्चिमां गन्तुः सम्मुख एव दक्षिणां गन्तुः दक्षिणः। पूर्वां गन्तुः पृष्ठे उत्तरां गन्तुर्वामः। तदा पश्चिमदक्षिणे दिशौ न यायात्। किन्तु पूर्वोत्तरे दिशौ गच्छे[त्]। "पृष्ठे भृगौ पल्लवतीं प्रयाणे कान्तां कुलीनां सुभगां करोति। वामे सुखो वै विदधाति शुक्रो वैधव्यशोकौ खलु चाग्र शुक्रः" इति। केचिद्दीपोत्सवपर्यन्तं मखवादिनियमं विनैव वधूप्रवेशं वाञ्छन्ति। उक्तञ्च "अस्तङ्गते गुरौ शुक्रे सिंहस्थे वा बृहस्पतौ। दीपोत्सवदिनेनैव कन्या भर्तृगृहं विशेत्" इति तद्देशाचारतो ज्ञेयम्। अत लग्नशुद्धिमाह बादरायणः "उपचयगते जीवे भृगौ केन्द्रमुपागते। शुभे लग्ने शुभाक्रान्ते गन्तव्यं भर्तृमन्दिरम्" नगरप्रवेशे, विषयोऽदेशः आदिशब्देन ग्रामः। तस्योपद्रवे अन्यराजकृतोपद्रवे सति दुर्भिक्षादिना वोपद्रवे सति। गन्तव्यदिशि प्रतिशुक्रकृतो दोषो नास्ति। करपीडने विवाहोद्देशेन यात्रायां सत्यां विबुधा देवास्तेषां यात्रा नगरकोटयात्रा देवयात्रा तीर्थयात्रा प्रयागादियात्रा तयोः। नृपपीडने नृपात्त्रासः सन्तापात्पीडायां दुर्भिक्षादिकृतायां सत्याम् नववधूप्रवेशने नूतनपरिणीतायाः कन्यायाः भर्तृगृहप्रवेशे एतेषामन्यतमभावे सति भार्गवः सम्मुखदोषकृन्नहि। यथाह बादरायणः "नवधनपुरप्रवेशो देशानां विभ्रमे तथोद्वाहे।

निर्णयार्थं जैमिनिप्रणीते धर्ममीमांसारूपे ग्रन्थभेदे ।

**धर्मसेतु** पु० धर्मस्य सेतुरिव धारकत्वात् । धर्मरक्षके "राजा दशरथो नाम धर्मसेतुरिवाचलः" रामा०आर०६२अ० । एकादशमन्वन्तरे आर्य्यकस्य सुते २हरेरंशभेदे च । तदुपक्रमे "आर्य्यकस्य सुतस्तत्र धर्मसेतुरिति स्मृतः । विष्टतायां हरेरंशस्त्रिलोकीं धारयिष्यति" भाग० ८।१३।१२

**धर्मस्कन्ध** पु० आर्हतमतसिद्धे धर्मास्तिकायपदार्थे अर्हत्शब्दे दृश्यम् । [ङीप् ।

**धर्माङ्ग** पुंस्त्री धर्म इव शुभमङ्गमस्य । बके निघण्टुः स्त्रियां

**धर्माचार्य्य** पु० धर्मे आचार्य्यः । १धर्मशिक्षके गुरुभेदे ऋग्वेदिनां तर्पणीये २ऋषिभेदे च "सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्य्या इत्युपक्रमे ये चान्ये आचार्य्यास्ते सर्वे तृप्यन्त्विति" आश्व० गृ० ३।४।४ । धर्माचार्य्याश्च नैमित्तिकादिप्रलयोत्तरं वेदस्य धर्माचारयोः शिक्षार्थं बीजीभूता धर्मप्रवर्त्तका ऋषिभेदाः यथाह मिता० प्रा० अध्याये "ननु नैमित्तिकादिप्रलयसमये ऽखिलाध्यापकप्रलयादविदितवेदास्तस्योपरितनाजनाः कथमग्निहोत्रादिकं कर्म करिष्यन्ति । कथन्तरामकृतकर्माणः स्वर्गमार्गमधिरोक्ष्यन्तीत्यत आह "तत्राष्टाशीतिसाहस्रा मुनयो गृहमेधिनः । पुनरावर्त्तिनो बीजभूता धर्मप्रवर्त्तकाः" याज्ञ० । तत्र पितृयाने अष्टाशीतिसहस्रसंख्या मुनयो गृहस्थाश्रमिणः पुनरावृत्तिभागिनः सर्गादौ वेदस्योपदेशकतया धर्मतत्त्वप्रादुर्भावे बीजभूताः सन्तोऽग्निहोत्रादिधर्मप्रवर्त्तका अतो न प्रागुदितदोषसमागमः । किञ्च । "सप्तर्षिनागवीथ्यन्तर्देवलोकं समाश्रिताः । तावन्त एव मुनयः सर्वारम्भविवर्जिताः । तपसा ब्रह्मचर्य्येण सङ्गत्यागेन मेधया । तत्र गत्वावतिष्ठन्ते यावदाभूतसंप्लवम्" याज्ञ० । सप्तर्षयः प्रसिद्धा नागवीथ्यैरावतपथः तदन्तराले तावन्त एवाष्टाशीतिसहस्रसंख्या मुनयः सर्वारम्भविवर्जिताः केवलज्ञाननिष्ठास्तपोब्रह्मचर्य्ययुक्तास्तथासङ्गत्यागिनो देवलोकं समाश्रिताः । आभूतसंप्लवमाकल्पप्रलयपर्य्यन्तमवतिष्ठन्ते । तत्र च स्थिताः सृष्ट्यादावाध्यात्मिकधर्माणां प्रवर्त्तकाः । कथम्भूतास्ते मुनय इत्यत आह "यतो वेदाः पुराणानि विद्योपनिषदस्तथा । श्लोकाः सूत्राणि भाष्याणि यच्च किञ्चन वाङ्मयम्" याज्ञ० । येभ्यो द्विविधादपि मुनिसमूहादभ्यासतो वेदाः पुराणाङ्गविद्योपनिषदश्च नित्यभूता एवाध्येतृपरम्परायाताः प्रवृत्तास्तथा श्लोका इतिहासात्मकाः सूत्राणि च शब्दानुशासनमीमांसागोचराणि । भाष्याणि च सूत्रव्याख्यारूपाणि यदन्यदायुर्वेदादिकं वाङ्मयं तदपि यत् यस्मात्प्रवृत्तं तथाविधास्ते मुनयो धर्मप्रवर्त्तकाः । एवं सति वेदस्यापि नानित्यतादोषप्रसङ्गः" ।

**धर्मात्मन्** पु० धर्म आत्मा स्वभावो यस्य । धर्मशीले "स तानुवाच धर्मात्मा महर्षीन् मानवो मनुः" मनुः ।

**धर्माधर्म** पु० द्वि० ब० धर्मश्चाधर्मश्च द्व० । १पुण्यपापयोः "धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश" भाषा० । धर्माधर्मौ परीक्षणीयतयाऽत्र स्तः अच् । धर्मज्ञरूपे दिव्यभेदे तद्विधानं वीरमित्रोदये यथा

"तत्र पितामहः "अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम् । हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणामिति" । हन्तॄणां साहसाभियोगेषु, याचमानानामित्यर्थाभियोगेषु, प्रायश्चित्तार्थिनां नृणामिति पातकाभियोगेषु एतद्दिव्यं भवतीति सूचितम् । धर्माधर्मदिव्यप्रकारमाह स एव "राजतं कारयेद्धर्ममधर्मं सीसकायसम् । लिखेद्भूर्जे पटे वापि धर्माधर्मौ सितासितौ । अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् । सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक् । एवंविधायोपलिप्य पिण्डयोस्तौ निधापयेत् । गोमयेन मृदा वापि पिण्डौ कार्य्यौ समन्ततः । मृद्भाण्डके अनुपहते स्थाप्यौ चानुपलक्षितौ । उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ । आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत् । धर्मावाहनपूर्वन्तु प्रतिज्ञापत्रकं लिखेत् । यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे" इति मन्त्रं विशोध्यो ब्रूयात् । अर्हमिति मन्त्रलिङ्गात् । बृहस्पतिरपि "पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ । जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च सामभिः । आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः । अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः । समौ कृत्वा नवे कुम्भे स्थाप्यौ चाप्युपलक्षितौ । ततः कुम्भात्पिण्डमेकं प्रगृह्णीतानुयाचितः । धर्मे गृहीते शुद्धः स्यात् सम्भूतश्च परीक्षकैरिति" जीवदानादिकैर्मन्त्रैः, मा प्र गामपथो वयमित्यादि" ऋ० १०।५७।१ सूक्तपठितऋङ्मन्त्रैः अन्यैर्वा आगमोक्तैः प्राणप्रतिष्ठामन्त्रैरित्यर्थः । ते च शारदातिलके उक्ताः" ।

**धर्माधर्मविद्** पु० धर्माधर्मौ वेत्ति विद–क्विप् तह० । मीमांसके स हि विधिनिषेधगम्यौ धर्माधर्मौ तत्त्वतो

जानातीति तस्य तथात्वम् । २तद्धेतुभूतविहितकर्माग्निहोत्रादिनिषिद्धकर्महिंसादिवेत्तरि च ।

**धर्माधिकरण** न० धर्मोऽधिक्रियतेऽत्र अधि+कृ—आधारे ल्युट् । नृपाणां तन्नियुक्तानाञ्च व्यवहारदर्शनयोग्ये १स्थानभेदे । तत्स्वरूपभेदादिकं वीरमि० उक्तं यथा बृहस्पतिः "दुर्गमध्ये गृहं कुर्य्याज्जलवृक्षान्वितं पृथक् । प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम् । माल्यधूपासनोपेतां बीजरत्नसमन्विताम्" । लक्षण्यां वास्तुशास्त्रोक्तलक्षणेन तु लक्षिताम् । सभायां धर्माधिकरणत्वं च "धर्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम् । यत्राधिक्रियते स्थाने धर्माधिकरणं हि तदिति" उक्तेः । तत्र सभ्योपवेशनमाह मनुः "यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः । राज्ञश्चाधिकृतो विद्वान् ब्राह्मणस्तां सभां विदुरिति" त्रय इत्युपलक्षणम् "अधिकानामपि कृतत्वात् । तच्च वक्ष्यते । अधिकृतो विद्वान् प्राड्विवाकः । अत्र "सभामेव प्रविशेत्" इत्यादिवचनात् सभा मुख्यं व्यवहारदर्शनस्थानम् । अन्यान्यमुख्यानि नारदवचनादवगन्तव्यानि "देशस्थानानि वादानां पञ्च चैत्यब्रवीद्भृगुः । निर्णयं येन गच्छन्ति विवादं प्राप्य वादिनः । आरण्यास्तु स्वकैः कुर्य्युः सार्थिकाः सार्थिकैस्तथा । सैनिकाः सैनिकैरेव ग्रामेऽप्युभयवासिभिः । उभयानुमतश्चैव गृह्यते स्थानमीप्सितम् । कुलिकाः सार्थमुख्याश्च पुरग्रामनिवासिनः । ग्रामपौरगणश्रेण्यश्चातुर्विद्याश्च वर्गिणः । कुलानि कुलिकाश्चैव नियुक्ता नृपतिस्तथेति" स्वकैरारण्यकैः ग्रामेऽपीत्यपिशब्दादौ ग्रामेऽरण्यादौ च निवसन्ति ते उभयवासिभिर्निर्णयं कुर्य्युरुभयव्यवहाराभिज्ञत्वात्तेषाम् । कुलिकाः कुलश्रेष्ठाः । सार्थो ग्रामदेशयात्रादौ मिलितो जनसङ्घः तन्मुख्याः सार्थवाहादयः । पुरं मुख्यनगरम् । तस्मादर्वाचीनो ग्राम इति पुरग्रामनिवासिनोर्भेदः । कुलिकादीनि पञ्च स्थानानि तानि चारण्यकादीनामेव ग्रामादीनि दश स्थानानि साधारणानि । ग्रामो ग्रामाकारेणावस्थितो जनः । पौरः पुरवासिनां समूहः । श्रेण्यो रजकाद्या हीनजातयः । चातुर्विद्याः आन्वीक्षिक्यादिविद्याचतुष्टयोपेताः । वर्गिणो गणप्रभृतयः" । तत् अर्हत्वेनास्त्यस्य अच् । २तत्र नियुक्ते प्राड्विवाकादौ पु० "शमः शत्रौ च मित्रे च सर्वशास्त्रविशारदः । विप्रमुख्यः कुलीनश्च धर्माधिकरणो भवेत्" मत्स्यपु० "पुरुषान्तरतत्त्वज्ञाः प्रांशवश्चाप्यलोलुपाः । धर्माधिकरणे कार्य्या जनाह्लादनकरा नराः इति मत्स्यपु० ।

**धर्माधिकरणिन्** पु० धर्माधिकरणं नियोगस्थानतयाऽस्त्यस्य इनि । विचारके प्राड्विवाकादौ धर्माध्यक्षे हेमच० ।

**धर्माधिकारिन्** पु० धर्मं व्यवहारे तन्निर्णयमधिकरोति अधि+कृ—णिनि ६त० । प्राड्विवाकादौ ।

**धर्माध्यक्ष** पु० धर्मे व्यवहारे धर्मनिर्णये अध्यक्षः । १प्राड्विवाकादौ । "कुलशीलगुणोपेतः सर्वकर्मपरायणः । प्रवीणः प्रेषणाध्यक्षो धर्माध्यक्षोऽभिधीयते" चाणक्यः । २विष्णौ च "लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः" विष्णुस० । "धर्माधर्मौ साक्षादीक्षते तदनुरूपं फलं दातुं तस्माद्धर्माध्यक्षः" भा० । अत्र धर्मपदं लक्षणया धर्माधर्मपरं तदभिप्रायेण धर्मोपमो इत्युक्तम् ।

**धर्माम्बु** पु० धर्मकृतोऽम्बु कूपः । तीर्थभेदे स्कन्दपु० ।

**धर्माभास** पु० धर्म इवाभासते आ+भास—अच् । स्मृतिकृदितरशास्त्रोक्ते असद्धर्मे । "श्रुतिस्मृतिभ्यामुदितो यः स धर्मः प्रकीर्त्तितः । अन्यशास्त्रेषु यः प्रोक्तो धर्माभासः स उच्यते" देवीभागवतम् ।

**धर्मारण्य** न० तीर्थभेदे तदाविर्भावकथा वराहपु० यथा "स धर्मः पीड़ितः सर्वैः सोमेनाकृतकर्मणा । तारां जिहीर्षता पत्नीं भ्रातुराङ्गिरसस्य वै । सोऽप्ययाद्दीपितस्तेन बलिना क्रूरकर्मणा । अरण्यं गहनं घोरं प्रविवेश तदा प्रभुः" ब्रह्मोवाच । "यस्मादरण्यमिदं धर्म ! त्वयाव्याप्तं चिरं विभो ! । नाम्ना भविष्यति ह्येतद्धर्मारण्यमिति प्रभो !" गयास्थे २तीर्थभेदे "प्रथमेऽह्नि विधिःप्रोक्तो द्वितीयदिवसे व्रजेत् । धर्मारण्यं तत्र धर्मो यस्मात् यज्ञमकारयत्" वायुपु० गयामाहात्म्ये "गया च फल्गुतीर्थञ्च धर्मारण्यं सुरैर्वृतम् । तथा देवनदीपुण्या सरश्च ब्रह्मनिर्मितम्" भा० आनु० १६५ अ० । ३धर्मसाधने अरण्यमात्रे च "तैरुक्तो यज्ञियान् देशान् धर्मारण्यं तथैव च" भा० आश्व० ८२ अ० । वृ०स० १४अ० कूर्मविभागोक्ते मध्यभागस्थे देशभेदे न० ४माथुरकोपज्योतिषधर्मारण्यानि शूरसेनाश्च" इत्युपक्रमे मध्यमिदमित्युक्तम् ।

**धर्मासन** न० धर्मार्थं धर्मविचारार्थमासनम् । विचारनिर्णयार्थे आसनभेदे । "धर्मासनमधिष्ठाय संवीताङ्गः समाहितः" मनुः ।

**धर्मास्तिकाय** पु० आर्हतमतसिद्धे जीवाजीवधर्माधर्म-

वरकस्य फलञ्च मधुरं मनाक्" भावप्र०। "बिल्वार्क-खदिराकीर्णं कपित्थधवसङ्कुलम्" भा० आ० ६९ अ०। "या विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान्। तस्मान्माधवनामासि धवः स्वामीति शब्दितः" हरिवं० २७९ अ०। भावे अप्। ६कम्पने ७विधूनने च पु०।

**धवनि** स्त्री धू-करणे अनि। धमनौ पारस्करनि०।

**धवल** पु० धाव-वृषा० कल वा०ह्रस्वः धवं कम्पं लाति ला-क वा। "धवलः १सिन्दूरे २सिते। ३महोक्षे चाथ धवली ४गौरभ्यां समुदाहृता" विश्वः। गौरभ्यामेव गौरा०ङीष्। ५श्वेतवर्णयुक्ते त्रि० अमरः अत्वार्थे स्त्रियां टाप्। "नीता येन निशा शशाङ्कधवला" उद्भटः। ५निर्मले त्रि० त्रिका०। "क्रियते धवलः खलु कैर्धवलैरिव सितेतरैरधः" माघः। ६धवदृक्षे ७चीनकर्पूरे स्त्री। ८श्वेतमरिचे न० राजनि०। ९रागभेदे स च भरतमते हिन्दोलरागस्य अष्टमः पुत्रः सङ्गीतशास्त्रम्। १०वृक्षभेदे "धवलः पाण्डुवहिष्णो रक्तपित्तहरो हिमः। रसे पाके च मधुरः संग्राही वातमान्निलत्" भावप्र०। ११छन्दोभेदे [illegible]वर्णं यथा "द्विजवर! गणयुगममगणम गणयुगलर्म विमलबलयमपि च कलय सकलजनसुखम्। फणिपतिवरभणितममलमिह हितं विमलकविसुहृदिव ललितमिति भुवि विदितम्"।

**धवलगिरि** पु० कर्म०। स्वनामख्याते पर्वतभेदे।

**धवलपक्ष** पुंस्त्री धवलौ पक्षौ यस्य। हंसे राजनि०। स्त्रियां जातित्वात् ङीष्। "धवलपक्षविहङ्गमकूजितैः" माघः। कर्मधा०। १चान्द्रमासघटके पञ्चदशतिथ्यात्मके २शुक्ले पक्षे पु०

**धवलपट्टिनी** स्त्री कर्म०। श्वेतपाटलिकायाम् राजनि०।

**धवलमृत्तिका** स्त्री कर्म०। (खड़ि) खटिन्यां राजनि०।

**धवलयावनाल** पु० कर्म०। श्वेतयावनाले यावनालभेदे राजनि०।

**धवला** स्त्री अनुदात्तत्वात् ङीप्। शुभ्रवर्णायां स्त्रियाम्। अमरः। [धवलिमभिः शुभ्रपाषाणैरभिख्याम्" माघः।

**धवलिमन्** पु० धवलस्य भावः इमनिच्। श्वेतत्वे "अधिगत-

**धवलोत्पल** न० कर्म०। कुमुदे राजनि०।

**धवाणक** पु० धुनोति वृक्षादीन् धू-आणक। वायौ उज्ज्वल०।

**धवित्र** न० धू-करणे इत्र। मृगचर्ममयव्यजने अमरः। "सम्भरेद धवित्राणि परिधींश्च" कात्या०श्रौ०२६।२।१०। "धुनोत्यग्निभिरिति धवित्राणि कृष्णाजिनखण्डनिर्मिता-न्यो व्यजनाः" देवनाथः।

**धस्** त्रि० धा-असुन्। १धारके रेतोधाः पुरोधाः। २ब्रह्मणि पु० मेदि०। ३वृहस्पतौ उज्ज्वा०।

**धा** धारणे पोषणे दाने च जुहो० उभ० सक० अनिट्। दधाति धत्ते धत्से दध्यात् दधातु धेहि अदधात् अधत्त। अधात् अधित। दधौ दधे। दधिथ दधाथ। दधिव धाता धास्यति। धीयते अधायि अधायिषाताम् अधिषाताम्। हितः हित्वा हितिः। "त्वं मुग्धाक्षि! विनैव कञ्चुलिकया धत्से मनोहारिणीम्" सा० द०। "इमं नो यज्ञममृतेषु धेहि" ऋ० ३।२१।१ "तत्र त्वा देवा सविता दधातु" ऋ० १०।१७।४ "धर्मे दध्यात् सदा मनः" मनुः। "निवेशाय मनो दधुः" भा० व० ६५ अ०। "न नाशमधिगच्छन्तीति मे धीयते मतिः" भा० विरा० १८ अ०। "हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते। यद्यस्य सोऽदधात् सर्गे तत्तस्य स्वयमाविशत्" मनुः। "यज्ञाय मामुन्नतमध्यमेषु धत्तेऽभ्युदुर्वहम्" भट्टिः। "गामधास्यत् कथं नागो मृणालमृदुभिः फणैः" कुमा०। धापयति धित्सति। "त्वं वह्निं कुह धित्सथः" ऋ० १।४६।८

अति+अतिक्रम्य धारणे अतिशयधारणे च "आयुर्यत्ते अतिहितं पराचैः" अथ० ७।५३।२।

अधि+आधिक्येन धारणे "यज्ञाप[illegible]य नयो अध्यधत्तम्" ऋ० १।११७।८।

अनु+पश्चाद्धारणे। "अथान्यान (तद्बन्धान) सूतान्सास्त्रयीषु समितृषु अनुदधीरन्" लाट्या० ४।६।१४।

अन्तर्+आच्छादने वस्त्वन्तरेण व्यवधाने। "उदुम्बरशाखामन्तर्धायाभिषिञ्चति" ऐ० ब्रा० ८।७। तिरोधाने "ते चान्तर्दधिरे नागाः" भा० आ० १२९ अ०।

अपि+तिरोधाने आच्छादने। "धनेनाधर्मलब्धेन यच्छिद्रमपिधीयते" भा० उ०१४अ०। वा अतो लोपः "पिधानमपिधानम्" अमरः।

अभि+कथने "साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः" का० प्र०। "गणनव्यवहारे तु हेतुः संख्याभिधीयते" भाषा०।

प्रति+अभि+प्रत्युत्तरकथने। "मया च प्रत्यभिहितं देवकार्यावदर्शनात्" भा० उ० १९ अ०।

अव+मनःसंयोगविशेषे अभिनिवेशे "अवधानपरे चकार सा" कुमा०। अधःस्थापने पातने च "यां ते क्रत्यां कूपे अवदधुः" अथ० ५।३१।७। "त्रितः कूपेऽवहितः" ऋ० १।१०५।१७

वि+परि+परिवर्त्तनेन आच्छादने। "आचामः पुनराचामेत् वासो विपरिधाय च" याज्ञ०।

पुरस्+अग्रतः स्थापने। पुरोहितः। "तुराषाहं पुरोधाय धाम स्वायम्भुवं ययुः" कुमा०।

प्र+प्रकर्षेण धारणे। "दिग्वसनाः बहवो प्रधापिताः" भाग० ३० अ०। प्रधानम्।

प्रति+प्रक्षेपे "तदस्मै चक्षुः प्रतिधेहि रेभे" ऋ०१०।८७।१२। प्रतीकारार्थे विधाने "दुष्टदैवतनाशाय यत्नो ध्यानसमाधिना। कर्त्तव्यस्तत्प्रविशेषात् यान्तिकं प्रतिधास्यति" शतपथ० प्रतिविधाने।

वि+करणे "तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्" गीता। "विदधाति विभक्त्येह फलं पूर्वकृतं कथाम्" भा० व० अन्यान्यदपि कर्त्तव्यं तद्विधानुत्तमुच्यते" व० ७६ अ०। कर्त्तव्यतयोपदेशे "यस्मिन्देशे य आचारः पारम्पर्यक्रमागतः वि- धीयते" मनुः। "चिकीर्षितक्रियाजन्यहेतुधीविषयो विधिः" शब्द०श० विधिशब्दे दृश्यम्। "न दैवयाज्ञिको होमो लौकिकेऽग्नौ विधीयते" मनुः।

अनु+वि+तुल्यरूपाचरणे यथानुकरणे च। "आनुपूर्व्येण च स्त्रियां दैवत उच्चैरुपांशुतायां चाध्वर्युमनुविदधीत" कात्या०श्रौ० १।१।२ "सर्वं च तेभ्योऽनुविधाय कांक्षित्" भा०उ०२६अ०। "उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति। करोति कुर्वतः कर्म छायेवानुविधीयते" भा० शा० १८१। "इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते" गीता।

प्रति+वि+प्रतिकूलाचरणे "क्षिप्रमन्त्रियतां चारः प्रति- विधीयताम्" रामा०सुन्द० प्रतीकारे च "क्षिप्रमेव कस्मात् प्रतिविहितमार्येण" मुद्राराक्षसे चन्द्रगुप्तोक्तिः "न पारितं प्रतिविधातुम्" तत्रैव चाणक्योक्तिः।

श्रत्+आदरे विश्वासे च। "श्रद्दधाति क इहेह न साक्षात्" नैष०।

सम्+सम्यग्विधाने योजने स्थापने अभिसन्धौ। "मनस्येतानि सन्धाय मनसा सम्प्रधारयेत्" भा० आश्व० ४२ अ०। "यथा छाया वासः सन्दध्यात्" ऐ० ब्रा० ८।४।८। "धनुष्यमोघं समधत्त सायकम्" कुमा०। "संदधे धनुषि वायुदैवतम्" रघुः। "भयति क्षतसन्धानमिव तत्" शकु०। मेलने "खलदुदुग्धं यो हि मित्रं पुनः सन्धातु- मिच्छति" चाणक्यः।

अति+सम्+अतिशयेन यन्त्रादिना व्यथने संयोजने। "त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसन्धीयते कामिजन- सार्थः" शकु०।

अनु+सम्+अनुसन्धाने विचारजन्यज्ञानभेदे अनुचिन्तने "आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" मनुः। अन्वेषणे च "दुर्गमनुसन्धेहि" हितो०।

अभि+सम्+तात्पर्ये अभिलाषभेदे। "अभिसन्धाय तु फलं दम्भार्थमपि चैव यत्" गीता। "भवन्तमभिसन्धाय जिघांसन्ति भवत् प्रियम्" भा०शा०११०५ श्लो०। "श्राद्धानि चैव कुर्वन्ति फलकामाः सदा नराः। अभिसन्धाय पितरं पितुश्च पितरं तथा" हरिवं०१६अ० "गूढाभिसन्धिः यद्गते" जगदीशः। "अभिसन्ध्यादिषु चैवम्" शा० सू०।

प्रति+सम्+प्रतिरूपसन्धाने। "प्रतिसन्धाय चाक्षाणि तेऽन्यो- न्यस्य विशाम्पते!। ससृजुः पाण्डवाश्चैव कौरवाश्च महारणे" भा० भी० ७५ अ०। "पराङ्गतः प्रतिसन्धाय शिष्यवः सव्यसाचिनः" भा० वि० ६१ अ०।

धाक त्रि० धा–उणा०क तस्य नेत्त्वम्। १धारके २ब्रह्मणि पु० मेदि०। ३वृषे ४आहारे च ५स्तम्भे ६कुल्ये च संक्षिप्त सा० उणादिवृत्तिः।

धा(घा)टी स्त्री घट्यते हिंस्यतेऽत्र घट–हिंसायां आधारे अच् गौरा० ङीष्। शब्दक० धस्य घः घाटी वा तत्र पाठः। अभ्यवस्कन्दने शत्रुसम्मुखगमने हेमच०।

धाणक पु० धा–ल्युक। दीनारमाने परिमाणभेदे। उज्ज्वलद०।

धातक पु० धातुं करोति णिच् टिलोपः ण्वुल्। पुष्कर- द्वीपस्वामिनः वीतहोत्रस्य १पुत्रभेदे "तद्वीपस्याधिपतिः प्रैयव्रतो वीतिहोत्रो नाम तस्यात्मजौ रमणकधातक- नामानौ वर्षपती नियुज्य" भाग० ५।२०।२२। गौरा० ङीष्। (धाइफुल) २धातुपुष्प्याम् राजनि०। "धातकी कटुका शीता मदकृत् तुवरा लघुः। तृष्णातीसारपित्तास्र- विषक्रिमिविसर्पजित्" भावप्र०तद्गुणाः। ३तीर्थभेदे शिवपु०।

धातक्यादिलेह चक्रदत्तोक्ते लेहभेदे "धातकीबिल्वधन्या- कलोध्रेन्द्रयवबालकैः। लेहः क्षौद्रेण बालानां ज्वरा- तीसारवान्तिजित्" चक्र०।

धातु पु०धीयते सर्वं निःक्षिप्यते तत्तुप्रलयादावस्मिन् धा–आधारे तुन्। १परमात्मनि। "क एष चिद्धातुः" श्रुतिः। दधाति सृष्टान्। २सर्वेषां नाम्नां प्रकृतिभूते भूप्रभृतौ तस्य लक्षणविभागादिकं शब्दार्थरत्नेऽस्माभिर्दर्शितं यथा "धातुर्नाम क्रियावाचकोगणादिपठितः शब्दविशेषः क्रिया च पूर्वोक्तफलानुकूलो व्यापार एव सर्वेषाम् धातू-

कारकाणामन्वयोपपत्तये कालान्वयोपपत्तये च धातूनां क्रियावाचकत्वाङ्गीकारात्। तथाहि। "क्रियाभेदाय कालस्तु संख्या सर्व्वस्य भेदिका" इति वाक्यपदीये कालानां क्रियाभेदकत्वमुक्तमुक्तञ्च तत्रैव "क्रिया नियतसाधना" इत्यादिना साधनानां क्रियाकाङ्क्षत्वं तत्र यदि धातुभिः क्रिया न बोध्येत तदा तेषामन्वयो विशेषणत्वं वा न भवेदतोऽवश्यं सर्व्वेषां क्रियावाचकत्वं स्वीकार्य्यं धातूनां फलमात्रवाचकत्वे आख्यातानां व्यापारार्थकत्वे लृङादिस्थले आख्याताभावेन कारकाद्यन्वयानुपपत्तेः नापि क्रियामात्रवाचकत्वं त्यजिगम्योः पर्य्यायतापत्तेः। तथाच फलवाचकत्वस्य तेषां प्रायशोगणपाठे एव उक्तत्वात् न तदंशे विवादः। किञ्च फलावच्छिन्नक्रियायाः पृथक्शक्त्या विशिष्टशक्त्या वा धात्वर्थत्वाभावे सकर्म्मकाकर्म्मकविभागोच्छेदः स्यात् स्याच्च फलमात्रधात्वर्थत्वे सर्व्वेषां कारकाणां तत्रान्वयः तत्रैव कालान्वयोपगमे च व्यापारविगमकालेऽपि फलसत्त्वेन वर्त्तमानत्वादिप्रयोगापत्तिः। अतोऽवश्यं क्रियावाचकत्वं स्वीकार्य्यमतएव "धातोरर्थः क्रियोच्यते" इत्यनेन धात्वर्थत्वेनैव क्रियात्वस्वीकारः। अतएव च "भूवादयोधातवः" इतिपाणिनीयसूत्रमपि क्रियावाचकत्वं धातुमात्राणां प्रतिपादयति। तथाहि भूश्च वा च भूवौ आदिश्चादिश्चादी भूवौ आदी येषां ते धातवइति तथा चात्र प्रथम आदिशब्दो व्यवस्थावाची भुवा सह तदन्वयात् भूप्रभृतयइत्यर्थलाभः द्वितीयश्चादिशब्दः सादृश्यवाची वाधातुना तदन्वयत्वेन वासदृशा इत्यर्थलाभः तत्सादृश्यञ्च क्रियावाचित्वेन वाधातोर्गत्यर्थतया क्रियावाचित्वप्रसिद्धेस्तथा च भूप्रभृतयः क्रियावाचित्वेन वासदृशा धातव इत्येव फलितम्। भूवादित्वं गणपाठापेक्षया तस्य च क्रियावाचकत्वं पूर्व्वोक्तयुक्तेरिति संक्षेपः। अत्र क्रियावाचित्वानुक्तौ गणपठितत्वेन सर्व्वनामाव्ययादीनामपि धातुत्वापत्तिः तन्मात्रोक्तौ च हिरुगाद्यव्ययानां क्रियावाचित्वेन धातुत्वापत्तिरत उभयमुक्तम्। उक्तञ्च "किन्तु क्रियावाचकतां विना धातुत्वमेव नो। सर्व्वनामाव्ययादीनां वावादीनां प्रसङ्गतः। न हि तत्पाठमात्रेण युक्तमित्याकरे स्फुटमिति"। तत्पाठः गणपाठः। हिरुक् चावयवे नञि वदनेकार्थे इत्यादिद्रव्यवाचिनामपि तत्साधनक्रियावाचित्वमस्त्येव कालकारकाद्यन्वयानुरोधात् तत्फलस्य द्रव्यरूपत्वेऽपि न क्षतिः। गणादीया-दिपदेन स्वतन्त्रगणपरत्वं तेन सौत्राणां स्तम्भुप्रभृतीनां सनाद्यन्ताधातव इत्यादीनाञ्च प्रत्ययान्तानां धातुत्वमव्याहतमेव दर्शितयुक्तेः तत्रापि क्रियावाचित्वादेरवश्यं स्वीकाराच्च नामसङ्करइति दिक्।

ते च सर्व्वेऽपि धातवः सकर्म्मकाकर्म्मकभेदेन द्विविधाः। तत्र व्यापाराधिकरणमात्रावृत्तिफलवाचकः सकर्म्मकः पच्यादेः व्यापाराधिकरणावृत्तिविक्लित्तिरूपफलस्य बोधकतया सकर्म्मकत्वं कर्त्तृकर्म्मोभयनिष्ठफलबोधकस्यापि गम्यादेः व्यापाराधिकरणमात्रावृत्तिफलबोधकतया सकर्म्मकत्वम्। भूप्रभृतीनां तु व्यापाराधिकरणमात्रवृत्तिफलबोधकतया न सकर्म्मकत्वं फलस्य सत्ताया उत्पत्तिरूपव्यापारस्यैकस्मिन्नेव धर्म्मिणि घटादौ सत्त्वात्। उक्तञ्च वाक्यपदीये "आत्मानमात्मना विभ्रदस्तीति व्यपदिश्यते। अन्तर्भावाच्च तेनासौ कर्म्मणा न सकर्म्मकः" इति। अस्यायमर्थः आत्मानं स्वरूपं विभ्रत् आत्मधारणानुकूलव्यापाराश्रयः अस्तीतिपदेन समानाधिकरणतया व्यपदिश्यते तद्भेदबोधनाय तिङादिकं प्रयुज्यतेइति यावत् तेनात्मनात्मरूपेण कर्म्मणा धारणकर्म्मणा धातुः न सकर्म्मकः। तत्र हेतुरन्तर्भावात् धात्वर्थ एव तस्य कर्म्मणः प्रवेशात् आत्मधारणानुकूलव्यापाररूपधात्वर्थेनात्मन उपसंग्रहादित्यर्थः। अथ वा अन्तरेव व्यापाराधिकरण एव भावात् फलस्य सत्त्वात् व्यापारसामानाधिकरण्यादित्यर्थः तेन भुवादेरुत्पत्त्यनुकूलव्यापारवाचितया धात्वर्थोपसंगृहीतकर्म्मकत्वाभावेऽपि फलसमानाधिकरणव्यापारवाचित्वादकर्म्मकत्वम्। अतएव "फलव्यापारयोरेकनिष्ठतायामकर्म्मकः। धातुस्तयोर्धर्म्मिभेदे सकर्म्मक उदाहृत" इति फलसामानाधिकरण्यात् द्विकताकर्म्मकसकर्म्मकविभागोऽभिहितः। एकनिष्ठतायामेकमात्रवृत्तितायामित्यर्थः तेन गम्यादेर्व्यापाराधिकरणवृत्तिफलवाचित्वेऽपि नाकर्म्मकत्वमिति धर्म्मिभेदेऽधिकरणान्यत्वे इत्यर्थः। एवमेव शब्दकौस्तुभकारादयः। एतन्मते सकर्म्मकाकर्म्मकशब्दौ पारिभाषिकावेवेति द्रष्टव्यम्। मञ्जूषाकृतस्तु "कर्म्मणा सहेति नास्ति कर्म्म यस्येति व्युत्पत्त्या सकर्म्मकाकर्म्मकशब्दौ यौगिकौ तत्र साहित्यं तद्वित्तत्वार्थबोधकत्वम् अन्वयस्य पृथक्पदोपस्थाप्ययोः सम्बन्धरूपोपादानत्वेन जीवत्यादीनां प्राणधारणानुकूलव्यापारार्थकतया तत्कर्म्मणः प्राणादेर्धात्वर्थानभ्यन्तरात् न सकर्म्मकत्वं धात्वर्थोपसंगृहीतकर्म्मकत्वेनाकर्म्मकत्वात्। कर्म्म च व्याकरणमा-

स्वीयपरिभाषाविशेषकर्मसंज्ञाविशिष्टमुच्यते तेनाधिगच्छति ग्रामादित्यादौ कर्मणि लकारोपपत्तिः अधिशेतेः कर्मसंज्ञाविशिष्टान्वितस्वार्थबोधकत्वात् अन्यथा पूर्वमते तस्य फलसमानाधिकरणव्यापारबोधकतयाऽकर्मकत्वेन "भावे चाकर्मकेभ्यः" इति भाव एव लकारापत्तेः। नयति च ग्रामं गच्छतीत्यादौ गम्यादिः ईप्सिततमत्वेन कर्मसंज्ञाविशिष्टेन पृथग्भूतेन ग्रामेणान्वितं स्वार्थं बोधयन् सकर्मकः, अधिवसतिस्तु अधिकरणत्वेन कर्मसंज्ञाविशिष्टेनेति विवेक" इति प्राहुः। युक्तञ्चैतत् धात्वर्थोपसङ्गृहीतकर्मकाणां व्यापारव्यधिकरणफलवाचितया पूर्वकल्पे सकर्मकत्वापत्तेः तत्तद्भिन्नत्वेन निवेशे गौरवं तथा कर्मणोऽविवक्षायां गम्यादेरपि सकर्मकत्वस्वीकारेण अविवक्षाविशिष्टत्वेन निवेशे गौरवञ्च। एतन्मते तु कर्माभावादेव तदन्वितस्वार्थबोधकत्वाभावादकर्मकत्वस्योपपत्तिरिति सूक्ष्ममीक्षणीयम्। अस्मिन् पक्षे सकर्मकत्वं तदन्वितस्वार्थबोधकत्वमिति बोध्यम्।

सकर्मकाश्च द्विविधाः एककर्मका द्विकर्मकाश्च। एककर्मान्वितस्वार्थबोधकाः गम्यादयः एककर्मकाः। द्विकर्मकाश्चापि द्विविधाः द्विकर्मान्वितैकव्यापारार्थकाः द्विकर्मान्वितद्विव्यापारार्थकाश्च। तत्राद्या दुहादयः। न च ते विशिष्टद्विव्यापारार्थकाः तयोर्द्वे ईप्सिततमाभ्यामेव कर्मभ्यां व्यापारद्वयेऽन्वयसम्भवेन द्वितीयाद्युत्पत्तौ "अकथितञ्चेति" सूत्रेण दुहादीनां कारकान्तरसंज्ञाप्रसक्तावकथितस्य कर्मसंज्ञाविधानानौचित्यात्। दर्शयिष्यते च दुहादीनामेकव्यापारार्थकता। यदा पुनरेषां द्विव्यापारार्थकता विवक्षिता तदा ईप्सिततमसूत्रेणैव कर्मसंज्ञायां जातायां द्विकर्मान्वितद्विव्यापारार्थका एव ते णिजन्तादिवदिति बोध्यम्। द्विकर्मान्वितद्विव्यापारार्थकाश्च णिजन्ताः तत्र च धातुना एकव्यापारोऽभिधीयते द्वितीयस्तु णिचा, तद्व्यापारद्वये च ईप्सिततमयोः प्रयोज्यकर्तृरूपकर्मणश्च यथाक्रममन्वयः। यथा त्वञ्च गम्यादीनामिति बोध्यम्। पाच्यादीनां तु नैवं, तद्योगे प्रयोज्यकर्तुः कर्मसंज्ञाभावेन व्यापारद्वये कर्मद्वयान्वयाभावात्। न च पाच्यादेः क्रियाफलाश्रयत्वेनोद्देश्यतया प्रयोज्यकर्तुः कर्मसंज्ञा अभिलषणीयैव गत्यादिधातुयोग एव तन्नियमात्। उक्तञ्च हरिणा "गुणक्रियायां स्वातन्त्र्यं प्रेषणे कर्मतां गतम्। नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते" इति नियमात् गतिबुद्ध्या-द्विसूत्रेण तदितरेषां निषेधात् स्वातन्त्र्यं कर्तृत्वमेव स्वधर्मेण तृतीययाऽभिधीयते इति तदर्थः। वस्तुतस्तु प्रयोज्यकर्तुरीप्सिततमत्वेऽपि परत्वात् कर्तृसंज्ञया तस्य बाधात् कर्मत्वाप्रसक्तौ गत्यादिसूत्रेण अप्राप्तप्रापकत्वरूपविधित्वाश्रयेण गम्यादेः कर्मत्वं विहितं न पाच्यादेरिति द्रष्टव्यम्। उक्तञ्च हरिणा "परत्वादन्तरङ्गत्वादुपजीव्यतयाऽपि च। प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विहितोचितेति"। परत्वात् "विप्रतिषेधे परं कार्यम्" इत्युक्तेः "अपादानसम्प्रदानकरणाधारकर्मणाम्। कर्तुश्चोभयसम्प्राप्तौ परमेव प्रवर्तते" इति चोक्तेः "अन्तरङ्गत्वात् पच्यादिरूपफलस्याकाङ्क्षितकर्तृसंज्ञारूपकार्यस्य "अन्तरङ्गं बलीय" इति न्यायात् पाच्याद्याकाङ्क्षितकर्मसंज्ञायाः प्रत्ययाश्रितत्वेन दुर्बलत्वादिति भावः। उपजीव्यतया उपजीव्यजातीयतया सर्वेषामेव कारकाणां कर्तृप्रयोज्यत्वेन कर्तुरुपजीव्यजातीयत्वादिति फलितोऽर्थः तेन पाच्याद्यपेक्षया तस्योपजीव्यत्वाभावेऽपि न क्षतिः। एवं पाच्यादियोगे प्रयोज्यस्य कर्मसंज्ञाया अप्रसक्तेः न द्विकर्मकत्वं तेषामित्यन्यत्र विस्तरः।

अकर्मका अपि धातवः हेतुचतुष्टयाधीनाकर्मकक्रियार्थत्वात् चतुर्विधाः। अकर्मकक्रियात्वे हेतवश्च चत्वारो हरिणा प्रदर्शिता यथा "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेति"। धातोः स्वबोध्यधातोरर्थान्तरे स्वसजातीयभिन्ने वृत्तेः सामर्थ्यात् स्वविजातीयार्थबोधकत्वादित्येकः। यथा जानातिः ज्ञानं वदन् सकर्मकः प्रवृत्त्यादिकं बोधयन्नकर्मकः नतु गतिवाची गम्यादिः ज्ञानाद्यर्थेऽप्यकर्मकः तयोर्द्वयोरप्यर्थयोः सकर्मकत्वेन स्वसजातीयत्वात्। धात्वर्थेनोपसंग्रहादिति द्वितीयः। कर्मणो धात्वर्थेन उपसंग्रहात् स्वशरीरे प्रवेशनात् यथा जीवत्यादीनां प्राणधारणानुकूलव्यापाररूपक्रियार्थतया तत्कर्मणः प्राणादेर्धात्वर्थ एव प्रवेशः। प्रसिद्धेः सत्ताजन्मादिरूपाणामकर्मकत्वेन प्रसिद्धेः। सत्तादिकञ्चानुपदं प्रदर्श्यते तेषां फलसमानाधिकरणव्यापारबोधकत्वादित्यर्थः। इति तृतीयो हेतुः। कर्मणोऽविवक्षातः अकर्मकः ४। अत्र च कर्मपदं व्यपदेशिवद्भावेन फलस्याप्युपलक्षणं तेन फलस्याविवक्षायामेव गम्यादेरकर्मकत्वमिति कौस्तुभानुसारिणः तेषाञ्च व्यापारमात्रबोधकतया फलानाश्रितत्वाच्च अकर्मकत्वमिति द्रष्टव्यम्। अत्र चाविवक्षा नाम येन

रूपेणान्वयविवक्षया यस्य कर्मसंज्ञा तेन रूपेणान्वयविवक्षाभावः। तत्र क्वचित् कर्मणोऽविवक्षया यथा पच्यते इत्यादौ, क्वचिच्च कर्मत्वाविवक्षया यथा मातुः स्मर्य्यते इत्यादौ। अत्र मातुः कर्मत्वेनैव स्मरणान्वये कर्मसंज्ञा न पुनः सम्बन्धत्वेन, तथा विवक्षायामेव कर्मणि षष्ठीविधानात् स्मरणादेः कर्मान्वयसत्त्वेऽपि कर्मत्वेन तदन्वयाभावादकर्मकत्वं तेन भावे लकारादय इति बोध्यम्। क्वचित्तु कार्य्यप्रवृत्तिवैलक्षण्याकाङ्क्षया यथादिवत्। यथा कृतपूर्वी कटम् भुक्तपूर्वी ओदनमित्यादौ। तथाहि कृतं पूर्वमनेनेति विग्रहे तत्कृतमनेनेति पूर्वादिनिरनुवृत्तौ सपूर्वाच्चेति सूत्रेण विद्यमानपूर्वात् पूर्वशब्दादपि इनिर्विहितः तत्र यदि कृतमिति कर्मणि क्तः स्यात्तदा तस्य कटादिरूपकर्मविशेषणतया सापेक्षत्वेन समासादिर्न स्यात् एकत्र विशेष्यत्वेनोपस्थितस्यान्यत्र विशेषणतयान्वयायोगात् इष्यते च जायते भाष्यादिषु तथाप्रयोगादतोऽवश्यं प्रथमं कर्माविवक्षयाऽकर्मकत्वेन भावे क्तप्रत्यये विहिते तदन्तेन पूर्वादिभिः सुप्सुपेति समासे च कृते तत्पूर्वकात् पूर्वशब्दात् कर्त्तरि इनिप्रत्ययो भवति। पश्चाच्च कर्तृतव-क्रियायाः कर्मविशेषाकाङ्क्षायां कटादिकर्मणोऽन्वयः। उक्तञ्च हरिणा "अकर्मत्वे सत्येव क्तान्तो भावाभिधायिनि। पश्चात् क्रियान्तरैः कर्त्रा योगो भवति कर्मणाम्। अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः। क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिषु स्थितेति"। क्रियावत्त्वेन क्रियाद्वारैव कर्मणोऽन्वय इति द्योतितम् क्रियायाश्च इतिशब्दैकदेशतयाऽनन्वयशङ्कायामाहाविग्रहेति। नास्ति विशेषेण ग्रहोपादानं यस्याः सा पृथगुपस्थित्यभावेन धातुमात्रकोऽर्थः गतादिस्था कर्तृबोधकनिष्ठान्तगतपदोपस्थाप्यगमनकर्तृरूपार्थप्रविष्टापि यथा ग्रामं गत इत्यादौ विशिष्टपदोपात्तैरपि ग्रामादिकर्मभिः क्रिया सम्बध्यते तथेत्यर्थः समुदायशक्तिस्वीकारे एकदेशान्वयाभ्युपगमादवयवशक्तिस्वीकारे तु तदनुपगमे त्वन्वयाभावादिति भावः। कृतपूर्व्यादिष्वित्यादिपदेनाध्वरेशितेत्यादयो गृह्यन्ते तत्रापि इष्टादिभ्यश्चेत्यनेन कर्त्तरि इनिविधानात्। अत्रेदं बोध्यं "निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके" इत्युक्तेः कर्मणोऽपि स्वव्यापारद्वारा क्रियानिष्पत्तिहेतुत्वेन कर्तृत्वे स्थिते तद्व्यापारस्य धात्वर्थत्वविवक्षायां धात्वर्थक्रियाश्रयत्वेन तस्य कर्तृत्वं

समानासु पर्य्यायेषु मुख्यार्थबोधकधातूपात्तफलाश्रयत्वेन च कर्मत्वमित्येकस्यैव कर्मकर्तृता एवञ्च तत्र धातोरर्थान्तरे वृत्तेरेवाकर्मकत्वम्। तथाहि ओदनं पच्यते स्वयमेवेत्यादौ विक्लित्त्यनुकूलो ऽधःसन्तापनादिसंयोगरूपो व्यापारश्च तदाश्रयो वा पच्यर्थः तयोः फलव्यापारयोरैकनिष्ठतया तद्बोधकधातोरकर्मकत्वं तेन ओदनेन पच्यते स्वयमेवेत्यादौ भावे लकारोपपत्तिः। द्विकर्मकाणान्तु एककर्मणः कर्तृत्वविवक्षया ऽपरस्याविवक्षितत्वेऽकर्मकत्वं क्वचिदन्योऽस्तु कर्मान्तरसत्त्वेऽपि कर्मवद्भावविधानात् सकर्मकत्वं तेन तयोर्न भावे लकारादयः किन्तु कर्मण्येव तेन दुह्यते गवा दुग्धं स्वयमेवेत्यादि। एवञ्च सर्वेषामपि धातूनां कर्मणः कर्तृत्वविवक्षायां कर्मवद्भावे प्रसक्ते धातुविशेषयोग एव कर्मवत्कार्य्यातिदेशो न सर्वधातुयोगे तेन गम्यादियोगे कर्त्तरि वाच्ये न कर्मवद्भावः किन्तु कर्तृवत्कार्य्यं, भावे तु इष्यते एव कर्मवत्कार्य्यम्। पच्यादियोगे तु कर्त्तरि भावे च वाच्ये कर्मवद्भाव इति विवेकः। उक्तञ्च "कर्मस्थोऽपि च धात्वर्थः कर्मकर्त्तरि कर्मवत्। कर्तृस्थोऽपि च धात्वर्थे कर्मकर्त्तरि कर्तृवदिति"। कर्मवत् कर्मवत्कार्य्यं स्यादित्यर्थः। अतएव "कर्मवत् कर्मणा तुल्यक्रियः" इति सूत्रे कर्मपदेन कर्मस्थक्रिया लक्षिता सा च कारकैकदेशेन कर्मस्थक्रियातुल्यक्रियावति कर्त्तरि कर्मवत् कार्य्यमित्यर्थः क्रियायोस्तुल्यत्वञ्च एकाधिकरणमात्रवृत्तित्वेन तथाच कर्मस्थक्रियया फलेन व्यापारस्य सामानाधिकरण्ये एव कर्मवद्भावविधानात् पच्यादेस्तथाभूतार्थकतया तत्कर्त्तरि कर्मवत्कार्य्यं, गम्यादेस्तु व्यापारस्योक्तफलसामानाधिकरण्याभावात् कर्तृस्थभावकत्वमिति विवेकः। तथा लभक्रिये कर्त्तरीत्यभिधानेन गम्यादीनामपि भावे कर्मवत्कार्य्यं यागादि भवत्येव। यद्यपि सर्वेषामेवाकर्मकाणां फलव्यापारयोः सामानाधिकरण्यबोधकतया कर्मवद्भावापत्तिस्तथापि सूत्रे कर्मणा तुल्येति निर्देशात् येषां धातूनां मुख्यसम्बन्धिनां सकर्मकत्वं तेषामेव कर्मवद्भाव इति गम्यते अस्यादेः यस्यादिरूपमुख्यार्थे सकर्मकत्वाभावात् न तत्प्रसङ्गः। भवतेस्तु प्राप्त्यर्थकानुभवार्थे वर्त्तमानस्य सकर्मकत्वेऽपि स्वार्थरूपमुख्यार्थे तथात्वाभावान्न प्रसङ्गः। एवञ्च सर्वेषामेव सकर्मकाणां कर्तृकर्मोभयस्थभावकत्वेनाव्यवस्थायां हरिणा क्रियाकृतविशेषेण व्यवस्था दर्शिता यथा "विशेष-

दर्शं यत्र क्रिया तत्र व्यवस्थिता । शब्दप्रवृत्तिरन्येषां शब्दैरेव प्रकल्पितेति" । यत्र कर्म्मणि कर्त्तरि वा विशेषः क्रियाकृतोऽसाधारणधर्म्मो दृश्यते तत्रैव क्रिया व्यवस्थितेत्यर्थः धात्वर्थयोः फलव्यापाररूपयोः क्रिययोरुभयनिष्ठत्वेऽपि तत्तद्विशेषादेव तन्निष्ठत्वव्यवहार इति भावः । विशेषश्च द्विविधः धातूपस्थाप्यः तदनुपस्था-
४ प्यश्च तत्राभ्यर्हितत्वेन उपस्थितत्वेन च धातूपात्तविशेषस्यैव प्रथमं ग्रहणं तदप्राप्तौ तु अपरस्येति विवेकः । तेन पच्यादयः स्वोपस्थाप्यस्य कर्त्रपेक्षयाऽसाधारणधर्म्मस्य व्यापाररूपक्रियाकृतस्य विक्लित्तिरूपफलस्य बोधकाः कर्म्मस्थभावकाएव गम्यादयस्तु नैवं तदुपस्थाप्यफलस्य संयोगादेरुभयनिष्ठतया साधारण्यात् धातूपस्थाप्यविशेषासत्त्वात् धात्वनुपस्थाप्यस्य क्रियाकृतस्य स्पन्दादिरूपासाधारणधर्म्मस्य ग्रहणं तस्य च कर्त्तरि दर्शनात् कर्त्तृस्थत्वम् । एवञ्च कर्त्तृस्थादिविभाग एतन्मते न्यायमूल एव । अन्येषां मते पुनः शब्दप्रवृत्तिः कर्म्मवत्कार्य्यप्रवृत्तिः शब्दैरेव नियामकशास्त्रैरेव प्रकल्पितेति द्रष्टव्यम् । तच्च शास्त्रं यथा "कर्म्मस्थः पचतेर्भावः कर्म्मस्थाश्च भिदादयः । कर्त्तृस्थो भवतेर्भावः कर्त्तृस्थाश्च गमादयः" इति कर्म्मस्थाः कर्म्मस्थक्रियात्मका इत्यर्थः एवमग्रेऽपि । सम्प्रदायविदस्तु एतच्छास्त्रमपि न्यायमूलकं पूर्व्वोक्तरीत्या एतेषां कर्म्मस्थत्वादिव्यवस्थापनात् अन्यथा शास्त्रिकरूपेण तद्ग्रहणस्य कर्त्तुमशक्यतयाऽव्यवस्थापत्तेरित्याहुः । एवञ्च क्रियाकृतविशेषेणैव क्रियाव्यवस्थेति पक्षमवलम्ब्य "निर्वर्त्त्ये च विकार्य्ये च कर्म्मवद्भाव इष्यते । न तु प्राप्ये कर्म्मणि तु सिद्धान्तोऽयं व्यवस्थितः" इत्यभियुक्तैर्व्यवस्था मञ्जूषान्तरेण दर्शिता । तथा च निर्वर्त्त्यविकार्य्ययोरेव क्रियाकृतस्य उत्पत्त्यादिरूपस्य विशेषस्य सत्त्वात्, प्राप्ये तदसत्त्वाच्च तेषु कर्म्मवद्भावाभावौ बोध्यौ । "क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते" इत्यपि प्राप्यकर्म्मलक्षणे प्राप्यस्य क्रियाकृतविशेषाभावकथनात् व्यतिरेकेण निर्वर्त्त्यविकार्य्ययोस्तत्सत्त्वलाभात् अभिप्रायं विभावय । सकर्म्मकधातूनां धात्वर्थव्यापाराश्रयत्वेन कर्त्तृत्वेऽपि तत्त्वरूपीभूतधातोरेव कर्म्मस्थकर्त्तृत्वभावकतया व्यवस्था तत्प्रकृतेरात्मनेपदादिना तदस्यात्मनेपदादिसिद्धिरिति द्रष्टव्यम् । बोधस्तु कर्म्मकर्त्तरि कर्त्तरीव यथा ओदनः पच्यते स्वयमेवेत्यादौ ओदनाभिन्नैकाश्रयकविक्लित्त्यनुकूलस्थाल्यादिसंयोगरूपो व्यापारः ।

अपरे तु कर्त्तुराश्रयांशे विशेषणत्ववत् व्युत्पत्तिवैचित्र्येण फलेऽपि विशेषणत्वमङ्गीचक्रुरङ्गीचक्रुश्च नामार्थधात्वर्थयोरपि साक्षादन्वयम् । वस्तुतस्तु तिङर्थाश्रयस्यैव व्युत्पत्तिवैचित्र्येणोभयत्रान्वय इति द्रष्टव्यम्, अकर्म्मकत्वेन प्रसिद्धाः सत्ताद्यर्थका अभियुक्तैरन्यत्र संगृहीता यथा "सत्ताजीवनदर्पभीतिशयनक्रीडानिवासक्षयाव्यक्तध्वाननभोगतिस्थितिजरालज्जाप्रमादोदये । मोहे खेटनवेगयुद्धदहनख्यातिज्वरोन्मादके शुद्धिस्वेदपलायनभ्रमणके शान्तौ प्रुतौ मज्जने । हर्षे जागरशोषवक्रगमनोत्साहे स्मृतौ संशये म्लानौ मन्दगतौ च स्वप्नपतने चेष्टाक्रुधौ रोदने । हस्तौ छादनतौ च सिद्धिविरतौ दर्पोपवेशे बले कम्पोद्वेगनिमेषभङ्गयतनार्थे धातवोऽकर्म्मकाः । दौर्बल्यादिषु चार्थेषु वर्त्तमानास्तु धातवः । वाचका भावमात्रस्य यतस्तस्मादकर्म्मकाः । कौटिल्यादिषु चार्थेषु प्रोक्ता ये ते तु धातवः । तद्वद्भावेऽकर्म्मकाः स्युस्तद्वत्कर्त्र्यां सकर्म्मकाः । क्रियावाचित्वमाख्यातुं प्रसिद्धोऽर्थः प्रदर्शितः । प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातवः" इति । ३आकाशादिमहाभूतेषु । ४इन्द्रियेषु ५शब्दाद्याकाशादिगुणेषु । ६देहस्थेषु "रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः" इत्युक्तेषु रसादिषु । ७मनःशिलाद्यश्मविकारे । ८कफादौ अमरः । अत्राह सुश्रुतः । "ते धातवोऽपि विवृद्धिगर्हिता देहधारणात् । विसर्गादानविक्षेपैः सोमसूर्य्यानिला यथा । धारयन्ति जगद्देहं कफपित्तानिलास्तथेति" । ९अस्थि । १०स्वर्णादौ तत्राष्टधातवो यथा "हिरण्यं रजतं कांस्यं ताम्रं सीसकमेव च । रङ्गमायसमित्यष्टौ धातवोऽष्टौ प्रकीर्त्तिताः" इति ज्ञानसागरः । "सुवर्णं रजतं ताम्रं लौहं कृष्णञ्च पारदम् । रङ्गञ्च सीसकञ्चैव कुलाष्टौ हैमसम्भवाः" इति वैद्यकम् । सप्त धातवो यथा । "स्वर्णं रूप्यञ्च ताम्रञ्च रङ्गं यशदमेव च । सीसं लौहञ्च सप्तैते धातवो गिरिसम्भवाः" इति भावप्र० । "बलीपलितखालित्यकार्श्याग्निवल्जरामयान् । निवार्य्य देहं दधति नृणां तद्धातवो यथा । "सुवर्णरूप्यताम्राणि हरितालमनःशिला । गैरिकाञ्जनकासीससीसलौहाः सहिङ्गुलाः । गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवाः" । नव धातवो यथा "हेमताराऽऽरनागाश्च ताम्ररङ्गे च तीक्ष्णकम् । कांस्यकं कान्तलौहञ्च धातवो नव कीर्त्तिताः" । माक्षिकं तुत्थकाभ्रे च नीलाञ्जनशिलाऽलकाः । रसकश्चेति

विज्ञेया एते सप्तोपधातवः। शरीरस्थसप्तधातुभवसप्तोपधातवो यथा। "स्तन्यं रजश्च नारीणां काले भवति गच्छति। शुद्धमांसभवस्नेहो यः सा वसा प्रकीर्त्तिता तथा। स्वेदोदन्तास्तथा केशास्तथैवौजश्च सप्तमम्। इति धातुभवाज्ज्ञेया एते सप्तोपधातवः" इति सुखबोधः। ११लोकेषु १२वस्तुनि शब्दार्थचि०।

रसादेर्धातुवाच्यतायां निरुक्तिस्तत्कर्माणि च भावप्र० उक्तानि यथा "एते सप्त स्वयं स्थित्वा देहं दधति यन्नृणाम्। रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः। प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे। गर्भोत्पादश्च कर्माणि धातूनां कथितानि च। रसादीनां धातूनां क्रमेण प्रीणनादिकर्माणीति बोध्यम्। एतेषाञ्च पूर्वपूर्वस्योत्तरोत्तरहेतुत्वं तच्च कायशब्दे १९०८ पृ० दर्शितम्। उपधातवः सङ्ख्याश्च भावप्र० अन्यथोक्ताः यथा

"सप्तोपधातवः स्वर्णमाक्षिकं तारमाक्षिकम्। तुत्थं कांस्यञ्च रीतिश्च सिन्दूरं च शिलाजतु। उपधातुषु सर्वेषु तत्तद्धातुगुणा अपि। सन्ति किन्त्वेषु तेऽल्पेनास्तत्तदंशाल्पभावतः"। तत्र स्वर्णादिधातौ "दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः" मनुः। उपधातवश्च गौणधातवस्तेन तत्रापि धातुशब्दप्रवृत्तिः। अतएव उपधात्वभिप्रायेण गैरिकादीनां धातुशब्दवाच्यता दृश्यते यथा "न्यस्ताक्षरा धातुरसेन यत्र" "अकालसन्ध्यामिव धातुमत्ताम्" कुमा०। "वप्रक्रियाचिरतत्कूटान् उद्गतैर्धातुरेणुभिः" रघुः। "त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायाम्" मेघ०। "शृङ्गाणामिव कूटानि धातुरक्तानि शेरते" भा० आ० १९ अ०। १३देहादिधारके आत्मनि "स्त्रीपुंसयोस्तु संयोगे विशुद्धे शुक्रशोणिते। पञ्च धातून् स्वयं षष्ठ आदत्ते युगपत् प्रभुः" याज्ञ०। "पञ्च धातून् पृथिव्यादिपञ्चभूतानि शरीरारम्भकतया षष्ठश्चिद्धातुरात्मा प्रभुः शरीरारम्भकादृष्टकर्मयोगितया समर्थः युगपदादत्ते भोगायतनत्वेन स्वीकरोति" मिता०। आकाशादौ "तदव्ययमनुद्रिक्तं सर्वव्यापि ध्रुवं स्थिरम्, नवद्वारं पुरं विद्यात् त्रिगुणं पञ्चधातुकम्" भा० आश्व० १६ अ०। "भूतेषु धातवः पञ्च ब्रह्मा तानसृजत् पुरा। आवृता यैरिमे लोकाः महाभूताभिसंज्ञिताः" भा० शा० १८४ अ०। "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् पुरीषम्" छा०उप०। शब्दयोनौ "धातोः स्थाने इवादेशं सुग्रीवं संन्यवेशयत्"। "अवेक्ष्य धातोर्गमनार्थमर्थवित्" रघुः। रसादौ "शरीरधातवो ह्यस्य मांसं रुधिरमेव च। नेशुर्मज्जास्थिनिर्दग्धाः न च भस्माप्यदृश्यत" भा० व० २८९ अ०। परमेश्वरे "अनादिनिधनो धाता विधाता धातुरुत्तमः" विष्णुस०। धातुर्विरिञ्चेस्तत्कृतः इति वा नामद्वयं कार्य्यकरणात् प्रपञ्चधारणात् वा चिद्धातुः" भा०। "वायुं पूर्वमथो सृष्ट्वा यो धातुर्धातुसत्तमः। धारणाद्धातुशब्दञ्च लभते लोकसंज्ञितम्" हरिवं० २० अ०। कैशाद्युपधातौ "काकपदमक्षिका कैशधातुयुक्तानि शर्कराविड्म्" सु० सं० ८० अ०। १४धारके। "अत्यं हविः सचते सच्च धातु चारिष्टगातुः" ऋ० ५।४४।२। "धातु सर्वधारकम्" भा०। १५प्रकारे "त्रिधातवः परमा अस्य गावः" ऋ० ५।५०।४ "त्रिधातुः प्रथयद्भिभूम" "त्रिधातुः त्रिप्रकारः" भा०

**धातुकासीस** न० धातुरूपं कासीसम्। कासीसे उपधातुभेदे हेमच०। [१देशभेदे च। २कूर्म्मविभागशब्दे दृश्यम्।

**धातुकुशल** त्रि० धातुषु कुशलः। १धातुक्रियायां कुशले।

**धातुक्षय** पु० धातूनां क्षयो यत्र। कासरोगभेदे।

**धातुघ्न** त्रि० धातुं स्वर्णादि हन्ति हन—टक्। १धातुनाशने शौले २काञ्जिके न० हेमच०। तस्य पारदादिधातुमारकत्वात् तथात्वम्।

**धातुद्रावक** पु० धातुं द्रावयति द्रु—णिच्—ण्वुल्। धातुद्रुतिकारके (सोहागा) ख्याते पदार्थे पारस्करनि०।

**धातुनाशन** त्रि० धातुं नाशयति नश—णिच्—ल्यु। स्वर्णादिधातुमारके २काञ्जिके न० त्रिका०।

**धातुप** पु० धातुं पाति रक्षति पा—क। रसरूपे प्रथमधातौ शब्दच०। "आहारस्य धमनीर्गत्वा धातून् सर्वानयं रसः। पुष्णाति, तदनु स्थैर्य्यं प्राप्नोति च तनुं गुणैः" भावप्र० तस्य सर्वधातुपोषकत्वोक्तेस्तथात्वम्। "रसस्तु हृदयं याति समानमरुतेरितः। स तु व्यानेन विक्षिप्तः सर्वान् धातून् वितर्पयेत्। कैदारेषु यथा कुल्याः पुष्णन्ति विविधौषधीः। तथा कलेवरे धातून् सर्वान् वर्द्धयते रसः" भावप्र०।

**धातुपाठ** पु० धातूनां पाठो यत्र धातवः पठ्यन्तेऽत्र आधारे घञ् वा। पाणिन्यादिप्रणीते धातूनामर्थबोधकग्रन्थभेदे। "धातुपाठः स्वदाद्यक्रमादक्कादिक्रमः "धातवः पठिताः पाठक्रमेणैकाक्षरान्विताः" इति च कविकल्पद्रुमः। एवं पाणिनीयः भूसत्तायामित्यादिधातुपाठो ज्ञेयः।

**धातुपारायण** पु॰ धातूनां पारायणं यत्र । धातुप्रतिपादकग्रन्थभेदे ।

**धातुपुष्पी** स्त्री धातुरिव पुष्पं यस्याः जातित्वात् ङीष् । (धाइफुल) ख्याते धातुपुष्प्यां भावप्र॰ । स्वार्थे कन् वा कप् ध्यत इत्त्वम् । धातुपुष्पिकाऽप्यत्र शब्दरत्ना॰ । धातकीशब्दे बहुधा दृश्याः । [ इत॰ । पर्वते त्रिका॰ ।

**धातुभृत्** पु॰ धातुं गैरिकादिकमुपधातुं बिभर्त्ति भृ–क्विप् तुक्

**धातुमल** पु॰ ६त॰ । धातूनां रसादीनां पाकतो जायमाने केशादौ कफपित्तमलाः केशः प्रस्वेदो नखरोम च । नेत्रविट् चक्षुषः स्नेहो धातूनां क्रमशोमलाः" सुश्रुतः । शुक्रस्य तु मलोनास्ति यथाह भावप्र॰ । "स्वाग्निभिः पच्यमानेषु मलः षट्सु रसादिषु । षट्सु धातुषु जायन्ते मलानि मुनयो जगुः । यथा सहस्रधा ध्मातं न मलं किल काञ्चने । तथा रसे सुपक्वे पक्वे न मलं शुक्रताङ्गते" । "आहार्य्यस्य रसः सारः सारहीनो मलद्रवः । शिराभिस्तज्जलं नीतं वस्तौ मूत्रत्वमाप्नुयात्" भावप्र॰ । अन्नकरशब्दे ५५८ पृ॰ तत्पाकप्रकारो दृश्यः ।

**धातुमाक्षिक** न॰ धातुरूपधातुरूपं माक्षिकम् । माक्षिके उपधातुभेदे राजनि॰ ।

**धातुमारिणी** धातुं मारयति मृ–णिच्–णिनि ६त॰ ङीप् । (सोहागा) सर्जिकायां शब्दच॰ ।

**धातुराजक** न॰ धातुषु राजते राज–ण्वुल् धातूनां राजा टच्समा॰ स्वार्थे क वा । शुक्रे तस्य च सर्वधातूनां चरमत्वात् तथात्वम् ।

**धातुवल्लभ** न॰ ६त॰ । टङ्कणे राजवल्लभः ।

**धातुवादिन्** धातुं वदति उपायान्तरेण कर्त्तुम् । कारन्धमे कौशलभेदात् रसायनादिना स्वर्णरौप्यादिकरे हारा॰

**धातुवैरिन्** पु॰ ६त॰ । गन्धके शब्दच॰ ।

**धातुशेखर** न॰ धातूनामुपधातूनां शेखरमिव । कासीसे उपधातुभेदे हेमच॰ । [(खड़ि) हारा॰

**धातूपल** पु॰ धातुरूपधातुरूप उपलः । कठिनिकायां

**धातृ** त्रि॰ धा–तृच । १धारके २पोषके ३ब्रह्मणि पु॰ अमरः "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" सन्ध्यामन्त्रः ४विष्णौ । "अनादिनिधनो धाता" विष्णुस॰ । धातृशब्दे उदा॰ दृश्यम् । ५आत्मनि ६वायुभेदेऽनिलशब्दे १६६पृ॰ दृश्यम् । ७आदित्यभेदे आदित्यशब्दे ६९५ पृ॰ दृश्यम् । तत्रादित्यभेदे "कौशल्या सुषुवे रामं धातारमदितिर्यथा" रामा॰ बाल॰ ९२ अ॰ । ८ब्रह्मणः पुत्रभेदे "द्वौ पुत्रौ ब्रह्मणस्त्वन्यौ ययोस्तिष्ठति लक्षणम् । लोके धाता विधाता च यौ स्थितौ मनुना सह" भा॰ आ॰ ६६अ॰ । ९भृगुसुतभेदे "भृगुः ख्यात्यां महाभागः पत्न्यां पुत्रानजीजनत् । धातारञ्च विधातारं श्रियञ्च भगवत्पराम्" भाग॰४।१।२५ १०प्रजासर्गकारकेषु सप्तर्षिषु "सर्गश्चैषप्रणयनाद्विश्वयोनेरनन्तरम् । पुरातनाः पुराविद्भिः धातार इति कीर्त्तिताः" कुमा॰ ।

**धातृपुत्र** पु॰ ६त॰ । ब्रह्मणः पुत्रे सनत्कुमारे शब्दर॰ ।

**धातृपुष्पी** स्त्री धातृ पुष्टिकर्तृ पुष्पमस्याः ङीप् । (धाइफुल) धातक्याम् अमरः । वा कप् ध्यत इत्त्वम् । धातृपुष्पिका तत्रार्थे अमरः ।

**धात्र** न॰ धीयतेऽन्नादिकमत्र धा–आधारे ष्ट्रन् । १भाजने उणादिवृत्तिः । धाता ब्रह्मा आदित्यो वा देवताऽस्य अण् २आदित्यदेवताके ३ब्रह्मदेवताके च द्वादशकपालसंस्कृते पुरोडाशादौ त्रि॰ । "स यः स धातासौ स आदित्यः । अथ यत्तद्दिशां परमं क्रान्तमेतस्यामेवैतत् प्रतिष्ठित तपति । स यः स धातायमेव स धात्रः द्वादशकपालः पुरोडाशो द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिर्धाता" शतब्रा॰९।५।१।३८ । "अनुमतिराकामिनीवालीकुहूव्यसरवो धात्रो द्वादशकपालः सर्वहुतः" कात्या॰ श्रौ॰ १८।६।११ ।

**धात्री** स्त्री धीयते पीयते धेट–कर्मणि ष्ट्रन् धीयन्ते पुरुषार्थी अनया वा धा–करणे ष्ट्रन् विश्वं वा दधाति ष्ट्रन् षित्त्वात् ङीष् तृच् ङीप् वा । १उपमातरि (धाइमा) । भावप्र॰ धात्रीलक्षणादि "पीताय (पानाय) यदि बालस्य विदध्यादुपमातरम् । सुविचार्य्य गुणान् दोषान् कुर्य्याद्धात्रीं तदेदृशीम् । सवर्णां मध्यवयसां सच्छीलां सुदतां सदा । शुद्धदुग्धाम्बुकक्षीरां सवत्सामतिवत्सलाम् । स्वाधीनामल्पसन्तुष्टां कुलीनां सज्जनात्मजाम् । कैतवेनापरित्यक्तां निजपुत्रदृशं शिशौ । अथ निषिद्धां धात्रीमाह । शोकाकुला क्षुधार्त्ता च श्रान्ता व्याधिमती सदा । अत्युच्चानितरां नीचा स्थूलातीव भृशं कृशा । गर्भिणी ज्वरिणी चापि लम्बोन्नतपयोधरा । अजीर्णभोजिनी चापि तथा पथ्यविवर्जिता । आसक्ता क्षुद्रकार्य्ये तु दुःखार्त्ता चञ्चलापि च । एतासां स्तन्यपानेन शिशुर्भवति सामयः । अथ बालस्य स्तन्यपानविधिः । तत्र माता प्रशस्ताङ्गी चाहतस्ना पुरोमुखी । उपविश्य प्रा-

क्षते सम्यग्दक्षिणं स्तनमम्बुना । प्रक्षाल्येषत् परिस्राव्य मन्त्राभ्यामभिमन्त्रितम् । उदङ्मुखं शिशुं क्रोड़े शनैः सन्धार्य्य पाययेत् । मातृत्युपलक्षणं धात्री च ईषत्-परिस्राव्य । अन्यथा वैगुण्यमाह सुश्रुतः । अस्राविनं स्तनं बालः पिबन् स्तन्येन भूयसा । पूर्णस्रोता वमीकास श्वासैर्भवति पीड़ितः । अभिमन्त्रणमाह । क्षीरनीर-निधिश्चोऽस्तु स्तनयोः क्षीरपूरकः । सदैव सुभगो बालो भवत्वेष महाबलः । पयोऽमृतसमं पीत्वा कुमारस्ते शुभानने । दीर्घमायुरवाप्नोतु देवाः प्राश्यामृतं यथा । मन्त्रौ च पितृस्थानेन ब्राह्मणेन पठनीयौ । यावत् मन्त्रपाठस्तावत्काल धात्र्या वा दक्षिणहस्तेन स्पर्शः कार्य्यः" "उवाच धात्र्या प्रथमोदितं वचः" रघुः । "धात्र्यङ्गुलीभिः प्रतिसार्य्यमाणः" कुमा० । २क्षितौ च तस्या विश्वधारणात् । "मेखलेव स्थिता धात्र्या देवासुर-विभागकृत्" कू० वि० । ३धारणकर्त्र्यां स्त्रियां । ४आमलक्यां च मेदि० । तस्याः धारणादेः पुरुषार्थसाधनत्वात् तथात्वम् । आमलकीशब्दे ७६४९० तद्गुणा उक्ताः । तस्या उत्पत्तिमाहात्म्यञ्च पाद्मोत्तरख० १२७ अ० उक्तं यथा "अथ विप्रेभ्यो बीजेभ्यो वनस्पत्यः स्त्रियोऽभवन् । धात्री च मालती चैव तुलसी च तपोधन ! । स्वधाभवा स्मृता धात्री माभवा मालती तथा । गौरीभवा च तुलसी तमःसत्त्वरजोगुणा"

स्थानान्तरे तत्रैवतन्माहात्म्यं यथा

"शृणुष्व धात्रीमाहात्म्यं सर्व्वपापहरं शुभम् । यत् पुरा हरिणा प्रोक्तं वशिष्ठं प्रति नारद ! । धात्री वत्स ! नृणां धात्री मातृवत् कुरुते कृपाम् । ददातायुः पयःपानात् स्नानाद्धै धर्म्मसञ्चयम् । अलक्ष्मीनाशनं सद्योऽप्यन्ते निर्वाणमेव च । विघ्नानि नैव जायन्ते धात्रीस्नानेन वै नृणाम् । तस्मात् त्वं कुरु विप्रेन्द्र ! धात्रीस्नानं हि यत्नतः । प्रयास्यसि हरेर्धाम देवस्य प्राप्य नारद ! । यत्र यत्र मुनिश्रेष्ठ ! धात्रीस्नानं समाचरेत् । तीर्थे वापि गृहे वापि तत्र तत्र श्रियः स्थिताः । धात्रीस्नातानि तिष्ठन्ति यस्यास्थीनि कलेवरे । प्रक्षाजितानि विप्रेन्द्र ! न स स्याद्गर्भसम्भवः । धात्रीफलेन विप्रेन्द्र ! येषां केशाश्च रञ्जिताः । ते नराः केशवं यान्ति नाशयित्वा कलेर्मलम् । धात्रीफलं महापुण्यं स्नाने पुण्यतरं स्मृतम् । पुण्यात् पुण्यतरं वत्स ! भक्षणे मुनिपुङ्गव ! । न गङ्गा न गया पुण्या न काशी न च पुष्करम् । एकैव च यथा पुण्या धात्री माधववासरे । कार्त्तिके मासि विप्रेन्द्र ! धात्रीस्नानं समाचरेत् । यश्च तज्जलमश्नीयात् सोऽश्वमेधमवाप्नुयात् । धात्रीफलं स्मरेद्यस्तु सदैव मुनिसत्तम ! । प्राग्जन्मनि कृतात् पापात् मुच्यते नात्र संशयः । संस्मरेद्यस्तु धात्रीं तामहन्यहनि मानवः । मुच्यते पातकैः सर्व्वैर्मनोवाक्कायसम्भवैः । धात्रीफलान्यमावास्यामष्टमीनवमीषु च । रविवारे च संक्रान्तौ संत्यजेत् मुनिपुङ्गव ! । यस्य गेहे मुनिश्रेष्ठ ! धात्री तिष्ठति सर्व्वदा । तस्य गेहं न गच्छन्ति प्रेतकुष्माण्डराक्षसाः । धात्रीस्नाने हरेर्नाम्ना जागरे हरिवासरे । जन्मवन्तो विनश्यन्ति हयमेधायुतं फलम् । स्नायादामलकैर्यस्तु कार्त्तिके हरिवल्लभ ! । परितोषं समायाति तस्य वै माधवः स्वयम् । धात्रीच्छायां समासाद्य कुर्य्यात् श्राद्धन्तु यो मुने ! । मुक्तिं प्रयान्ति पितरः प्रसादात्तस्य वै हरेः । मूर्ध्नि पाणौ मुखे कण्ठे देहे च मुनिसत्तम ! । धत्ते धात्रीफलं यस्तु स महात्मा स पुण्यभाक् । धात्रीफलविलिप्ताङ्गो धात्रीफलविभूषितः । धात्रीफलकृताहारो नरो नारायणो भवेत् । यः कश्चिद्वैष्णवो लोके धत्ते धात्रीफलं मुने ! । प्रियो भवति विष्णोः स मनुष्याणाञ्च का कथा । धात्रीफलानि यो नित्यं वहते करसंपुटे । तस्य नारायणो देवो वरमेकं प्रयच्छति । धात्रीफलं न भोक्तव्यं कदाचित् करसंपुटात् । य इच्छेद्विपुलान् भोगानन्ते यो मुक्तिमिच्छति । धात्रीफलकृतां मालां कण्ठस्थां यो वहेच्च हि । स वैष्णवो न विज्ञेयो विष्णुभक्तिपरोऽपि च । न त्याज्या तुलसीमाला धात्रीमाला विशेषतः । तथा रुद्राक्षमालापि धर्म्मकामार्थमिच्छता । यावत्तिष्ठति कण्ठस्था धात्रीमाला नरस्य हि । तावन्मनसि हृत्स्थोऽपि सदा लुठति केशवः । यावद्दिनानि वहते धात्रीमालां करे नरः । तावद्युगसहस्राणि वैकुण्ठे वसतिर्भवेत् । सर्व्वदेवमयी धात्री वासुदेवमनःप्रिया । आरोपणीया सेव्या च सेचनीया सदा बुधैः । एतत्ते सर्व्वमाख्यातं धात्र्या माहात्म्यमुत्तमम् । श्रोतव्यञ्च सदा सद्भिश्चतुर्व्वर्गफलप्रदम्" अधिकमामलकीशब्दे द्रष्टव्यम् । ५जनन्यां विश्वः । "पुनर्धात्रीं पुनर्गर्भमोजस्तस्य प्रधावति" याज्ञ० । [ ६तत्० । आमलक्याः फले ।

**धात्रीपत्र** न० धात्र्या इव पत्रमस्य । तालीशपत्रे राजनि० ।

**धात्रीपुत्र** पु० ६तत्० । उपमातुः सुते हेमच० ।

